नटी— अज्ज अच्चाहिदं खु एदं, आआसं पसवइ पुप्फं, सिअदाओ तेल्लं उप्पादअंति, जइ दक्खिणाओ दिसाओ आअदं णाडअणिबन्धणम् ।

आर्य अत्याहितं खल्वेतत्, आकाशं प्रसूते पुष्पं, सिकताः तैलमुत्पादयन्ति, यदि दक्षिणस्या दिशः आगतं नाटकनिबन्धनम् ।

सूत्रधारः— आर्ये मा मैवम् । उपचिनु गुण, अपहस्तय जन्माभिनिवेशम् । पश्य

---

वीरशृङ्गारान्यतराङ्गिरसं शुद्धैकानेकानुबन्धिधर्मार्थकामफलं यद्रूपकं तन्नाटकमित्युच्यते । आश्चर्यचूडामणिर्नाम नाटकं अस्तीति शेषः । तदभिनयाम्रेडितसौभाग्यमभिलषाम इति तच्छब्दोऽध्याहार्यः । अभिनयैर्वाचिकाङ्गिकाहार्यसात्त्विकैराम्रेडितं सौभाग्यं यस्येति विग्रहः । आम्रेडितशब्देनार्थपर्यालोचनास्वादः पूर्वमेव संवृत्त इति दर्शितम् । इदानीं प्रयोगदर्शनमभिलषाम इत्युक्तम् । महतां नियोज्यं प्रति निजाभिलाषनिवेदनं अभिलषितनियोगपरमेव भवतीति शासनमित्युक्तम् । एवमुक्तस्य नाटकविशेषस्य प्रविरलविद्वज्जनदक्षिणापथापादानत्वेनाविश्वसनीयत्वात् अप्रयोज्यत्वं मन्यमाना सापहासमाह । आहितं स्थितं तदतिक्रम्य वर्तत इत्यत्याहितं असम्बद्धमित्यर्थः । आकाशं पुष्पं प्रसूते सिकतास्तैलमुत्पादयन्ति तर्हीति सिध्यति ॥ यदि दक्षिणस्या दिश आगतं नाटकनिबन्धनमिति ॥ निबन्धनमेव तावत्तत आगतं न दृष्टपूर्वं किं पुनर्विशिष्टं नाटकाख्यं निबन्धनमिति दर्शयितुं निबन्धनमित्युक्तम् । यदि तत आगतं नाटकनिबन्धनं तर्हीदं वृत्तान्तरं आकाशादिभ्यः पुष्पादिजननमेव तत्तुल्यमित्यर्थः । निदर्शनालङ्कारः । यथोक्तं— "निदर्शना । अभवद्वस्तुसम्बन्ध उपमापरिकल्पकः ।" अत्रासंभवन्नेव आकाशादिपुष्पाद्योर्जन्यजनकभाव उक्तः सन्नुपमायां पर्यवस्यति । अथ तस्य दोषाभासादिनिवेशं निरस्यन्नाह ॥ आर्ये इति ॥ आर्ये मा मैवं वोच इति शेषः । अत्रोपाचिन्वित्यनेन गुणादानस्य पुष्पापचयसाम्यं द्योतितम् । जन्मभूमिमुद्दिश्य योऽभिनिवेशः दोषग्रहणनिर्बन्धः तमपहस्तय परित्यजेत्यर्थः । उभयत्रापि सदृष्टान्तं हेतुमाह— पश्येत्यादिना ॥ गुणा एवोपादाने प्रमाणं कारणं हाने च दोषा एव कारणमित्यर्थात् सिध्यति । उभयत्रापि न दिग्विभागः कारणम् ॥ इदमेवेति ॥

गुणाः प्रमाणं न दिशां विभागः
निदर्शनं नन्विदमेव तत्र ।
स्तनद्वये ते हरिचन्दनं च
हारश्च नीहारमरीचिगौरः ॥ ३ ॥

नटी— ( आत्मानं विलोक्य ) जुज्जइ, रअणाअरो खु सो देसो । अज्ज कदमो उण सो कवी जो अत्तणो पञ्जारूवं णिबन्धणव्वाजेण देसंतरं पेसिदुकामो ।

युज्यते, रत्नाकरः खलु स देशः । आर्य, कतमः पुनः स कविः य आत्मनः प्रज्ञारूपं निबन्धनव्याजेन देशान्तरं प्रेषितुकामः ।

---

न ह्यस्मत्सन्निहितात् सम्प्रातपन्नाच्च साधीयोऽन्यन्निदर्शनान्तरमस्ति । अथात्मगतहारहरिचन्दनावलोकनपूर्वकं सबहुमानं तदुक्तिमेव संवदति ॥ युज्यते रत्नाकरः खलु स देश इति ॥ अथैवंभूतं नाटककरणसमर्थं कविं बहुमन्यमाना तन्नामधेयादिकं परिपृच्छति ॥ आर्येत्यादिना ॥ य आत्मनः प्रज्ञास्वरूपं निबन्धनव्याजेन प्रेषितुकामः निबन्धननिर्माणारम्भसमये संवृत्त इति वाक्यपरिसमाप्तिः । कवयो हि स्वबुद्धिव्यापारवैचित्र्यं देशान्तरे कालान्तरे च प्रकाशयितुं काव्यमारभन्ते । यथोक्तं— " दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥" इति । आधारेण पुरुषेण विना आधेयस्य प्रज्ञास्वरूपस्य देशान्तरप्राप्तेः प्रतीयमानत्वादाद्यो विशेषोऽत्रालङ्कारः । यथोक्तं— "विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः । एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरः ॥ अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः । तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥" इति । अत्र कार्यभूतवास्तवनिबन्धननिषेधपूर्वकं तत्कारणभूतप्रज्ञारूपसमारोपस्तस्मिन्नादर्शगतप्रतिबिम्बवत् स्फुटतरमवगम्यमानत्वादिति ज्ञेयम् । नापह्नुतिरलङ्कारोऽत्र संभवति उपमानोपमेयभावाभावात् । एवं हि "प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।" इत्यस्य व्याख्यान उक्तम् । उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत्स्थाप्यते सापह्नुतिरित्यलं विस्तरेण । एवंभूतः कविः पुनः स कतमः तच्छब्देन कवेरवश्याभ्युपगन्तव्यत्वं दर्शयति । अथ सबहुमानमुत्तरं ददाति । आर्ये उचितवादिनि विवक्षितवचनावकाशदानात् समुचित एवायं प्रश्नः श्रूयताम् । श्राव्य एवायं धन्यो महाकविः ॥ शा-

सूत्रधारः— आर्ये श्रूयताम् । उन्मादवासवदत्ताप्रभृतीनां काव्यानां कर्तुः कवेः शक्तिभद्रस्येदं प्रज्ञाविलसितम् । अतस्त्वमपि पात्रावधानं कुरुष्व । अहमप्यार्यमिश्रान् विज्ञापयामि । अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि ।

( नेपथ्ये ज्याघोषः क्रियते )

सूत्रधारः— भवतु विज्ञातम् ।

सपत्नीकस्य रामस्य वर्तयन् वन्यमास्पदम् ।

---

क्तिभद्रस्येति ॥ शक्त्या कवित्वनिदानभूतेन संस्कारेण भद्र इत्यर्थानुगतमेव नाम ॥ प्रज्ञाविलसितमिति ॥ पूर्ववत् तत्कार्यत्वेन निबन्धनस्य तत्त्वारोपः ॥ उन्मादवासवदत्ताप्रभृतीनां काव्यानां कर्तुरिति ॥ पूर्वमेव बहुप्रबन्धकर्तृत्वेन प्रसिद्धः । न केवलमिदानीमेतन्निबन्धननिबन्धृत्वेनैव । अनेनाभ्यासात्पूर्वप्रबन्धेभ्योऽस्य विशेषो दर्शितः । यतोऽहमेवंभूतमहाकविकृतनाटकप्रयोगगोचरां धुरमुद्वहामि अतस्त्वमप्यात्मोचितं पात्रं प्रत्यवधानं तदेकपरत्वं कुरुष्व । एवमित्यनेन प्रयोगसामग्रीप्रकारलाभ उक्तः । एवं प्ररोचनां कृत्वा प्रयोगातिशयेनाङ्काद्यपात्रप्रवेशं सूचयितुमुपक्रमते— अये इति ॥ किं नु खल्वित्यादिना ॥ "एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥" अये इत्यचिन्तितोपनतपदार्थोपलम्भसंभवमावेगं सूचयति । विज्ञापनार्थं व्यग्रे प्रयोगकालातिपातभयात् संभ्रमेण प्रवर्तमाने सति शब्द इव श्रूयते । इवशब्दो विशेषानवधारणद्योतनार्थः । किं नु खल्विति शब्दविशेषं तद्धेतुं च निरूपयति — अङ्ग पश्यामीति ॥ अवहितो भूत्वा विचार्य निश्चिनोमीत्यर्थः ॥ अथ नेपथ्ये क्रियमाणज्याघोषं श्रुत्वा निश्चित्याह— भवतु विज्ञातमिति ॥ भवतुशब्दः मानसनिश्चये । "भवत्वान्तरनिर्णये" इति । सौमित्रिर्ज्याघोषेण पक्वान् परिणतान् । जायतेऽस्ति वर्धते विपरिणमते अपक्षीयते म्रियत इत्यासां षण्णामवस्थानां मध्ये तुरीयां विपरिणामावस्थां प्राप्तान् निरूढयौवनत्वेनातिदृप्तानित्यर्थः । सत्त्वान् सिंहव्याघ्रादीन् अपोहति निरस्यति किमर्थमित्यत्राह— सपत्नीकस्येति ॥ सपत्नीकस्य रामस्य वन्यमास्पदं निवासयोग्यां पर्णशालाम् ॥ वर्तयन्निति ॥ हेतौ शता । पर्णशालानिर्माणार्थं दुष्टसत्त्वनिरासं करोतीत्यर्थः । अनेन केवलमङ्काद्यपात्रप्रवेश एव न

ज्याघोषेणैव सौमित्रिः पंकान् सत्त्वान् व्यपोहति ॥ ४ ॥

( निष्क्रान्तौ )

॥ स्थापना ॥

---

सूचितः सपत्नीकस्य रामस्य प्रवेशोऽपि सूचितः । अत्रामुखस्य कथोद्धातप्रवर्तकप्रयोगातिशयसंज्ञकानि त्रीणि असाधारणान्यङ्गानि उद्धात्यकावलगितादीनि त्रयोदशवीथ्यङ्गानि साधारणानीति षोडशाङ्गमामुखम् । सर्वेषामङ्गानामेकत्र न नियमः । "तेषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत् ॥" इत्युक्तत्वात् । अत्र प्रयोगातिशयेनैव पात्रप्रवेशः सूचितः । यथा शाकुन्तले— "एष राजेव दुष्यन्तस्सारङ्गेणातिरंहसा ।" इति । एवं प्रारब्धत्वात् प्रयोगस्य तदारम्भविज्ञापनं निरर्थकं मन्यमानः तदुक्त्वैवानन्तरोचितपात्रभूमिकापरिग्रहार्थं नटीसहितः सूत्रधारः नेपथ्यशालामुद्दिश्य निष्क्रान्तः । स्थापनेत्यामुखपर्यायः ।

॥ इत्यामुखम् ॥

---

पाठान्तरम् । १. ज्यानिर्घोषेण. २. पङ्कसत्त्वान्.

( ततः प्रविशति धनुर्बाणपाणिर्लक्ष्मणः )

लक्ष्मणः—

ज्याघोषेण निराकरोमि भयदान् पर्यन्तभाजो मृगान्
पर्णैस्सद्म समापयामि शयनं बध्नामि पुष्पच्छदैः ।

---

अथात्रादौ "आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः । अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम् ॥ यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा । यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ आदावेव तदाङ्कस्स्यादामुखाक्षेपसंश्रयः ।" इति विष्कम्भस्य पाक्षिकत्वाभिधानादामुखान्ते न नियम इत्यामुखाक्षिप्तस्याङ्कस्यैव प्रस्तावः कृतः । अङ्कश्चैवं लक्षितः । यथा— "प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥" इति । अत्र धीरोदात्तस्य रामस्य सर्वकार्येषु साहाय्यं प्रतिपद्यमानो लक्ष्मणोऽपि धीरोदात्त एव न धीरोद्धतः । तल्लक्षणानां दर्पमात्सर्यादीनामननुगतेः महासत्त्वतादीनामनुगतेश्च । धीरोदात्तगुणांश्च तत्र तत्र योजयिष्यामः । अथ लक्ष्मणो यौवनोदयेऽपि भ्रातृगोचरभक्त्यतिशयेन महासत्त्वतया च कामानुभवमुत्सृज्य निरुद्धाभिषेकस्य वनं गतस्य रामस्य पदवीं छायेवानुगम्य तत्तदृषीणामाश्रमेषु निवसतस्तस्य दशवर्षाण्यप्रत्यूहं परिचर्यां विधाय राक्षसपीडितमुनिजनप्रार्थनया निखिलराक्षसवधं प्रतिज्ञाय तद्वैरसङ्घटनार्थं गोदावरीतीरं प्राप्तस्य भ्रातुः पर्णशालानिर्माणार्थं नियोगमवलम्ब्य सिंहव्याघ्रादिदुष्टसत्त्वसमाकीर्णं तं देशमवलोक्य बद्धसन्नाहस्तन्निराकरणोपायं पर्णशालानिर्माणप्रकारं च मनसा निर्धारयति— ज्याघोषेणेत्यादि ॥ ज्याघोषेण मृगान् सिंहव्याघ्रादीन्निराकरोमि दूरीकरोमि । यथा पुनः प्रत्यागमनवाञ्छा न भवेत् तथा कठिनेन ज्याशब्देन दूरं नयामीत्यर्थः । अनङ्गीकृतराज्यपरिपालनत्वात् नियमित्वाच्च निग्रहस्यानौचित्याच्च निराकरोमीत्युक्तम् । कुतः पुनस्तान्निराकरणमत आह— भयदानिति ॥ आत्मनि तेषां भयजनकत्वाभावेऽपि सामान्येन भयदानित्युक्तम् । यत आर्याया आर्यदर्शनार्थमागतानां चात्र स्थितास्सन्तो भयं दास्यन्ति अतः पूर्वमेव निराकरोमीत्यर्थः । ननु भयदा अपि ते यत्र न सन्निदधते तत्र पर्णशाला क्रियतामत आह— पर्यन्तभाज इति ॥ आत्माश्रयदेशापेक्षया पर्यन्तशब्दः पर्यन्तानात्मदेशव्यतिरिक्तान् सर्वदिग्पार्श्विकान् देशविशेषान् भजन्तीति पर्यन्तभाजः । गोदावरीतीरप्रदेशान्सर्वानेव सन्निहितजलत्वेन प्रच्छायशीतलत्वेन च निवासगृहीकृत्य पुत्रकलत्रादिभिस्सह स्वैरमासीनान् न तु यदृच्छयागतानित्यर्थः । अनेन निराकरणस्यावश्यकर्तव्यत्वं दर्शितम् । अत्र विशेषणद्वयस्य

वेत्राणामुपपादयामि वलयैरायामिनां विष्टरं
सिञ्चामि क्षितिमार्द्रपङ्कजरजोविद्धैरपां रेणुभिः ॥ ५ ॥

( तथा कृत्वा ) कथञ्चिदेवमनुष्ठितमार्यशासनम् । अहो नु खलु विपन्नानामवस्था मेधाविनी यावदिमां पर्णशालां प-

---

समुच्चित्यैव निराकरणहेतुत्वं न प्रत्येकम् । अतो दूरस्थानां भयदानां सन्निहितानामभयदानां च निराकरणे न तात्पर्यम् । पर्णशालायाः पर्णभूयिष्ठत्वात् तन्निर्माणे तेषां प्रधानकारणत्वात् पर्णैरित्युक्तम् । एतच्च साधनान्तराणामुपलक्षणम् । समापयामीति समापननिर्धारणं करणप्रकारनिर्धारणमप्याक्षिपति अकृतस्य समापनायोगात् । वेत्राणां वलयैः वलयीकृतैर्वेत्रैरिति वलयीकरणनिर्धारणप्रकारः ॥ **विष्टरमिति** ॥ व्रतिनामासनविशेषम् । **उपपादयामि** उत्पादयामीत्यर्थः । आयामिनामिति विष्टरस्य सन्धानकृतपारुष्याभावं दर्शयति । शयनीयस्य पर्णादिसाधनान्तरसंभवेऽपि मार्दवातिशयमामोदं चापादयितुं पुष्पच्छदैरित्युक्तम् । पुष्पदलैरित्यर्थः । आर्द्रैर्निर्गतो मध्वाद्रैः पङ्कजरजोभिरार्द्राणां नूतनानां तत्कालविकसितानां पङ्कजानां रजोभिर्विद्धैः सम्पृक्तैरपां रेणुभिः क्षितिं सिञ्चामि सेचनेन संस्करोमि । अत्रेतिवृत्तबीजभूतो भयदरक्षोनिराकरणोत्साहः कविना लक्ष्मणमुखेन सूचित इति ज्ञेयम् ॥ **तथा कृत्वेति** ॥ मृगनिराकरणप्रभृतीनां वास्तुबलिपर्यन्तानां कर्मणामनुष्ठानप्रकारो यथा निर्धारितः तथेत्यर्थः । कृत्वा विलोकयन्नाहेत्यर्थात्सिध्यति । कथञ्चिदित्यपरिचयनिमित्तः क्लेशो दर्शितः न तु यथावदनुष्ठानाभावः । एवमिति दृश्यमानप्रकारनिर्देशः ॥ **शासनमनुष्ठितमिति** ॥ यद्यपि शासनस्य नियोगरूपवाक्यात्मकत्वादनुष्ठेयत्वं न संभवति तथापि तद्गोचरकर्मानुष्ठानेन विना शासनस्यार्थवत्त्वाभावात् तदनुष्ठानं शासनानुष्ठानमित्युपचर्यत इत्यदोषः । सर्वत्र हि प्रवृत्तिविषयस्य कर्मणः इष्टप्राप्तिहेतुत्वमनिष्टपरिहारहेतुत्वं चावगम्यैव प्रवृत्तिर्दृष्टा । इह तु तदवगमं विना प्रवृत्तिविषयस्य कर्मणः शासनविषयत्वबुद्ध्यैव प्रवृत्तिरिति दर्शयितुमेवमुक्तम् । अत एवाह— "आज्ञा गुरूणामविचारणीया ।" इति । एवमात्मनोऽपरिचितकर्मानुष्ठानसामर्थ्यं विपिनवासरूपविपद्विलसितं मन्यमानस्तन्महिमानं प्रति विस्मयमालम्बमानस्तटस्थवृत्त्या निरूपयति— **अहो नु खल्विति** ॥ अवस्था वृत्तिः मेधाविनी मेधया अतिशायिन्या बुद्धिवृत्त्या युक्ता । "अस्मायामेधास्रजो विनिः" इत्यतिशायने विनिप्रत्ययः । अत्र विपन्नत्वमेव हेतुरिति निश्चीयते । अविपन्नानामेवंभूतबुद्धिवृत्त्यदर्शनात् पुरुषधर्मस्यापि मेधातिशयस्या-

रिसमाप्तां तावत् गोदावर्यास्तटैकदेशे तरङ्गमारुतैरध्वपरि-
श्रममपनयन्तमार्यमार्यया सार्धं विज्ञापयामि ।

( परिक्रम्यावलोक्य )

अये अरण्यविरुद्धेयमाकृतिः । तथा हि ।

अस्यातिमात्रायतलोचनस्य
नतभ्रुणः कम्रपयोधरस्य ।
आश्चर्यरत्नस्य विलासयोनेः
किमाकरो द्यौर्नु वसुन्धरा नु ॥ ६ ॥

---

वस्थायां समारोपः । तत्फलस्य तत्र दर्शनादेति ज्ञेयम् । पूर्वमृष्या-श्रमेषु दशवर्षाणि निवसतस्तस्य मुनिजनानुभावाश्रमाभोगदर्शनसहायलाभादि-भिः राज्यभ्रंशवनवासादिषु नातीव विपद्बुद्धिर्जाता इदानीं विजनं वनं प्राप्तस्य तत्रार्ययोर्निवासव्यसनमालोचयतः महती विपद्बुद्धिर्जाता । एतच्च भाविनो मा-तृविषयसंरम्भस्य द्वारतां प्रतिपद्यते । अत्र कविना विपन्नानामित्यनेन सीतावि-योगात्मिका विपत्सूचिता । मेधाविनीत्यनेन सुग्रीवसख्यसेतुबन्धाद्युपायदर्शनसा-मर्थ्यं च सूचितम् । एवं पर्णशालां कृत्वा तन्निवेदनमध्यवस्यति— यावदि-ति ॥ यावत्तावत् आर्यं प्रति पर्णशालां परिसमाप्तां विज्ञापयामीत्यन्व-यः । आर्यया सार्धं तरङ्गमारुतैरध्वश्रममपनयन्तमित्यनेनात्मनोऽसन्निधानात् सहायान्तराभावाच्च तद्व्यसनालोचननिमित्तः खेदो व्यज्यते । तेन च तत्स-मीपगमनत्वरा सूचिता । अयमेव खेदस्तद्दर्शनसमये प्रकटीभविष्यति अत एव वक्ष्यति कष्टं विधेः कर्मेति । अथ परिक्रम्य सहसात्माभिमुखमायन्तीं ल-लितसुकुमाररूपां शूर्पणखां दृष्ट्वाह— अये इति ॥ अये इत्यद्भुतदर्श-नसमावेगं सूचयति । इयं सौकुमार्यादिविशिष्टत्वेन दृश्यमाना आकृतिः आकारविशेषः । आकारस्यैवारण्यविरुद्धत्वात् आकृतिरित्युक्तम् । अरण्ये वि-रुद्धा अयोग्येति यावत् । अस्या जन्मनो निवासस्य वा अरण्ये न संभव इत्यर्थः । एवं तद्दर्शनसमये किञ्चिदसंभावना जाता तदैव तद्रूपवैचित्र्यदर्श-नजनितेन विस्मयेन मायाप्रभावजनितेन किञ्चिदौत्सुक्येन च स्तम्भितप्र-कोपत्वम् । कुत इत्यरण्यविरोधहेत्वपेक्षा दर्शिता । अस्याश्चर्यरत्नस्य किन्नु वसुधा आकरः किंनु द्यौरिति किंशब्दस्य नुशब्दाभ्यां सम्बन्धः । अत्र "पा-ठक्रमादर्थक्रमः श्रेयान्" इति न्यायेन पाठक्रमो न विवक्षितः । पाठक्रमाश्रयणे प्रथमं स्वर्गाकरत्वेन निरूपितस्य पुनः भूम्याकरत्वपरिग्रहेणापकर्षो भवेत् ।

( चित्तविकारं निरूप्य )

किमिदं नन्वहं रामानुजो लक्ष्मणः ।

---

अत एवोत्तरश्लोके सनाथीकुर्वाणा धरणिमिति प्रथमं धरण्याकरत्वं वक्ष्यते । वसुन्धराशब्दः वसुन्धरैकदेशभूतविशिष्टजनपदविवक्षया प्रयुक्तः । इतरथारण्यदेशस्यापि तदेकदेशत्वेन सन्देहकोट्यनुप्रवेशसंभवात् । आकरशब्दो हि धनधान्यादीनामुद्भवस्थाने देशे प्रसिद्धः । अत्र हि रत्नोत्पत्तिस्थानदेशस्य जिज्ञासितत्वात् आकर इत्युक्तम् । औत्सुक्यजनितोऽयमाकरवितर्कः ॥ **अस्याश्चर्यरत्नस्येति** ॥ सादृश्यनिबन्धना साध्यवसानिका लक्षणाश्रयितव्या प्रस्तुतस्य स्त्रीरूपस्य निगीर्याश्चर्यरत्नत्वेनाध्यवसितत्वात् । यदुक्तं— "विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ।" इति । आश्चर्यशब्दोऽत्रायुर्घृतमितिवत् कार्यकारणसम्बन्धहेतुकया सारोपया लक्षणयाश्चर्यकारणे वर्तते । अतो रत्नशब्दसामानाधिकरण्यमुपपन्नम् । यथोक्तं— "सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ।" इति । स्त्रीरूपस्य रत्नाभेदप्रतीत्या वैशिष्ट्यमारोपफलम् । अत्राव्यभिचारित्वावगतिस्तत्फलम् । आयतलोचनस्येत्याभिर्विशेषणैः अङ्गप्रत्यङ्गसौष्ठवातिशयो दर्शितः । अथ तात्कालिकान् विशेषानाह— **विलासयोनेरिति** ॥ प्रियतमदर्शनकाले नेत्रादिव्यापाराणां विशेषेण लसनं यत् स विलासः । यथाह— "तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु ।" इति । एतच्च शरीरात् भवस्य ललितस्य हावभावादीनां चित्तविकाराणामप्युपलक्षणम् । यथाह— "सुकुमारोऽङ्गविन्यासो मसृणो ललितं भवेत् ।" इति । "निर्विकारात्मकात्सत्त्वात् भावस्तत्राद्यविक्रिया । हेलाकृतस्सशृङ्गारो हावोऽक्षिभ्रूविलासकृत् ॥" इत्यादि । यतोऽस्य स्त्रीरत्नस्य महनीयदेशाकरत्वं अतोऽरण्यविरुद्धत्वमिति हेतुत्वेनैतद्वाक्यपर्यवसानम् । एवं क्षणमात्रं तन्मायाप्रभावकृतरूपवैचित्र्यदर्शनजनितविस्मयौत्सुक्यव्याक्षिप्तचित्तो भूत्वा तदैवात्मस्मृतिमवलम्ब्यात्मीयं चित्तविकारं निरूप्याह— **किमिदमिति** ॥ अनेनात्मनि सञ्जातस्य चापलस्य सत्त्वबलमवलम्ब्य निरासः क्रियते । चापलस्यात्मन्ययोग्यत्वे हेतुमाह— **नन्वहं रामानुजो लक्ष्मण इति** ॥ लक्ष्मणशब्दोऽत्र तन्मात्रे प्रयोजनाभावात् स्वार्थमभिधाय तत्सहचारिविनयधैर्यादिगुणसंपन्नत्वमवगमयति । लक्ष्मणशब्देन धैर्यादिगुणानामवगमे सति तेषां लक्ष्मणस्वरूपान्तर्भावप्रतीतिः फलं भवति । न स्वशब्दैरभिधाने तदन्तर्भावप्रतीतिरस्ति । एतदुक्तं भवति नैसर्गिकविनयधैर्यादिगुणयोगित्वेन प्रसिद्धं यन्मम लक्ष्मणत्वं तस्यात्यन्तमयोग्यमिदं स-

सनाथीकुर्वाणा धरणिमथवा धाम मरुतां
भवेदेषा कामं विरमतु वितर्कश्चलधियाम् ।
वचः कर्तुं पित्रोर्वनमिदमवाप्तस्य वशिनो
वशे तिष्ठन् भ्रातुः स्मरपरवशः स्यां कथमहम् ॥ ७ ॥

---

त्वापलमिति । एवं रामानुजशब्दोऽपि स्वार्थमभिधाय तन्मात्रे प्रयोजनाभावात् तत्समवेतज्यायःपारतन्त्र्यं गमयति । यदिदं बाल्यात् प्रभृति नियमेन तत्पारतन्त्र्यात् सर्वलोकप्रसिद्धं रामानुजत्वं तस्याप्येतदत्यन्तमनुचितमित्यर्थः । लक्ष्मणशब्देनाभिप्रेतमर्थं विवृणोति— **सनाथीकुर्वाणेति** ॥ पूर्वार्धेन एषा आत्मना धरणीं सनाथीकुर्वाणा कामं भवेत् । अथवा मरुतां धाम स्वर्गं काममित्यनेनान्यद्वा देशान्तरमित्यनास्था दर्शिता । नास्माकमस्मिन् विषये मार्गदृष्टतृणादिवत् स्वल्पोऽप्यादरो यत इत्यर्थात् वाक्यस्य पर्यवसानम् । अतोऽयमाकारवितर्को विरमतु अनेनाकारवितर्केणालमित्यर्थः । न ह्युपेक्षागोचरे वस्तुनि परीक्षया किञ्चित् प्रयोजनमिति भावः । न केवलं प्रयोजनाभावादेवायं वितर्को नाश्रीयते किन्त्ववद्यापादकत्वाच्चेत्याह— **वितर्कश्चलधियामिति** ॥— वितर्कशब्दस्य पूर्वोत्तरपदाभ्यां सह सम्बन्धः । यत एवञ्जातीयको वितर्कश्चलधियां भवति अतोऽस्मास्वप्यनुवर्तमानोऽयं वितर्कश्चलधीत्वमापादयति । न चास्मास्वनुवर्तते विनयधैर्यादिगुणशालित्वेन चलधीत्वाभावादिति तेभ्यो व्यतिरेकोऽर्थाद्गम्यते । रामानुजशब्देनाभिप्रेतमर्थं विवृणोति — **वचः कर्तुमिति** ॥ अहं कथं स्मरपरवशस्स्यां न केनापि हेतुना स्मरवैवश्यस्यावकाशः । अत्र हेतुः भ्रातुर्वशे तिष्ठन्निति । न तु भ्रात्रा निर्बन्धेन स्ववशं प्रापितः स्वयमेव वशं प्राप्तः योऽहं स्वयमेव बाल्यात्प्रभृति भ्रातृपरिचर्यां परं धर्मं जानानः एतावन्तं कालं तद्वशे तिष्ठामि स एवेदानीं कथं स्मरपरवशो भवेयम् । अव्यवस्थितचित्तत्वं हि तदा स्यात् विशेषत इदानीं आर्यस्यावस्थाविशेषे निरूप्यमाणेऽत्यन्तमनुचितमेवेदमित्याह— **वच इति** ॥ यदि राज्यस्थस्यानुष्ठितगुरुनियोगस्य वा वशवर्ती न स्यां तदा नात्यन्तं दोषाय भवेत् संप्रति पुनः गुरुनियोगमनुष्ठातुं वनवासक्लेशमनुभवतो धर्मानुष्ठानसाहाय्यमवलम्ब्य वर्तमानोऽहं कथं कामपरवशः स्यामिति वनमिदमवाप्तस्येत्यनेनोक्तम् । पित्रोर्वचः कर्तुमित्यनेनार्याचरितेनैव गुर्वनुगमनस्य महिमानं जानानः कथमेवंभूतः स्यामित्ययमर्थो व्यज्यते । पुनरपि हेत्वन्तरमाह— **वशिन इति** ॥ जितेन्द्रियस्य वशे वर्तमानः कथमजितेन्द्रियः स्यामित्यर्थः । अत्र ललिता-

( ततः प्रविशति ललितसुकुमारवेषा शूर्पणखा )

शूर्पणखा— ( लक्ष्मणं निरूप्य ) हं अअं वि सो एव्व । ( व्रीडां नाटयति )

हं अयमपि स एव ।

---

दर्शनात्मकेन विघ्नेनाकुलीकृतादपि गुरुपरिचर्याव्यवसायादचलितत्वेन नायकगुणो दर्शितः । यथाह— "व्यवसायादचलनं स्थैर्यं विघ्नाकुलादपि ।" इति । अत्र पूर्वार्धगतयानादरोक्त्या निरीक्षणस्य निन्दागर्भत्वं व्यज्यते । एवं निन्दागर्भमीक्षिताया अपि तस्या अनिवर्तनेन पुनस्तन्निवर्तनार्थं परुषतरवीक्षणमपि योग्यतया लभ्यत एवेति तदपि कृतमित्यवसेयम् । अथ नाटकप्रतिपाद्यस्य सर्वस्य नायकप्रतिनायकेतिवृत्तस्य बीजभूतं शूर्पणखावृत्तान्तं लक्ष्मणमुखेन सूचितोपक्रमं प्रतिपादयति । इह खलु शूर्पणखा रावणनिहतभर्तृका तन्नियोगेन लोकोत्तरं पुरुषं पतित्वेन परिग्रहीतुमितस्ततः सञ्चरन्ती जनस्थानमासाद्य गोदावरीतीरगतं रघुवीरं दृष्ट्वा मदनाकुलहृदया आत्मनो रूपं तद्रूपगुणाननुरूपं मन्यमाना मायाबलेन ललितसुकुमारवेषा भूत्वा तमुपगम्य ततोऽलब्धमनोरथा तेन लक्ष्मणाभिगमनव्याजेन प्रत्याख्याता ततोऽपसर्पणमनिच्छन्त्यपि तन्नियोगकरणं तत्प्रसादहेतुं मन्यमाना ततो निर्गत्य मार्गे गच्छन्त्येवात्माभिमुखमागच्छन्तं सौमित्रिं दृष्ट्वा विस्मयौत्सुक्यविवशा रामसादृश्येन तमवगम्य तद्रूपातिशयं विभावयति— **हमित्यादिना** ॥ हमित्यविचारितरूपातिशयदर्शनप्रभवहर्षसमुत्थो वागङ्गोऽनुभावः । सर्वेषामेव सौन्दर्यसौकुमार्यादीनां तथाभूतत्वेनैव दृश्यमानत्वात् स एवेति तत्त्वारोपः । आरोपफलं च सर्वथैवाभेदप्रतीतिः । अपिशब्दो गुणाश्रयसमुच्चयार्थः । तद्दर्शनसमये पूर्वं तदेकाश्रयत्वेन ये निरूपिता गुणाः तेषां सर्वेषामस्मिन्नपि विद्यमानत्वात् अयमपि स एवेति समुच्चयोपपत्तिः । अयोगव्यवच्छेदार्थ एवशब्दः । न हि तादृशः कश्चिदसाधारणो गुणोऽस्मिन् जागर्ति येन भेदप्रत्ययसापेक्षं तत्सदृशोऽयमिति सादृश्यं न रामोऽयमित्यरामत्वं वा गम्येत । अनेन पृथक्त्वमात्रमेव भेदहेतुर्न प्रतीतिभेद इति व्यज्यते । पूर्वं रामसमीपादागच्छन्त्यास्तदानुकूल्यालाभं लक्ष्मणस्यातादृग्गुणत्वं च निरूप्यात्मानमधन्यं मन्यमानाया महान् निर्वेदो जातः । पुनस्तादृशगुणस्यास्य दर्शनेन सञ्जातस्यानन्दस्य स एव निर्वेदः पोषहेतुस्संवृत्त इति ज्ञेयम् । एवं तद्दर्शनानन्तरं उत्तमाङ्गनासमुचितव्रीडासाध्वसादिभिस्तत्पुरतोऽप्रवर्तमानमात्मानं पश्यतस्तस्य किञ्चित्सञ्जातं चित्तविकार-

लक्ष्मणः— प्रतिकूलमिदमाचरितम् । यदेषा

आचारानननुचरता तपोधनानां
सावज्ञं परुषतरं मयेक्षितापि ।
सव्रीळा वदनमधःकरोति कम्पात्
उत्तंसप्रगलितषट्पदेन मूर्ध्ना ॥ ८ ॥

---

मनुभावमुखेनालक्ष्य कृतार्था पुनः तत्क्षणादेव तस्य सावज्ञं परुषतरं दृष्टिपात-मवलोक्यात्मानुरागापरिज्ञानात् तस्यानुरागभङ्गमाशङ्क्य विशेषतो व्रीळादिभिः आत्मानुरागं स्फुटतरं प्रकाश्य तत्पुरतोऽतिष्ठत् । व्रीळां नाटयतीत्यनेन व्रीळा-दीनामाधिक्यमेवोक्तम् । इतरथा विलासयोनेरित्यनेन सावज्ञपरुषतरदृष्टिपातात् पूर्वमुदितस्य विलासयोगस्यासंभवः प्रसज्येत । अथ सौमित्रिः स्वव्यापारवि-रुद्धं निशाचरीव्यापारं निरीक्ष्य निरूपयति— **प्रतिकूलमिति** ॥ प्रत्यक्षेण दृश्यमानमिदं आचरितमाचरणम् । भावे निष्ठा । प्रतिकूलमस्मद्व्या-पारस्यात्यन्तविरुद्धम् । कथं विरोध इत्यत आह । यत् यत एषा इदानीमरण्यमध्ये सहसा दृश्यमाना अविदितकुलनामधेयादिका तपोध-नानामाचारानननुचरता मया सावज्ञं परुषतरं चेक्षितापि सव्रीळा कम्पा-द्धेतोः उत्तंसेभ्यः शिरोऽलङ्कारभूतेभ्यः कुसुमेभ्यः प्रगलिताः प्रच्युताः पूर्वं परिमलादिलुब्धतयावस्थिताः षट्पदा यस्मिन् । अत्र कम्पातिशयेना-नुभावेन साध्वसातिशयो गम्यते । तेन मूर्ध्ना सह वर्तमाना वदन-मधः करोति । अत्राधोमुखत्वेनानुभावेन व्रीळातिशयो गम्यते । यथोक्तं— "दुराचारादिभिर्व्रीडा धार्ष्ट्याभावस्तमुन्नयेत् । साचीकृताङ्गा-वरणैर्वैवर्ण्याधोमुखादिभिः ॥" इति । व्रीडासाध्वसातिशयेनानुरागातिश-यः प्रकाश्यते तयोस्तत्कार्यत्वात् ॥ **तपोधनानामिति** ॥ परमप्रे-मास्पदत्वगुणयोगात् तपसि धनशब्दोपचारः । सर्वस्यैव हि धनं प्रेमास्पदं भवति । तपस्विनां तु तप एव परमप्रेमास्पदं भवति । अतः तेषां तदेव धनम् । अनेनार्थकलत्रादिविषयाभिलाषो निरस्तः । तेन तदाचारा-नुविधायिनोऽपि तदभावः प्रकाश्यते । आचारान्यमनियमादीन् तदङ्गभू-तांस्त्रिषवणस्नानादींश्चानुचरता तद्वदनुतिष्ठता इत्यनेन तपश्चरणचिह्नभूतज-टावल्कलादिधारणं पश्यन्त्या अस्या मदन्तिकागमनं मत्पुरतोऽवस्थानं वानुचि-तम् । तत्रापि कमनीयवेषाभरणमात्मरमणमिवैवंभूतं मामवलोकयन्त्या यदिदं व्रीळादिभिरात्मानुरागप्रकाशनं तदत्यन्तं विरुद्धमिति द्योतितम् । तत्राप्येवं विलसन्ती निन्दागर्भमीक्षिता आत्मकान्तेन सादरं प्रेक्ष्यमाणेव पूर्वस्मादधि-

शूर्पणखा— ( स्वगतम् ) किं णु खु अअं वि भणिस्सदि, होदु एत्तिअं दाव कहइस्सम् । ( प्रकाशम् ) अज्ज, इदो दाव ।

किं नु खलु अयमपि भणिष्यति, भवतु एतावत्तावत् कथयिष्ये । आर्य, इतस्तावत् ।

लक्ष्मणः— न समाधिः स्त्रीषु लोकज्ञः । ( तूष्णीं गच्छति )

---

कतरं यद्वृ्लादिभिरात्मानुरागातिशयप्रकाशनं करोति तन्महान्तं निर्बन्धं द्योतयति । पुनर्निवर्तयितुं परुषं परुषतरं च वीक्षिता निजप्रेयसा प्रणयातिशयगर्भं विलोक्यमानेव यदात्मानं तत्तद्विलासास्पदं करोति तदत्यन्तं दैन्यमापादयति । यथा यथा क्रमेण मया वैराग्यातिशयः प्रकाश्यते तथा तथैषा रागातिशयं विभावयति तत्तदेतद् क्वचिदपि न दृष्टपूर्वम् । अथ निशाचरी एवं विलासविशेषैः प्रयतमानापि उत्पन्नध्वस्तस्यानुरागस्यानुदयं सावज्ञदृष्टिपाताद्यनुभावैरनुमाय चिन्तयति— **किं नु खल्वयमपि भणिष्यतीति** ॥ रामेण यथोक्तं तथैव वा । उतान्यथैव वेत्यर्थः । एवं निरूप्य जयत्वार्य इत्येवंरूपं समुदाचारं कर्तुमुपक्रममाणा प्रयाणोन्मुखं तं दृष्ट्वा आभिमुख्यसम्पादनप्रकारं मनसा निर्धारयति ॥ **भवत्विति** ॥ भवतुशब्दो मानसनिश्चयमाह । तावत्प्रथमं एतावन्मात्रं कथयिष्यामि । यावता वचनेनाभिमुख्यं लभ्येत । पश्चादाभिमुख्ये सञ्जातेऽभिलषितं निवेदयामीति भावः ॥ **आर्य इतस्तावत्** ॥ आगम्यतामिति शेषः । किं वाङ्मात्रेणाप्येवंभूतं जनमनभिनन्द्य जिगमिषसीति भावः । एवं तस्याश्चेष्टाविशेषैः वचनविशेषेण च आत्मचित्तविलोभनार्थं दुरध्यवसायमवगम्यानया सह संभाषणमपि प्रसक्तानुप्रसक्त्या सानुबन्धं सत् प्रस्तुतकार्यस्य नियमस्य च भङ्गमापादयेदिति निश्चित्य पुनर्लोकवृत्तानुसारेणाप्यस्यामवस्थायां प्रतिवचनं न दातव्यमित्यध्यवस्यति ॥ **न समाधिः स्त्रीष्विति** ॥ लोको लोकवृत्तं आगतं प्रति स्वागतवचनादि । समाधिस्तं न जानाति । यद्यपि समाधियुक्तपुरुषनिष्ठ एव तद्धेतुको लोकवृत्तान्तज्ञानाभावः तथापि समाधेरव्यभिचारेण तद्धेतुत्वं दर्शयितुं तदारोपो युज्यते । यदि समाधिस्तर्हि लोकज्ञत्वमपि नास्त्येव । तत्किं तदभावस्य पुरुषनिष्ठत्वकथनेनेति भावः । अत्र समाधिशब्देन समाध्यवस्थायोग्यत्वमेवोच्यते । न तत्काले समाधियोगः । इतरथा "आत्मानं च परं वेत्ति योगी युक्तस्समाधिना" इति न्यायेन स्वपरविभागज्ञानाभावः प्रसज्येत । अत एव स्त्रीष्विति लोकवृत्तज्ञानाभावस्य विषयनियमः कृ—

शूर्पणखा— ( किञ्चिदनुगम्य ) अज्ज असदिसं विअ अज्जस्स सरणाअदस्स उवक्खणं इत्थिआजणस्स ।
आर्य असदृशमिव आर्यस्य शरणागतस्य उपेक्षणं स्त्रीजनस्य ।

---

नः । एतदुक्तं भवति तपस्विनां स्त्रीविषयं लोकवृत्तान्तज्ञानं नास्तीति प्रतिवचनदानाभावेन न कश्चिद्दोष इति । समाधिर्नाम उपासकस्य यमनियमाद्यङ्गसप्तकसाध्य उपास्यनिष्ठश्चित्तलय उच्यते । यदुक्तं— "यमनियमासनपवनायामाः प्रत्याहृतिः सहैव धारणया । ध्यानं चापि समाधिः प्रोक्तान्यङ्गानि योगयोग्यानि ॥ सत्यमहिंसा समता धृतिरस्तेयं क्षमार्जवं च तथा । वैराग्यमिति यमस्स्यात्स्वाध्यायतपोऽर्चनाव्रतानि ॥" तथा— "सन्तोषश्च सशौचो नियमस्स्यादासनं च पञ्चविधम् । पद्मस्वस्तिकवज्रकभद्रकवीराह्वयाः क्रमात्तदपि ॥ रेचकपूरककुम्भकभेदात्त्रिविधः प्रभञ्जनायामः । मुञ्चेद्दक्षिणयानिलमथानयेद्वामया च मध्यगया ॥ संस्थापयेच्च नाड्येत्येवं प्रोक्तानि रेचकादीनि । षोडशशतद्विगुणचतुष्षष्टिकमात्राणि तानि च क्रमशः ॥ चित्तात्मैकधृतस्य प्राणस्य स्थानसंहृतिस्स्थानात् । प्रत्याहारो ज्ञेयः चैतन्ययुतस्य सम्यगनिलस्य ॥ स्थानस्थापनकर्म प्रोक्ता स्याद्धारणेति तत्त्वज्ञैः । यो मनसि देवताया भावस्स्यादस्य मन्त्रिणस्सम्यक् ॥ संस्थापयेच्च तत्रेत्येवं ध्यानं वदन्ति तत्त्वविदः । सत्तामात्रं नित्यं शुद्धमपि निरञ्जनं च यत्प्रोक्तम् ॥ प्रविचिन्त्यं च यत्तस्मिन् चित्तलयस्स्यात्समाधिरुद्दिष्टः ॥" इति । अथ निशाचरी तूष्णीं गच्छन्तं तं सामप्रयोगासाध्यं मन्यमानादृष्टशङ्काजनकेन भेदेन "प्रयत्नस्सर्वथा कार्यो मतिमाद्भिर्मनीषिते । यावद्बलानुपेक्ष्यत्वादभिप्रेतस्य वस्तुनः ॥" इति न्यायेन स्वाभिमतं साधयितुमध्यवस्यन्ती किञ्चिदनुगम्य साभिप्रायमाह— आर्येत्यादिना ॥ शरणागतस्य स्त्रीजनस्य उपेक्षणमार्यस्यासदृशमिव न कस्यचिदपि शरणागतोपेक्षणं सदृशं विशेषतो राज्ञां तत्रापि भवद्वंश्यानां ततोऽपि धर्मैकनिष्ठस्य भवत इत्यभिप्रायः । एवं रक्षितृगतं विशेषमुक्त्वा रक्ष्यगतं विशेषमाह— **शरणागतस्य स्त्रीजनस्येति** ॥ शत्रुरपि शरणागतश्चेत् नोपेक्षणीयः किं पुनरनाथस्त्रीजन इति भावः ॥ **असदृशमिवेति** ॥ निश्चये सत्यपि असदृशमिवेत्युक्तं तच्चित्तानुवर्तनार्थं न केनापि हेतुनास्मदुपेक्षणं सदृशमिति प्रतिभाति । उपेक्ष्यामहे च भवता वयं अतो भवद्बहुमानादसदृशमिवेत्येव वक्तुं शक्नुम इत्यभिप्रायो व्यज्यते । अत्र व्यसनविशेषमनुक्त्वैव शर–

**लक्ष्मणः**— न हि न हि मयोपेक्ष्यते भवती सांप्रतमवस्थान्तर-शोचनीयस्य गुरोरलङ्घनीयेन शासनेन खलु ।

**शूर्पणखा**— जइ एव्वं, इमं वि जणमन्तरेण आण्णा गुरुजणस्स ण खु दाव उवक्खणं अरुहदि ।

यद्येवं, इममपि जनमन्तरेण आज्ञा गुरुजनस्य न खलु तावदुपेक्षणमर्हति ।

---

णागतस्येत्युक्तिरेवंभूतं तस्या दुरभिप्रायं सूचयति यदि साक्षादेनं प्रति स्मरसन्तापरूपं व्यसनविशेषं निवेदयामि ततो विरक्तस्यास्यात्यन्तमुपेक्षैव भवेत् अतः शरणागतस्येत्येतावदभिहिते तेन सूचितं व्यसनविशेषमसौ स्वयमेव पृच्छति— कस्ते व्यसनविशेष इति ॥ अनेनैवमनुयुक्ता यदि मदीयं व्यसनमपाकर्तुं समर्थोऽसि तर्हि वक्ष्यामीत्युक्ते पुनरसामर्थ्यप्रसङ्गभयात् प्रतिज्ञास्यति । सर्वथा ते व्यसनमपाकरिष्यामीति । तदविलम्बमुच्यतामित्युक्ते स्मरनङ्गतापरूपमिदं मद्व्यसनं निवेदयिष्यामीति ततः सत्यवचनसंरक्षणपरत्वादनिच्छन्नपि मां परिग्रहीष्यतीति । एवं तस्या आत्मनोपेक्ष्यमाणाया अप्यनुगच्छन्त्या व्यवहारविशेषेण दुरभिप्रायं विज्ञाय व्यसनविशेषमपृष्ट्वैव तदुपपादितमुपेक्षणस्यासदृशत्वं निषेधति— **न हि न हीति** ॥ न हि न हीति द्विर्वचनेनासदृशत्वं शङ्कितुमप्यशक्यमिति दर्शयति । न हि न हीत्यनेनैवार्थादुक्तादुक्तमुपेक्षणस्य योग्यत्वं हेतुनोपपादयितुं प्रतिजानाति । भवती मयोपेक्ष्यते यत्तत्साम्प्रतं युक्तमेवेत्यर्थः । कुत इत्यत आह— **अवस्थयेति** ॥ गुरोः शासनेन हेतौ तृतीया । इह विषयविशेषानुकम्पया गुरुशासनं शासनबुद्ध्यैवानुष्ठेयम् । न त्वत्र विषयविशेषापेक्षयेति दर्शयति । ननु शरणागतरक्षणमपि तद्वदेव कर्तव्यमत आह— **अलङ्घनीयेनेति** ॥ न हि कर्तव्यान्तरमपेक्ष्य गुरुशासनं लङ्घनीयं भवतीत्यर्थः । अलङ्घनीयेनेत्यविशेषाभिधानं नियोज्यविशेषापेक्षया देशकालाद्यपेक्षया वा गुरुशासनं न लङ्घनीयमिति द्योतयितुम् । ननु यावदनुष्ठितगुरुनियोगः कृतकृत्यतामुपयासि तावदहं प्रतिपालयामीत्यत आह— **अवस्थान्तरशोचनीयस्येति** ॥ वनवासात्मकेनावस्थाविशेषेण शोचनीयस्येति अनेन यदैवायमवस्थान्तरमत्येष्यति तावत् मम तत्परिचरणमेकमेव धर्म इति दर्शितम् । अथ तद्वचनेनैव तस्य गुरुनियोगाधीनत्वमवधार्य कृतार्था निशाचरी निजाभिलषितगोचरं गुरुशासनं निवेदयितुमुपक्रमते— **यद्येवमिति** ॥ यदि गुरुशासनस्य सर्वथालङ्घनीयत्वं तर्हि शरणागत-

लक्ष्मणः— ( सरोषं ) आः कस्तावन्मामाज्ञापयति ।

शूर्पणखा— ( भयं निरूप्य ) पसीददु पसीददु अज्जो । अज्जो एव्व रामो आणवेदि ।

प्रसीदतु प्रसीदत्वार्यः । आर्य एव राम आज्ञापयति ।

लक्ष्मणः— ( स्वगतम् ) हन्त पूर्वमनया दृष्टः खल्वार्यः, भवतु, प्रसादयामि गुरुवचनमुहूर्तभाजनीभूतामत्रभवतीम् । ( प्रकाशम् ) भद्रे किमाज्ञापयत्यार्यः ।

---

मिमं जनमन्तरेणाधिकृत्य भवन्तं प्रति या गुरुजनस्याज्ञा सापि नोपेक्षणमर्हतीति । तावच्छब्दोऽवधारणार्थः । केनापि हेतुनोपेक्षणं नार्हत्येव शरणागतत्वेन गुर्वाज्ञया चायं जनोऽनुग्रहीतव्य एवेति भावः । अथ पूर्वमेव तस्या निर्बन्धातिशयेन सञ्जातनिर्वेदस्सौमित्रिः पुनस्तदभिमतसम्पादनगोचरं गुरुनियोगमाकर्ण्य कुपितः प्राह—आ इति ॥ आ इति कोपे । "आस्तु स्यात्कोपपीडयोः" इति । को गुरुजनो भ्रातृपरिचरणार्थमेवं वनं प्राप्तं मामन्यस्मिन्ननुचिते कर्मणि आज्ञापयति । हितोपदेशित्वाभावात् तस्य गुरुत्वमेव नास्तीति भावः ॥ कस्तावदिति ॥ नित्यमेवार्यसमीपं वर्तमानस्यानवसिततदाज्ञानुष्ठानस्यान्यमुखेनार्थकर्तृकं मध्ये कार्यान्तरविज्ञापनमप्रसङ्गात् बुद्धिपथं नाध्यरूक्षत । यतस्तेनान्यबुद्ध्या कोपस्संभवतीति भावः । कैकेयीदुर्व्यापारशङ्कयेति केचिद्वदन्ति ॥ भयं निरूप्येति ॥ अत्रोपसर्गो धात्वर्थानुवर्तक एव । नित्यदुष्टभयङ्करसत्त्वजातायाः निखिलजनभयदायिन्या अप्यस्याः कोपावस्थायां तदाकारो भयजनकोऽभूत् । अनेन तस्यापरिच्छेद्यप्रभावत्वं गम्यते । एवं क्षणमात्रं भयविवशा भूत्वा गुरुशब्दार्थान्यथाज्ञानमेव कोपहेतुरिति ज्ञात्वा तत्त्वनिवेदनेन तद्भ्रममपनेतुं तत्प्रसादं प्रार्थयते — प्रसीदतु प्रसीदत्विति ॥ अत्र द्विर्वचनेन प्रसादाग्रहातिशयो गम्यते । गुरुजनशब्दाभिप्रेतमर्थं स्पष्टीकरोति— आर्यो राम एवाज्ञापयति ॥ भवन्तं प्रति मन्मुखेन यत्किञ्चित्कर्तव्यं कर्मान्तरमाज्ञापयतीति योज्यम् । इतरथाज्ञापनस्य वर्तमानत्वं न घटते । एवशब्देनान्यथा कोपं मा कृथा इति गम्यते । अथ तद्वचनादेवार्यस्याज्ञेयवगम्य सलज्जमाह— हन्त पूर्वमिति ॥ अहमविमृश्यकारित्वेनानया परिच्छिन्न इति लज्जा हन्तेत्यनेन कष्टं मया भ्रान्त्यार्यशासनमविवेकनिमित्तेन कोपेन निरस्तमभूदित्यनुतापात्मकः खेदो व्यज्यते । खलुशब्दोऽवधारणे ॥ दृष्ट इति ॥ दर्शनं संलापस्याप्युपलक्षणम् । पूर्वं कृतस्यावमानस्य प्रसादनमेव प्रायश्चित्तमित्यध्यवस्यति— प्र-

शूर्पणखा— सुणोदु अज्जो । श्रृणोत्वार्यः ।

लक्ष्मणः— अवहितोऽस्मि ।

शूर्पणखा— अज्ज मए सह अत्तणो परिअरणं अज्जरामो आण-वेदि ।

आर्य मया सह आत्मनः परिचरणं आर्यरामः आज्ञाप-यति ।

लक्ष्मणः— ( हस्तं परावृत्य ) पश्य—

---

सादयामीति ॥ प्रसादने हेतुः— गुरुवचनभाजनीभूतामिति ॥ भवच्छब्दः प्रशस्यतमे युष्मदर्थे प्रसिद्धः । अज्ञाविवक्षित्वा युष्मदर्थं प्रशस्यतमत्वविवक्षयैवात्रालभवतीमित्युच्यते । अस्याः प्रशस्यतमत्वे गुरुवचनास्पदत्वमेव हेतुः । एवं स्वयमेव निरूप्य तां प्रसादयति— भद्रे इति ॥ गुर्वाज्ञापात्रभूतत्वेन सुकृतपरिपाकशालिनि इदानीमार्यः किं कर्मान्तरं मया कर्तव्यं त्वन्मुखेनाज्ञापयतीति । अथ निशाचरी तद्वचनेनाभिलषितसिद्धिद्वारभूतेन कृतार्थावधानं प्रार्थयते— श्रृणोत्वार्य इति ॥ अनेन कार्यस्य गुरुतरत्वेन श्राव्यत्वं प्रकाश्यते । अथ कृतावधानं प्रति गुर्वाज्ञां निवेदयति— आर्य मया सहात्मनः परिचरणमार्यराम आज्ञापयतीति ॥ अत्र भार्यात्वेन मम परिग्रहमाज्ञापयतीत्युक्ते मत्परिग्रहं गुरुपरिचर्याविरोधिनं मत्वा पूर्ववन्मामुपेक्षेतैव । अतोऽस्य यदभिलषितं गुरुपरिचरणं तत्र साहाय्यसम्पादनमेव गुर्वाज्ञागोचरत्वेन निवेदनीयम् । अतोऽनेन द्वारेण लब्धसन्निधाना पादप्रसारिकान्यायेन क्रमेणाभिलषितं साधयिष्यामीत्येवंभूतेन दुरभिप्रायेण साक्षात्स्वाभिमतगोचरत्वेन गुर्वाज्ञानिवेदनं न कृतम् । तथा चोक्तं— "यस्य यस्य हि यो भावः तेन तेन प्रविश्य तम् । स्वयं तद्भावसंयुक्तः क्षिप्रमात्मवशं नयेत् ॥" इति । अयं च वाक्यार्थः । पूर्वमेवार्यपरिचरणे सहायान्तराभावेन परिक्लिश्यशरणागतमिमं जनं दृष्ट्वा करुणार्द्रहृदयस्सन् एवं व्यजिज्ञपत् । हे लक्ष्मण त्वया परिचरणे निजनियमनिवर्तने च साहाय्यार्थमेषा परिगृह्यतां अनेन श्रेयोद्वयं भविष्यति यदस्या अनाथायास्सनाथत्वं यच्च भवतः साहाय्यलाभ इति मद्वचनादुच्यतामिति । एतत्सर्वं मया सहेत्यनेन सूचितम् ॥ राम इति ॥ न केवलमाकारत एवाभिरामत्वं किन्तु दयामाधुर्यादिगुणगणविशेषैरपीति दर्शितम् । अथ सौमित्रिरनुचितकर्मगोचर-

वासो वल्कलमास्पदं विटपिनो वन्यं शरीरस्थितिः
शय्या दर्भलता प्रसाधनमपां वर्षी जटानां भरः ।
बाले किं बहुना वने वनमृगन्यायस्य न त्वं पदं
सारङ्गाक्षि तपोभृतः क्व तपसां शत्रुः क्व सङ्कल्पजः ॥ ९ ॥

---

स्वेनार्यस्य ज्ञापनं न संभवतीति निरूप्य वचसा निषेधे कालविलम्बमसहमानः विस्तारितपञ्चाङ्गुलस्य हस्तस्य परावर्तनेन निषेधे कृतसमयेन तदभिप्रेतमर्थं निवेदयन्नाह—वास इत्यादिना ॥ हे बाले आत्महितवेदनासमर्थे । आत्महिताज्ञानमेव स्फुटीकरोति— वन इत्यादिना ॥ अत्र यच्छब्देन सह मम इत्यध्याहारः कार्यः । यस्य मम वने नित्यं निवास इत्यर्थात् सिध्यति । सोऽहं न तव पदमिति वाक्यपर्यवसानम् । अत्र हेतुं सम्बोधनेन दर्शयति— सारङ्गाक्षीति ॥ सर्वाङ्गसुन्दरि सौन्दर्यादिगुणसम्पदा सुरलोकनिवासार्हाया भवत्या नित्यं वने वर्तमानोऽहं कथमनुरागालम्बनं स्यामिति भावः । यदि वनेऽपि भोगयोग्यविभवसम्पन्नो भवेयं तर्हि वनवासोऽपि नात्यन्तं दोषमावहेत् तदपि नैवमित्याह— वनमृगन्यायस्येति ॥ वनमृगस्य न्याय इव न्याय आचारो यस्येति विग्रहः । क्रीडामृगव्यवच्छेदार्थं वनशब्देन विशेषणम् । नगरादिषु क्रीडार्थं लालितानां हरिणादीनां स्वादुतमक्षीराद्यास्वादो लभ्यते । वनमृगन्यायत्वमेव विवृणोति । यस्य मम परुषतमं मलिनं त्रिषवणस्नानादिभिरार्द्रीकृतं च वल्कलं वासः । अत्र मुख्यस्य वाससोऽभाव एव वनमृगन्यायत्वमभिव्यनक्ति । वर्षवातातपहिमादिष्वपि विटपिन आस्पदं गृहम् । अत्यन्तदारिद्र्यैरपि विवार्जितं वन्यं पर्णमूलफलादि शरीरस्थितिः स्थितिशब्देन तत्साधनं लक्ष्यते ॥ शय्या दर्भलतेति ॥ वनवासिनां संस्कृतस्थलविशेषोऽपि शयनार्थं न लभ्यते ॥ अपां वर्षीति ॥ त्रिषवणस्नानेन जलधारावर्षणशीलो जटानां भरः प्रसाधनमलङ्कारः । अत्रापि मुख्यालङ्काराभाव एव वनमृगन्यायत्वम् । उक्तानां वासोगृहादीनामेकस्यैवाभावः पर्याप्तो मम त्वदनुरागानालम्बनत्वं साधयितुं किं पुनस्सर्वेषाम् । अनेन निर्मलसुकुमारदुकूलवासोमणिमयप्रासादादिस्वादुतमक्षीरादिमृदुतरशयनीयरत्नाभरणाद्युपभोगसमुचिताया भवत्यास्तत्तादृशविभवसम्पन्नो लोकोत्तरसौन्दर्यादिगुणशाली पुरुषवर एवानुरागपात्रं भवतीति व्यतिरेको व्यज्यते । ननु यस्मिन्ननुराग उत्पद्यते स परिग्राह्यः उत्पन्नश्च मम भवद्गोचरोऽनुरागः न हि रागोत्पत्तिर्बहिरुपाधीनपेक्षते । यथोक्तं— "व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः न खलु बहिरुपाधीन्

शूर्पणखा— अलीअं अलीअं एदं । णं सो अज्जो अज्जाए सह वत्तदि ।

अलीकमलीकमेतत् । ननु स आर्य आर्यया सह वर्तते ।

लक्ष्मणः— भद्रे न जानासि परमार्थतो वृत्तमार्यस्य ।

शूर्पणखा— किं किं ।

---

प्रीतयस्संश्रयन्ते ।" इति । अतः किमनेनायोग्यत्वसमर्थनेन सर्वथा मह्यं त्वत्परिचरणमेव रोचनेतरामत आह— किं बहुना न मम त्वं पदमिति ॥ अस्मिन्नपि साध्ये वासो वल्कलमित्यादि हेतुत्वेन सङ्गच्छत एव । बुद्धिपूर्वकमेव महनीयं वासोगृहादिकं परित्यज्य वनं प्राप्तस्याङ्गीकृतजटावल्कलादिधारणस्य तपस्विधर्ममवलम्ब्य वर्तमानस्य मम न त्वं पदं संसर्गास्पदं न भवसीत्यर्थः । भवतु नाम तवाहं पदमिति बुद्धिः न त्वत्र विवदामहे सर्वथाहं त्वां न परिगृह्णामि ॥ किं बहुनेति ॥ बहवोऽत्र हेतव उक्ताः वक्तव्याश्च बहवस्सन्ति किं तत्कथनेन कालविलम्बापादकेन । अनेन तन्निर्वासनत्वरा प्रस्तुतकार्यौत्सुक्यं च दर्शितम् । एतदेवार्थान्तरन्यासेन समर्थ्यते— तपोभृतः क्व सङ्कल्पजः क्वेति ॥ यथा वार्ताश्रवणमपि परस्परं दुर्लभं तथातिदूरदेशवर्तित्वम् । अनेन तपस्सङ्कल्पजयोः परस्परान्वयायोग्यत्वं दर्शयति । अत्र तपोभृत्त्वसामान्यस्य सङ्कल्पजसम्बन्धाभावात्मकेन सामान्येनात्मनः तत्सम्बन्धाभावः समर्थ्यत इत्यर्थान्तरन्यासता । यथोक्तं—"सामान्यं वा विशेषो वा यदन्येन समर्थ्यते । यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥" इति । न चात्र विषमालङ्कारत्वं सिद्धसमन्वययोर्द्वयोर्यत्रानुपपद्यमानताप्रतीतिः स प्रथमो विषमालङ्कारः । एतच्च क्वेदं वनमित्यत्र वक्ष्यामः । तपसां शत्रुरित्यनेन भवत्याः परिग्रहो मम तपोभङ्गमावहति यतः अतस्त्वां न परिगृह्णामीति दर्शयति । अनेन श्लोकेनोक्तमेवार्थं तपस्विधर्मेणेति वक्ष्यति ॥ अलीकमलीकमेतदिति ॥ यदिदं मत्परिग्रहस्य तपोविरोधित्वमुक्तं तदसत्यमेव । अवधारणार्थं पुनर्वचनम् । अत्र हेतुमाह— ननु स आर्य आर्यया सह वर्तत इति ॥ यो गुरुनियोगमङ्गीकृत्य तपस्विधर्ममाचरति सोऽप्यार्यः धर्माधर्मविचारनिष्णातः वामाङ्कनिषादिन्या भार्यया सह नित्यं रममाण एव वर्तते गुरुनियोगं विना भ्रातृस्नेहादेव वनं प्राप्तस्य भवतो मत्परिग्रहेण तपोविरोधश्शङ्कितुमपि न शक्यत इति भावः । अथ सौमित्रिः पूर्वोक्तमेवात्मनः सम्बन्धानर्हत्वं स्मारयितुं भद्रे इति सम्बोधयति । सर्वगुणसम्पन्ने तवायं मत्परिग्रहनिर्बन्धो न शोभन इति भावः ।

**लक्ष्मणः**— यावदार्यस्तीर्णप्रतिज्ञः प्रकृतिमण्डलं गुरुजनं भरतं च न पश्यति, तावदेकमेव धर्ममवलम्बते ।

**शूर्पणखा**— जइ एव्वं एत्थ सा किं करोदि ।

यद्येवमत्र सा किं करोति ।

**लक्ष्मणः**— यदहं करोमि ।

**शूर्पणखा**— जह अज्जं सा उवअरदि तह तुमं वि अहं उवअरिस्सम् ।

यथा आर्यं सा उपचरति तथा त्वामप्यहमुपचरिष्यामि ।

---

आर्यस्य वृत्तं परमार्थतो न जानासि इत्युक्ते किं किमिति संभ्रमेण तया पृष्टः तन्निवेदयति— **यावदिति** ॥ चतुर्दशसंवत्सरान् तपोधनधर्ममवलम्ब्य वनवासं करिष्यामीत्येवंरूपा प्रतिज्ञा तीर्णा येन सः तादृशः वियोगपरिखिन्नानमात्यसुहृद्भृत्यादीन् गुरुजनं च कौसल्यादीन् वशिष्ठादींश्च विशेषतो राज्यभारपरिखिन्नं भरतं च न पश्यति तावदेकमेवार्थकामानुबन्धरहितं धर्ममेव । अथवा गुरुनियोगानुष्ठानात्मकं धर्ममालम्बते ॥ **यद्येवमिति** ॥ यदि कामानुभवमुपेक्ष्य गुरुनियोगानुष्ठानरत एव वर्तते तर्ह्यत्र सा किं करोति तस्याश्चिरतरमपि विमृश्यमानं तृतीयात्पुरुषार्थादन्यत् कार्यान्तरं न स्फुरतीत्यर्थः । यदहं करोमि सापि तदेव नान्यदिति वाक्यपर्यवसानम् । अयमभिप्रायः न खलु भार्या भर्तृसमीपे कामानुभवं विना किमर्थं निवसतीति चोद्यस्यावकाशोऽस्ति । यतः पतिव्रतायाः पतिपरिचरणमेव परमो धर्मः । किञ्च दम्पत्योस्सहैव धर्मानुष्ठानं विहितम् । अतो नायमनुयोगः । यथोक्तं— "दानात्प्रभृति या नारी कर्मणा मनसा गिरा । पतिव्रता भर्तेन्नित्यं यावदायुः समाहिता ॥ सा भर्तृलोकानाप्नोति यथैवारुन्धती तथा । नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ॥ शुश्रूषते यद्भर्तारं तेन स्वर्गे महीयते ।" इति । अथ निशाचरी तद्वचनादेव लब्धावसरेण निषेवणात्मकेन सामविशेषेण तं वशीकृत्य निजाभिलषितं साधयितुमध्यवस्यन्ती सीतावदात्मनोऽपि तावन्मात्रेण परितोषं दर्शयति । यथा आर्यं सा कामानुभवमनपेक्ष्य धर्मबुद्ध्यैवोपचरति तथैवाहमपि त्वामुपचरिष्यामि । न हि परिचरणमात्रस्य तपोविरोधित्वम् येन तत्प्रत्यादिश्येत अतस्तावन्मात्रमनुगृह्णात्विति प्रार्थनायां वाक्यपर्यवसानम् । अत एव इदमपि प्रार्थनीयमिति वक्ष्यति । अथ सौमित्रिस्तदभिप्राय ज्ञात्वा प्रत्यादिशति— अ-

लक्ष्मणः— भद्रे इदमपि प्रार्थनीयम् । पश्य—

यतते यस्य निष्कृत्यै जनस्सर्वोऽपि बुद्धिमान् ।
दास्यं तत्स्वयमिच्छन्ती मुग्धा त्वं मुग्धलोचने ॥ १० ॥

शूर्पणखा— अज्ज किं सिणेहो तुलअदि गुणदोसाणि ।
आर्य किं स्नेहस्तुलयति गुणदोषान् ।

लक्ष्मणः— ( आत्मगतम् ) एवं व्याहरन्तीमेनां किमिति प्रत्यादि-

---

द्रे इति ॥ एवंभूतं दास्यानुभवं नार्हसीति सम्बुद्ध्याभिप्रायः— इदम-पि प्रार्थनीयम् ॥ अपिशब्दो गर्हायाम् । "गर्हासमुच्चयप्रश्नशङ्कासंभावना-स्वपि ।" अत्र काकुविशिष्टेन गम्भीराक्षेपेण निषेधोऽवगम्यते । "भिन्नक-ण्ठो ध्वनिः प्राज्ञैः काकुरित्यभिधीयते ॥ " उपहासकाकुश्चेयम् । अत्यन्तग-र्हणीयमिदं दास्यं नैव प्रार्थनीयमिति तात्पर्यम् ॥ पश्येति ॥ अत्रा-स्याप्रार्थनीयत्वे मयोच्यमानं हेतुं सावधानं निरूपयेत्यर्थः । हेतुमेवाह— यतत इत्यादिना ॥ यो बुद्धिमान् जनो भवतीव नाज्ञानभूयिष्ठः स जनस्सर्वोऽपि न केवलं कतिपये जनाः इत्यपिशब्देन गम्यते । यस्य दा-स्यस्य दैवात् सञ्जातस्य निष्कृत्यै प्रतिक्रियां कर्तुं अर्थादसञ्जातस्य प्राग-भावपरिपालनाय च यतते । अद्यापि प्रत्यक्षतो यतमान एव दृश्यते । नात्र प्रमाणान्तरं मृग्यमिति भावः । तदिदं सर्वजननिन्द्यं दास्यं न प्रार्थनीयमिति योज्यम् । अत्र यच्छब्दवशादध्याहृतेन तच्छब्देन य-च्छब्दयुक्तोद्देश्यवाक्यप्रकारो हेतुत्वेन परामृश्यते । यत एवंभूतं दास्यं अतस्तथाविधं दास्यं स्वयमिच्छन्ती । हेतौ शता । न केवलं दैवात्सञ्जात-स्य तस्य प्रतिक्रियायै न यतते । किन्तु स्वयमेवेच्छसि चेत्यर्थः । अत-स्त्वं मुग्धात्यन्तं मूढैव । प्रार्थनानुमितया इच्छया तव मौढ्यातिशयोऽवग-म्यत इत्यर्थः । मुग्धलोचने इत्यनेन तव सौन्दर्यमेव बहुमानपदं न तदनु-रूपं प्रज्ञानैपुणमिति गम्यते ॥ किं स्नेहस्तुलयति ॥ विविच्य विजानाति गुण-दोषान् । यद्यपि स्नेहो गुणदोषविचाराभावे निमित्तमेव तथापि तद-व्यभिचारं द्योतयितुं तत्कर्तृत्वमारोप्य किंशब्देन प्रतिक्षिप्तम् । यदि स्नेहो भवति तर्हि गुणदोषविचारो नास्त्येव । यथोक्तम्— "परिव्राट्कामुक-शुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्य इति तिस्रो वि-कल्पनाः ॥" इति । एवं दुष्टशङ्काजनने भेदप्रयोगेऽप्यनुवर्तमानां तां दृष्ट्वा नि-र्विण्णमानसस्सन् पुनरपि निवर्तनोपायं चिन्तयति— एवमिति ॥ सर्वदा त्वत्परिचरणमेवाभिलषामीति पुनः पुनर्व्याहरन्तीं किमिति प्रत्यादिशामि । यदि तूष्णीं गच्छामि तर्ह्येषा पूर्ववदनुगच्छत्येव कृतश्च भेदप्रयोगः । सा-

शामि । ( विचार्य ) भवतु दृष्टम् । ( प्रकाशम् ) भद्रे आर्यस्य पर्णगृहप्रवेशानन्तरमत्रभवतीमभिप्रेतस्थाने द्रक्ष्यामि ।

शूर्पणखा— जइ एव्वं अज्ज, तस्स पण्णसालस्स पस्सदो एव्व पडिवालइस्सम् ।

यद्येवमार्य, तस्याः पर्णशालायाः पार्श्वत एव प्रतिपालयिष्यामि ।

लक्ष्मणः— ( आत्मगतं ) अस्तु कामं नास्त्यनन्तरायः कालक्षेपः । ( प्रकाशं ) यदभिप्रेतं भवतु भवत्यै ।

---

मदाने तु नीचजने विफले एव । तुरीयश्चोपायः स्त्रीष्वनुचितः अतः केनोपायेन निवर्तयामीति स्वयमेव निरूप्य निवर्तनोपायमवधार्याह— भद्रे इति ॥ प्रशंसापूर्वकं संबोधनमभिधीयमानेऽर्थे विस्रम्भजननार्थम् । श्रीमद्द्वैपायनेनाप्युक्तम्— "स्त्रीषु नर्मे विवाहे च वृत्त्यर्थे प्राणसङ्कटे । गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥" इति ॥ "आत्मनाशे धर्मनाशे व्यसने सुमहत्यपि । दोषाय नानृतवचो भवतीह न संशयः ॥" इत्यनेन न्यायेनात्रानृतवचनस्य न दोषः । भवत्यभिप्रेतं यत्स्थानं तत्रार्यस्य पर्णगृहप्रवेशानन्तरमागत्य द्रक्ष्यामीति ॥ अत्र भवतीमिति ॥ भवच्छब्देन युष्मदर्थनिर्देशश्चाभिधीयमानेऽर्थे विस्रम्भजननार्थम् । अथ निशाचरी प्रायेण एतादृशा अनृतं न भाषन्त इति मत्वा विस्रम्भमुपगता सङ्केतयति— यावदिति ॥ यावच्छब्दोऽध्यवसाये । अपिशब्दो वाक्यार्थसमुच्चये । भवता त्वरिततरमार्यः पर्णशालां नीयताम् अहमपि तस्याः पर्णशालायाः पार्श्वत एव प्रतिपालयिष्ये । पार्श्वत एवेत्यवधारणेन ततोऽन्यत्र दवीयसि देशे गमनेन न भवन्तं क्लेशयिष्यामि । कालविलम्बश्चैवं सति न भवेत् । अहमिदानीमेव गत्वा कार्यान्तराभावात् भवत्प्रतिपालनमेव करोमि अत आगमने कालविलम्बो माभूत् । एषा मदेकशरणा मामेव प्रतिपाल्य वर्तत इति करुणया शीघ्रमागच्छतेति प्रतिपालयिष्ये इत्यनेन दर्शितम् । अथ सौमित्रिः पर्णशालासमीपं सङ्केतितं श्रुत्वा भाविनं संसर्गानुबन्धमुत्प्रेक्ष्य तदनुमाननं प्रति संशयानः स्वयमेव विमृश्यावधारयति— अस्तु काममिति ॥ यदि तद्वचनानुमतिर्न क्रियते तर्हीदानीमेषापसारयितुं न शक्या । कृते त्वनुमननेऽयमेव दोषः यत्पश्चात्प्रतिपाल्याद्द्रष्टुा मत्समीपमायास्यतीति । एतदस्तु कामम् । काममित्यनेन भाविनस्संसर्गस्यानिष्टत्वं सूचयति । यथाह "अकामानुमतौ कामं" इति । अननुमतेः अ-

शूर्पणखा— जं अज्जो आणवेदि । यदार्य आज्ञापयति ।

( इति निष्क्रान्ता )

लक्ष्मणः— ( सविमर्शं ) परीक्षास्पदमेषा । कुतः ।

क्वेदं वनं वनचरैरपि दुर्विगाहं
क्वेयं वधूः कुवलयच्छविचोरनेत्रा ।
हेमारविन्दमकरन्दरसोपयोगां
कः श्रद्दधीत जलधौ कलहंसकन्याम् ॥ ११ ॥

---

नुमननस्य श्लाघ्यत्वं समर्थयते— नास्त्यनन्तरायः कालक्षेप इति ॥ प्रायेणोपस्थितस्य कार्यस्य कालक्षेपो विघ्नं कुर्वाणो दृश्यते । यतो भाविनस्संसर्गस्य विघ्नसंभावनया स्वरूपमेव सन्दिग्धं अतोऽनुमन्यामह एवानयोक्तमिति भावः । एवं स्वयमेवावधार्यानुजानाति— यदिति ॥ यद्भवत्यै अभिरुचितं तत् भवत्वित्यर्थः । रुच्यर्थानां प्रीयमाण इति चतुर्थी । यदार्य आज्ञापयति तत्करोमीति वाक्यपरिसमाप्तिः । अथ प्रथमदर्शन एवारण्यविरुद्धेयमितीषत्सञ्जातः तदैव विस्मयौत्सुक्यादिभिः निरुद्धप्रसरस्सन् अनन्तरं तच्चेष्टावचनविशेषादिभिः बद्धस्थैर्यो भूत्वा तन्निवर्तनप्रव्यग्रचित्तस्यालब्धावसर एव स्थायित्वेन यः शङ्काभेदो मनस्यवर्तिष्ट इदानीं सकलप्रतिबन्धकापगमेन लब्धप्रसरावसरं तमेवालम्ब्य निरूपयति— परीक्षेति ॥ अयमभिप्रायः । इदानीं प्रस्तुतकार्यनिवेदनाय त्वरमाणैरस्माभिरपरीक्ष्यैव कथञ्चित् प्रत्यादिष्टा । अतः परमेषा यत्किञ्चिदभिसन्धाय इतस्ततः सञ्चरन्ती परीक्ष्यैव यथेत्यमेवास्मत्समीपमायास्यति । अत्र हेतुमाह— क्वेदमिति ॥ ये नित्यमेवारण्यशरणाः जीवनार्थं मृगयां कुर्वन्ति तैः संभूय सन्नद्धैर्बहुभिर्वनचरैः किरातादिभिरपि दुर्विगाहं दुष्प्रापम् । प्रवेश एव तावदशक्यः । किं पुनरवस्थानमिति भावः । इदं घोरतरसिंहव्याघ्रादिभिस्समाकीर्णं वनं क्व इयमेकाकिनी मालग्रामनिवासितरमणीयरत्नमयान्तर्गृहनिवाससमुचिता कुवलयच्छविचोरनेत्रा सर्वाङ्गसुन्दरी वधूः क्वेति दूरदेशस्थत्वेन उभयोरुपादानं तत्सम्बन्धस्यात्यन्तायोग्यत्वं लक्षयति । यत एवंभूते वने एवंभूताया अस्या अवस्थानं न घटते अतः परीक्षास्पदमिति हेतुत्वेन पर्यवसानम् । प्रथमो विषमोऽत्रालङ्कारः । यदाह— "क्वचिद्यदतिवैषम्यान्न श्लेषो घटनामियात् । कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये । क्रमेण च विरुद्धे यत्स एष विषमो मतः ॥" इति । एतदेव दृष्ट-

एष पूर्वोद्दिष्टः प्रदेशः।

( ततः प्रविशति रामः सीतया सह )

रामः— देवि नगराधिवासात् सविशेष इव वनाधिवासो मे प्रतिभाति। पश्य—

---

न्तेनोपपादयति— हेमेति ॥ हेमारविन्दस्य यो मकरन्दरसः तस्योपयोगः आस्वादनं यस्या इति व्यधिकरणबहुव्रीहिः। अथवा हेमारविन्दमकरन्दरसः उपयोगः उपजीवनसाधनं यस्या इति विग्रहः। अस्मिन्पक्षे उपयुज्यते अनेनेत्यकर्तरि च कारके संज्ञायामिति घञ्। तिमिङ्गिलमातङ्गमकरनक्रादिभिर्भयङ्करस्य जलधेर्मध्ये दृश्यमानां कलहंसकन्यां को विश्वसेत्। न कश्चिदपि कलहंसकन्यैवेयमिति विश्वासं विदध्यादित्यर्थः। अत्र दृष्टान्तोऽलङ्कारः। यथाह— "दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्।" इति। एवं निरूप्य गच्छन् आर्यनिवासभूमिं प्रत्यभिजानाति— एष इति ॥ पूर्वं पर्णशालानिर्माणानन्तरं मयोद्दिष्टः प्राप्यत्वेनाङ्गीकृतः प्रदेशः एषः। अथवा आर्येण पूर्वं निर्दिष्टः पर्णशालां कृत्वाऽत्रैवागच्छेति सङ्केतित इति। रामप्रवेशसङ्गतिसिद्ध्यर्थमिदं वचनम्। अथ राघवः सर्वराक्षसवधप्रतिज्ञानन्तरं तदुत्साहमवलम्ब्य वर्तमानः पञ्चवटीं भयानकयातुधाननिषेवितामाकर्ण्य सञ्जाततद्दर्शनोद्वेलकुतूहलः तन्निवासं राक्षसवैरसङ्घटनाद्द्वारभूतं मन्यमानः सौमित्रिसीताभ्यां सह तन्मध्यगताया आर्याया: गोदावर्यास्तटमासाद्य पर्णशालानिर्माणार्थं लक्ष्मणं नियुज्य तत्तरङ्गसम्पर्कशीतलसमीरणसेवापनीयमानाध्वपरिश्रमस्सन् दश वर्षाणि ऋष्याश्रमे ऋषिपत्नीभिस्संलालिताया निवसन्त्या अस्या वनवासोऽप्येतावन्तं कालं साकेतनिवासतुल्य एवाभूत् इदानीं घोरतने विजनेऽस्मिन्नरण्ये निवासो यद्यस्या अनभिमतस्स्यात् तर्ह्ययमुत्साह एतद्वनवासाभावेनालब्धवैरावकाशत्वात् कुण्ठप्रसर एव भवेदित्यालोच्योत्साहाङ्गत्वेन सीताया वनवासाभिरुचिमुत्पादयन् अयोध्यानिवासात् वनवासस्य श्लाघ्यत्वं समर्थयते— देवीति ॥ पूर्वमस्माकं नगरे निवसतां वनवासो मुहूर्तमपि सोढुं न शक्यत इति प्रत्ययोऽभूत् इदानीं वनवाससौख्यमनुभवतो मम न केवलं वनवासो नगराधिवासतुल्य इत्येव बुद्धिरुत्पद्यते। किन्तु तस्मादयं सविशेष इति प्रतिभाति। इवशब्दोऽस्फुटावगमे। यथा दूराद्दृवि दृश्यमाने कश्चित् गौरिव दृश्यत इति। अत्र तु वनवासस्य सविशेषत्वनिश्चये सत्यपि अस्फुटत्वेनाभिधानं सीताचित्तानुवर्तनार्थम्। यदास्मदुक्तेऽस्मिन्नर्थे भवत्याः संवादः तदैव मम निश्चय इति इवशब्देन द्योत्यते। अनेन नायकस्य परच्छन्दानुवर्तित्वलक्षणं दाक्षिण्यं दर्शितम्। तदानीन्तनेन वनाभोगदर्शनेन प्रतिभाती-

उद्यानं वनभूमयः कुसुमितैरुद्गन्धयः पादपैः
शैला निर्झरहासिनो जलधरश्यामा गिरिः कृत्रिमः ।
नद्यः सारसमूर्च्छितोर्मिवलया घर्माभिषेकास्पदं
शीताः शीकरसङ्गमात्सुरभयो मित्रं सरोजानिलाः ॥

---

ति प्रतिभानस्य वर्तमानत्वमुक्तम् । न तु उभयोस्तारतम्यविचारमात्रेण । वन-वासस्य सविशेषत्वमेव दर्शयति— उद्यानमिति ॥ वने वसतामस्माकं कथमुद्यानानुभवसौख्यमिति चिन्ता न कार्या । सर्वा एवैता वनभूमयः उद्यानमेव । अत्र वनभूम्यात्मकस्योद्यानस्यायत्नसाध्यत्वं सर्वदा तत्र निवासलाभश्च विशेषः । नागरं ह्युद्यानं यत्नसाध्यम् । तस्य क्वाचित्कत्वात् सर्वदा तत्र निवासोऽपि न लभ्यते । कथं वनभूमीनामुद्यानत्वमत आह— कुसुमितैः ॥ पादसन्निहितसरित्सरःकुल्यत्वेनान्योन्याबद्धस्निग्धतमनिबिडपर्णशाखोपशाखैर्निरुद्धसूर्यमहोभिः पादपैरुद्गतो गन्धो यासु ताः । प्रच्छायशीतलाश्चेत्यर्थात् सिध्यति । वनवासिनां कथं क्रीडापर्वतारोहसौख्यानुभव इत्यत आह— एते शैलाः कृत्रिमो गिरिः क्रीडार्थं निर्मितः पर्वतः । अत्राप्ययत्नसाध्यत्वं परिणाहौन्नत्याधिक्यं च क्रीडापर्वताद्विशेषो विद्यते । विशेषान्तरमप्याह— निर्झरेति ॥ शैलशब्दसामर्थ्यात् प्रतीयमानः शिलायोगः निर्झरहासित्वे हेतुः । अत्र शिलासङ्घट्टनेन उद्गतफेनैर्निर्झरैर्हसन्त इव दृश्यमानाः सन्निहितनिर्झरजलत्वेनार्तास्निग्धवीरुद्वनशालित्वात् जलधर इव श्यामाः । अनेन श्यामलत्वधावल्ययोः सङ्करसञ्जातेन परभागविशेषेण क्रीडापर्वतात् दर्शनीयतमत्वमुक्तम् । शैलारूढानां स्वच्छतमलघीयःपाथोलाभेन छायासम्पत्त्या च अध्वपरिश्रमपिपासाद्युपशमः आतपादिपीडाभावश्च दर्शितः । प्रावृट्काले जलधरैः श्यामत्वमप्येषां संभवति । न ह्युक्तेषु गुणेष्वेकोऽपि गुणः कृत्रिमगिरावस्ति । ननु वने कथं स्नानार्थं तटाकादिलाभः अत आह— नद्यः घर्माभिषेकास्पदम् ॥ घर्माभिषेकस्य घर्मकाले स्नानस्यास्पदम् । तटाकादिर्ग्रीष्मकाले हि तटाकादिसलिलं न स्नानाय पर्याप्तमिति तत्काल एव ततो विशेषः स्फुटीभवति । अन्येष्वृतुषु नादेयस्य पाथसः आधिक्ये सत्यपि तटाकादिसलिलात् विशेषो न स्फुरति यतस्तदानीं तटाकादिसलिलं स्नानाय पर्याप्तमिति फलतो विशेषाभाव एवेति मत्वा घर्मपदं प्रयुक्तम् । अत्रापि पूर्ववदयत्नसाध्यत्वादिविशेषा विद्यन्त एव । विशेषान्तरमप्याह । सारसानां सलिलनिवासरतानां बलाकादीनामितस्ततः उड्डीयोड्डीय धावतां पक्षवातैर्नैसर्गिकसमीरणसहकारिभिर्मूर्च्छिताः द्विगुणं वर्धिता ऊर्मिवलयाः वलयाकारेण वर्तमानास्तरङ्गा यासु । अनेन तटाकादिभ्यो दर्शनीयतमत्वं पर्याप्तसलिलत्वं च दर्शितम् । कथं तर्हि वने व्यजनवायोरसंभवः अत आ-

**सीता—** अज्जउत्त जाव अहं जीवामि दाव एत्थ एव्व वसिदुं मे बुद्धी जइ तह ण किलंमदि साकेदे गुरुजणो ।

आर्यपुत्र यावदहं जीवामि तावदत्रैव वस्तुं मे बुद्धिः यदि तथा न क्लाम्यति साकेते गुरुजनः ।

**लक्ष्मणः—** ( विलोक्य ) अये अयमार्यः, अहो नु खलु कष्टं विधेः कर्म, नहि नहि कैकेय्याः । अम्ब कैकेयि,

---

**द—** शीता इति ॥ एते सरोजसम्पृक्ताः अनिला नः मित्रं व्यजनवायुः । यथोक्तं— "मित्रं व्यजनवायुस्स्यात्" इति । अत्राप्ययत्नसाध्यत्वादयो विशेषास्सन्ति । विशेषणद्वयेन पुनश्शैत्यं सौरभ्यं चापरं विशेषं वनसमीरणानां दर्शयति । सरोजसम्पर्कः कुसुमितपादपसंसर्गश्च सौरभ्यहेतुः । शीकरसङ्गमे नदीसम्बन्धो निमित्तम् । अत्र बहूनां वनभूमिशैलादीनां उद्यानक्रीडापर्वतादिभावस्यारोप्य विधीयमानत्वात् उद्यानादिबहुत्वमपि वने विशेषोऽस्तीति केचिद्वर्णयन्ति । वनभूमिशैलादयः संहत्यैव एकोद्यानक्रीडापर्वतादिभावमुपगच्छन्ति । एकवचनान्तोद्यानादिशब्दैः नगरगतोद्यानादिस्थाने तत्त्वेनारोप्य विधीयमानत्वात् । अतो महत्त्वमेव विशेषः न बहुत्वमित्यन्ये । अथ जानकी भर्तृसन्निधाननिरस्तसकलभया तदुपपादितमेवार्थं सविशेषमनुमन्यते— **आर्यपुत्रेति** ॥ न केवलं चतुर्दशसंवत्सरानेव वने वस्तुं बुद्धिः किन्तु यावदहं जीवामि तावत् अत्रैव वस्तुं मे बुद्धिः । नगराधिवासवनवासयोस्सौख्यविशेषे विमृश्यमाने चिरकालं नगरेण विप्रयुक्ताया अपि मम कदाचिदपि न गृहप्रवेशो रोचत इति एवशब्देन दर्शितम् । यदि तथा न क्लाम्यति साकेते अयोध्यायां गुरुजनः । तथेति क्लान्तेरतिशयं दर्शयति । यादृश्यातिशायिन्या क्लान्त्या वनवासः कर्तुं न शक्येत तादृशी क्लान्तिर्यदि न भविष्यतीत्यर्थः । अनेन न केवलं तस्याः कर्मैव भर्त्रनुसारि किन्तु चित्तवृत्तिरप्यनुसारिणीति दर्शितम् । ततश्च सीतायाः सम्पूर्णस्वीयालक्षणत्वं दर्शितम् । यथोक्तं— "सम्पत्तौ च विपत्तौ या मरणेऽपि न मुञ्चति । सा स्वीया तद्गतं प्रेम जायते पुण्यकर्मणाम् ॥" इति । अथ सौमित्रिर्दूरादेवार्यदर्शनसमुद्भूतानन्दभक्त्यतिरेकसमाकुलः प्राह— **अयमयमार्य इति** ॥ अत्र द्विर्वचनं हर्षातिशयं द्योतयति । अथ तत्क्षण एव मणिकुण्डलहेमाङ्गदमकुटाद्याभरणच्छत्रचामरसिंहासनादिपरिच्छदामात्यसुहृद्भृत्यादिपरिवारपरिग्रहसमुचितं तदानीं तपोधनाचारजटाचीरधारिणं भार्यामात्रसहायं दृष्ट्वा करुणार्द्रीकृतहृदयः चिन्तयति— **अहो नु खल्विति** ॥ यत आर्यस्यायं दुरवस्थानुभवः पूर्वं स्वप्ने-

आर्येणांशुकमुज्झता धृतमभूदापाटलं वल्कलं
विन्यस्तं पदमार्यया वृकवधूपादाङ्कपांसौ पथि ।
सन्तापैस्तनुतामुपैति भरतः पर्याकुलाः कोसलाः
वैधव्यं हतमास्थिता त्वमपि ते धिक्कर्म सर्वङ्कषम् ॥१३॥

---

ऽपि न निरूपितः अत आश्चर्यमेवेदं अथैतदवस्थान्तरं विधिकृतं मन्यमानः सोद्वेगमाह— **कष्टं विधेः कर्मेति** ॥ अनुचितघटनाविषयत्वाद् विधेः कर्मणः कष्टत्वम् । अथ तदानीमेवार्यवसनदर्शनसमुद्बुद्धकैकेयीगतेर्ष्यावासनः तद्दुर्व्यापारहेतुकं दुरवस्थाविशेषं निश्चित्य तस्य विधिकृतत्वं निषेधति— **न हि नहीति** ॥ कस्य कर्मेत्यपेक्षायामाह— **कैकेय्या इति** ॥ कर्मेत्यनुषङ्गः । अथ प्रसङ्गेन तद्दौरात्म्यविलसितहेतुकत्वेन सर्वसम्बन्धिजनदुःखातिशयं परामृश्य तद्गतकारुण्येन कैकेयीगतेर्ष्यातिशयेन च तामेव सम्बोध्याह— **आर्येणेति** ॥ अम्ब कैकेयि ते यदिदं— "तन्मे वरद्वितयमाश्रुतपूर्वमेव याचे बिभर्तु भरतस्तव राज्यलक्ष्मीम् । वर्षाणि तिष्ठतु चतुर्दश दण्डकायां सौमित्रिमैथिलसुतासहितश्च रामः ॥" इत्येवंरूपेण वचनेन मन्थरामुखेनाभिषेकनिरोधनादिकं कर्म तत्कुत्सयामि । सर्वङ्कषमित्यनेन न केवलं परेषामेव सन्तापकारणम् । किंतु आत्मनोऽपीति दर्शितम् । सर्वङ्कषत्वमेव समर्थयते आर्येणेत्यादिना वाक्यपञ्चकेन । यस्य तव कर्मणः प्रभावादंशुकमुज्झता न-तूज्झितवता तत्काल एवापाटलं वल्कलं धृतं च । अंशुकशब्दो मणिकुण्डलमकुटादीनामप्युपलक्षकः । स्वपुत्रस्य राज्यलक्ष्मीलाभार्थमभिषेकनिरोधनमेव कर्तव्यम् । तत्र पुनर्यदपरमार्यस्य वनवासाभ्यर्थनं कृतं तत्र निमित्तविधुरः प्रद्वेष एव कारणमिति भावः । अत्रांशुकपरित्यागवल्कलधारणयोः समकालत्वाभिधानेनाभिषेकमहोत्सवदर्शनार्थं समागतानां युगपदेव तदवस्थाद्वयं पश्यतां महत्करुणमभूदिति द्योत्यते । अस्तु नाम महासत्त्वतया सर्वव्यसनसहिष्णोरार्यस्य वनवासाभ्यर्थनं यदिदमार्यायाः शिरीषकोमलाङ्ग्याः वनवासप्रवर्तनासाहसिक्यं तदतीव नैर्घृण्यमावेदयतीत्याह- आर्यया वृकवधूनां पादाङ्काः लक्षणया पदविन्यासजास्तदाकाराः संस्थानविशेषाः येषु ते तादृशाः पांसवो यस्मिन् । अथवा तत्पादानामङ्काश्चिह्नभूतास्तदाकारत्वात् पांसवो यस्मिन् । एतच्च व्याघ्रादिपदचिह्नानामप्युपलक्षणम् । अनेन विरलमनुष्यसञ्चारत्वेन क्रूरसत्त्वसान्निध्यस्मारकत्वेन च भयजनकत्वं मार्गस्य दर्शितम् । वधूशब्देन पूर्वं सखीभिर्दर्शितमार्गायास्स्वैरं क्रीडार्थमुद्यानादिगमनं इदानीं तत्स्थाने वृकवध्वस्सञ्जाता इति करुणातिशयो व्यज्यते । तादृशे पथि पदं विन्य-

यावदार्यमुपसर्पामि । ( उपसृत्य ) जयत्वार्यः ।

रामः— लक्ष्मण किमवसितस्तवारम्भः ।

लक्ष्मणः— आर्य अथ किम् ।

रामः— तेन हि तस्य मार्गमादेशय ।

लक्ष्मणः— यदाज्ञापयत्यार्यः । इत इतः ।

( सर्वे परिक्रामन्ति )

रामः— ( लक्ष्मणस्य मुखरागं विलोक्य ) वत्स लक्ष्मण

मार्गे निर्वृतिमार्गमार्गणपरानाराधयन्तो मुनीन्
स्वैरं सेविततीर्थसिन्धुपयसो दूरं निरस्ताधयः ।
मात्रा लक्ष्मण केकयेन्द्रसुतया व्याजेन नीता वयं
स्वामुत्सृज्य धुरं भुवो मुनिवनं यातव्यमिक्ष्वाकुभिः ॥७

---

त्वं यस्य कर्मणः प्रभावादिति शेषः । यदर्थमिदं कृतं तदप्यन्यथैव सञ्जातमित्याह— सन्तापैरिति ॥ न केवलं राज्यं नाद्रियते किन्तु आर्यवियोगपितृविनाशादिहेतुकैः सन्तापैः तनुतां कृशतामुपैति । उपगमनस्य वर्तमानत्वाभिधानेन सन्तापानामयथावदनुवृत्तिं दर्शयति । अत्रापि त्वत्कर्मैव निमित्तम् । किञ्च त्वत्कर्मनिबन्धनैः रामादिदुरवस्थाविशेषैः सर्व एव कोसलवासिनो जनाः पर्याकुला वर्तन्ते । आस्तामन्ये त्वमप्यात्मीयेन कर्मणा हतमत्यन्तनिकृष्टं वैधव्यमास्थिता । न हि स्त्रीणां वैधव्यादन्यत् अत्यन्तनिकृष्टमवस्थान्तरमस्तीत्याह— वैधव्यमिति ॥ अथ राघवस्सीताया वनवासाभिरुचिमुत्पाद्य लक्ष्मणेन कृतसमुदाचारः पर्णशालां प्रति गच्छन्नेव मध्येमार्गं तन्मुखरागं विलोक्य तस्य कैकेयीविषयसंरम्भहेतुत्वमाशङ्क्य तदनुबुध्यमान इव तद्भावप्रकाशनार्थं कैकेयीकृतस्य कर्मणः उपकारत्वमुपपादयति— मार्गे इति ॥ संरम्भदूषितहृदयस्यानवधानमाशङ्क्यावधानलाभार्थं लक्ष्मणेति सम्बोधनम् । वयं केकयेन्द्रसुतया मात्रा व्याजेन मुनिवनं नीताः । उत्तरवाक्यगतो मुनिवनशब्दोऽत्रापि द्रष्टव्यः । केकयेन्द्रसुतयेत्यनेनाभिजनसमुचितव्यापारसमर्थं तस्यां बहुमानं दर्शयति— मात्रेति ॥ न केवलं पितृपत्नीत्वेनैव तस्या मातृत्वं अपि तु हितप्रेरणयापीति दर्शितम् । तेन च भक्त्यतिशयो व्यज्यते ॥ व्याजेनेति ॥ अमी यौवनश्रीमदान्धाः स्वयमात्महितं न बुध्यन्ते । बोधिता अपि विषयभोगेच्छया न कुर्वन्त्येव । अतो येनकेनापि प्रकारेण अमी हिते प्रवर्तयितव्या इति मत्वा भरता-

लक्ष्मणः— सत्यमाह लोकः "न सन्त्यगुणा गुणवतां" इति।

रामः— लक्ष्मण किं नाद्यापि शान्तस्ते मातरि संरम्भः।

---

धिपत्यलाभात्मकं व्याजमाश्रित्यैवं कृतम्। अनेन तस्या वात्सल्यातिशयो व्यज्यते। नीता इत्यनेन यस्मिन्कर्मणि स्वयमेव प्रवर्तितव्यं हन्त तस्मिन् बलात् परप्रेरणया प्रवृत्तिः सञ्जाता इति पूर्वं स्वयमकरणात् सन्तापो व्यज्यते। कथं व्याजेनेत्यवगम्यते यतो दूरं निरस्ताधयोऽभूमेति वाक्यसमाप्तिः। आधिशब्देन दुरितापूर्वं लक्ष्यते। लक्षणाफलं च तस्याधिवदत्यन्तहेयत्वावगमः। दूरमित्यनेन दुरितनिदानभूतस्याविद्याख्याज्ञानस्यापि निरासं दर्शयति। तेन च पुनः संसारानुबन्धाभावो दर्शितः। दुरितापूर्वनिरासे हेतुमाह। मार्गे मार्गे स्वैरं तन्त्रावापादिराजकार्यचिन्ताभावात् यथेष्टं सेवितं तीर्थभूतानां सिन्धूनां गङ्गायमुनादीनां पयः यैः। अज्ञाननिरासे हेतुमाह— **निर्वृतिमार्गेति** ॥ निर्वृतिप्राप्तये यो मार्गः श्रवणमनननिदिध्यासनादिः तस्य मार्गणं तत्त्वरूपप्रकारविचारः तस्मिन् परान् निरतान्मुनीन् निर्वृतिमार्गज्ञानार्थमाराधयन्तः तेन तदुपदेशबलाल्लब्धेनात्मज्ञानेनाविद्यानिरासो दर्शितः। यथोक्तं— "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति। ननु राज्ञां राज्यपरिपालनमेव हि कुलधर्मः। अतस्तत्परित्यागेन वनवासो दोषायैव भवेत्। अत आह— **स्वामिति** ॥ इक्ष्वाकुभिरित्यनेनादिराजादिक्ष्वाकोरारभ्य सर्वेषामेव वनवासाविच्छेदं दर्शयति। तेन च वनवासोऽपि कुलधर्म इति दर्शितम्। उत्सृज्येत्यनेन पूर्वं पित्राद्यपेक्षयैव राज्यपरिपालनमङ्गीक्रियते। यदा तत्समर्थः पुत्रोऽमात्यो वा लभ्यते तदा तत्परित्यागेन वनवासमेवाद्रियन्त इति वनवासस्य प्राधान्यं दर्शितमिति। अस्यापि वचनस्योद्यानं वनभूमय इत्यस्येव सर्वराक्षसवधोत्साहाङ्गत्वमस्त्येव। तथाहि योऽयं सर्वराक्षसवधात्मकोऽर्थः प्रतिज्ञातः तत्रैको लक्ष्मण एव सहायत्वेन निरूपितः। तत्र यदि सोऽपि राज्याभिलाषात् वनवासं राक्षसवैरसङ्कटनाहेतुभूतं नाभिनन्देत् ततो भिन्नमतित्वेन तस्य साहाय्यकमस्थिरमापद्येतेति मत्वा वनवासस्य श्रेयस्तरत्वं समर्थितम्। अनेनैवाभिप्रायेणोत्तरत्र निर्बन्धेन तत्तद्युक्तिविशेषैः राज्यस्य दोषवत्त्वप्रकाशनेन कैकेय्याः अपराधाभावप्रतिपादनेन च लक्ष्मणेनैव संवादं कारयिष्यते अहमेवापराद्ध इति ॥ **सत्यमिति** ॥ यतः अत्यन्तापकारिण्यामपि कैकेय्यामुपकृतिशीलत्वमारोपितमतो लोको यदेवमाह तत्सत्यमित्यर्थः। कथमाहेत्यत आह। गुणवतां जनानामगुणा जना न सन्तीति। गुणवन्तः स्वान् प्रत्यपकारिणोऽपि उपकर्तृत्वेनैव गृह्णन्तीत्यर्थः। अथ तस्य मातृदोषद्योतकं वचनमाकर्ण्य किञ्चित्सञ्जातेर्ष्यः तत्संरम्भोपशमनार्थं उ-

लक्ष्मणः— आर्य ।

मात्रोः प्रस्नाविभिस्स्तनैस्त्वयि मुदा सम्फुल्लदृष्ट्योस्तयोः
तातस्याश्रुजलैस्समं शिरसि ते हैमात्क्षरन्त्यो घटात् ।
आपस्तत्र वसिष्ठमन्त्रजयिना मन्त्रेण रुद्धा यया
तां लोकोत्सवकालरात्रिमदयां मन्ये कथं मातरम् ॥ १५ ॥

---

पक्रमते— लक्ष्मणेति ॥ मातरीति ॥ अपराधिन्यपि माता सर्वथा वन्द्यैव । नापि भवन्तं प्रति मात्रा किञ्चिदपराद्धम् । अतस्तादृश्यां मातरि संरम्भ एव तावदनुचितः । जातस्यापि तस्य येयमद्य यावदनुवृत्तिः सात्यन्तमनुचितेति भावः । अथ मातृशब्दप्रयोगेण कुपितो भूत्वा तस्या मातृभावमतदर्हेण कर्मणा प्रतिक्षिपति— मात्रोरित्यादिना ॥ यया मुदा प्रस्नविभिः स्तनैः सह वर्तमानयोः तयोर्मात्रोः मुदा सम्फुल्लदृष्ट्योः सत्योः । यस्य च भावेन भावलक्षणामिति सप्तमी । तातस्याश्रुजलैस्समं हैमाद्घटात्ते शिरसि क्षरन्त्यः आपो मन्त्रेण रुद्धा इत्यन्वयः । अथवा स्तनशब्देन तद्विकारस्तन्यं लक्ष्यते । प्रस्नविभिरित्यनेन प्रस्नवनफलभूतं निष्यन्दनं लक्ष्यते । ततश्च निष्यन्दमानैः स्तन्यैस्समं क्षरन्त्य इत्ययमर्थस्सम्पद्यते । मात्रोरित्यनेन स्तनप्रस्नवनदृष्टिविकासादिभिरनुभावैः कौसल्यावदेव सुमित्राया अपि वात्सल्यातिशयो दर्शितः । क्षरन्त्य इत्यनेन प्रारब्धापरिसमाप्तस्यावशिष्टस्य कर्मणो मध्ये विनाशनेन दोषातिशयो दर्शितः । निरुद्धा इत्यत्रापि स्तन्यैरश्रुजलैश्च सममित्यनुषज्यते । यतः कारणभूतहर्षनिरोधेन तेषामपि निरोधो भवति अनेन भर्तृमनोरथभङ्गनिमित्तो दोषो दर्शितः । वरद्वितयाभ्यर्थनात्मकस्य वचनस्यानन्यश्राव्यत्वं दशरथकर्णयोरेव निवेद्यमानत्वात् मन्त्रत्वं वसिष्ठमन्त्रविरोधित्वप्रतीत्यर्थं मन्त्रशब्देन तदुपादानं कृतम् । वसिष्ठेन प्रयुक्तो यो मन्त्रः तं जयतीति । अयमभिप्रायः । अनुष्ठेयार्थप्रकाशनद्वारेण मन्त्राणामनुष्ठानाङ्गत्वं प्रसिद्धमेव मन्त्राधिकरणोक्तन्यायेन । अतोऽत्र वसिष्ठमन्त्रस्याभिषेकाङ्गत्वं सोऽयमभिषेककर्मत्रकाशनद्वारेण तन्निर्वर्तनाय प्रवृत्तस्तन्निरोधविषयेण कैकेयीमन्त्रेण विजितोऽभूत् । अनेन सर्वलोकवन्द्येन वसिष्ठेन क्रियमाणस्य कर्मणो निरोधान्महदतिक्रमनिबन्धनो दोषो दर्शितः । यथोक्तं— "हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ।" इति । लोकस्य उत्सव आनन्दः तस्य कालरात्रिः संहारदेवता अभिषेकनिरोधस्य निरुद्धेत्यनेनोक्तत्वात् । उत्सवशब्देन तदुत्सवजनित आनन्दो लक्ष्यते । अनेन तस्यास्सर्वलोकविद्वेषास्पदत्वं दर्शितम् । सीतया सह घोरतरविपिनवासप्रेरणया अदयामित्युक्तम् । एवंभूतां कथं मातरं मन्ये वस्तुतो

रामः— ( कर्णौ पिधाय ) शान्तं पापं शान्तं पापम् ।

हृते राज्ये भवान्भक्त्या प्रत्याचष्टे स्वमातरम् ।
अहो सन्तोषबाह्यानामधर्मैकरतं मनः ॥ १६ ॥

पश्य बाल पापात्मनः क्षत्रियस्य

साधारणी नयविदां धरणिः कलत्रं
अस्त्राणि मित्रमरयः सहजाः सुताश्च ।

---

मातापि सा न मातृबुद्धया सम्माननीयेति मन्य इत्यनेन दर्शितम् । अथ रामो मातुरधिक्षेपमसहमानः कर्णौ पिधाय तच्छ्रवणोद्भूतस्य पापस्योपशममाशास्ते— शान्तं पापं शान्तं पापमिति ॥ यदेतन्मातुरधिक्षेपश्रवणसञ्जातं पापं तच्छाम्यतु । क्तप्रत्ययः आशंसायाम् । तथा काशिकायामुक्तं अयत्नैकतो भयेत्यस्य व्याख्यानसमये आशंसायां वर्तमाने वार्थे क्तो वर्णनीयः इति । द्विर्वचनमधिक्षेपश्रवणजनितमुद्वेगातिशयं सूचयति । अथ किञ्चित्संरम्भमुपगम्य तत्कृतस्याधिक्षेपस्यात्यन्तमयोग्यत्वमुपपादयति— हृत इति ॥ हृते दुःखहेतुत्वेन दुरितानुबन्धित्वेन चात्यन्तं गर्हणीये राज्ये भक्त्याभिलाषेण भवान् स्वमातरमधिक्षिपति यत्तत् अहोऽतिकष्टं इति सम्बन्धः । मातरि भक्तिरुचिता तां न करोति राज्ये पुनः प्रत्याख्यानमेवोचितं तत्र भक्तिं करोतीति चेति विपर्ययस्यायोग्यत्वं दर्शयितुं भक्तिग्रहणम् । उक्तस्यावस्थान्तरस्यैवंभावे हेतुं तटस्थया वृत्त्या दर्शयति । सन्तोषो लब्धे परितोषः अलब्धगोचरया तृष्णया रहितः तस्मात् बाह्यानां तद्रहितानामित्यर्थः । तेषां जनानामलब्धलाभार्थं मनोऽधर्मैकरतं हिंसानृतवादगुर्वधिक्षेपादितत्परं भवतीत्यर्थः । अयं च सन्तोषाख्यो गुणः पूर्वैस्सर्वगुणोत्कृष्टत्वेनाभिहितः । यथा— "अकिञ्चनोऽपि सन्तुष्टश्शेते सर्वाङ्गविज्वरः । असन्तुष्टोऽसकृत्क्लेशानाप्नोत्यपि सुरेश्वरः ॥" इति । अथ क्षत्रियस्य राज्याधिपत्ये दोषान् वक्तुमारभते— पश्येति ॥ बाल गुणदोषविवेकासमर्थ मद्वचनं सावधानं विचारय । लब्धाधिपत्यस्य क्षत्रियस्य धरणिर्नाम कलत्रं नयविदां साधारणी । भोग्यत्वेन भरणीयत्वेन च धरण्यां कलत्रत्वारोपः । एकेन केनचिन्नयविदा सादरं परिगृह्य भुज्यमाना ततोऽधिकमन्यं नयषट्कोपायचतुष्टयप्रयोगनिपुणं दृष्ट्वा तदैव प्रथमं परित्यज्य तमेव पतित्वेन परिगृह्णाति । स्वैरिणीव सौन्दर्यादिगुणातिशायिनं पुनस्ततोऽन्यमधिकं दृष्ट्वा इममपि परित्यज्य तमभिसरति । प्रथममेवापरित्यक्तं कालानुगुण्येनोत्कृष्टगुणं नयविदामित्यविशेषनिर्देशेन क्षत्रियत्वमप्यतन्त्रीकृत्य वैश्यं शूद्रं वान्यं नयज्ञानाधिकमुपपन्न-

पापात्परस्य पतनं नरकेषु लाभः
द्वे चामरे च सितमातपवारणं च ॥ १७ ॥

लक्ष्मणः— नाहं राज्याभिलाषाद्ब्रवीमि ।

---

जतीति दर्शितम् । यदा पुनर्नयप्रयोगनैपुण्यं बहूनां समानं भवति तदा युगपदेव केनचिद्भागेनताननुवर्तते कटाक्षमधुरालापस्पर्शनालिङ्गनादिभिः गणिकेव बहून्कामिनः । एवं कलत्रसौख्यस्यास्थिरत्वमुक्त्वा मित्रसम्पत्तेरविश्वसनीयत्वमाह— मित्रमिति ॥ क्षत्रियस्य मित्रमस्त्राण्येव । इतरपरिसङ्ख्यापरं चैतद्वचनम् । अनेन क्षत्रियस्य बन्धौ विमृश्यमाने सर्वेषामेवास्त्रव्यतिरिक्तानां अमात्यसुहृद्भृत्यादीनां वञ्चनशीलत्वेनाविस्रम्भणीयत्वादस्त्रेष्वेवावञ्चकत्वेन मित्रत्वं परिशिष्यत इति दर्शितम् । पुत्रादिसौख्याभावं दर्शयति— अरय इति ॥ लब्धाधिपत्यस्य क्षत्रियस्य सहजास्सुताश्च अरय एव न केवलमुपकारं न कुर्वन्ति किन्त्वन्यत्रोपकारकत्वेन प्रसिद्धा अपि राज्ञामत्यन्तमपकारिण एव भवन्ति । क्षत्रिया हि राज्यनिमित्तं भ्रातरं पितरं च निघ्नन्तो दृश्यन्ते । यथोक्तं— "क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः । भ्रातापि भ्रातरं हन्याद्येन घोरतरं तमः ॥" इति । एवं राज्यस्य पुत्रमित्राद्यैहिकफलविरोधित्वमुक्त्वा पारत्रिकफलविरोधित्वमाह— पापादिति ॥ परस्य पापान्नरकेषु पतनं वर्णाश्रमानुरूप्येण यथाविधि धर्मस्थितिप्रवर्तनस्य पापीयसां दण्ड्यानां यथार्हं दण्डनस्यानीषत्करत्वात् तद्गता दोषा राजानं प्राप्नुवन्तीति परस्य पापात्प्रत्यवायः । एवं तावद्दोषबहुलत्वेन राज्यस्यापरिग्राह्यत्वमुक्तम् । इदानीं दोषभूयिष्ठेऽपि तस्मिन्यदि वेश्यासङ्गमादाविव तात्कालिकं सुखं स्यात् ततस्तदपेक्षया तदाद्रियेतापि न तु तदस्तीत्याह— लाभ इति ॥ एतदपि वचनमितरपरिसङ्ख्यापरम् । लभ्यत इत्यनया व्युत्पत्त्या लाभ इति फलमेवोच्यते । क्षत्रियस्याधिपत्यफलं किमिति विमर्शे क्रियमाणे श्वेतच्छत्रात् चामरद्वयाच्च नान्यदसाधारणं फलमस्ति श्वेतच्छत्रचामरद्वयातिरिक्तस्य फलस्याधिपत्येन विनापि सुलभत्वेन न तदर्थमाधिपत्यं प्रार्थनीयम् । श्वेतच्छत्रादेरपि नानन्यसाध्यसुखहेतुत्वमस्ति । उपायान्तरेणाप्यातपनिरोधादिफलस्य साधयितुं शक्यत्वात् । अतः पूर्वोक्तदोषदुष्टत्वेन न विशेषतः किञ्चित्फलं लभ्यत इति भावः । अतो यः क्षत्रियः एवंभूतं राज्यमभिलषति स पापात्मैव । ततश्च राज्याभिलाषेण मातुः प्रत्याख्यानमनुचितमिति पूर्वश्लोके पर्यवसानं द्रष्टव्यम् । अथार्यस्य शिक्षापरं वचनं श्रुत्वा किञ्चित्प्रशान्तसंरम्भः राज्ये भक्त्येत्यनेनोक्तं राज्याभिलाषस्य हेतुत्वं निरस्यति— नाहमिति ॥ नाहं राज्याभिलाषात् अभिषेकनिरोधस्यायोग्यत्वं ब्रवीमि । अथार्येण किमित्यादिना

रामः— किमन्यत्तव कोपकारणम् ।

लक्ष्मणः— विपर्यस्तः क्रम इति ।

रामः— यद्येवमहं तव प्रथममुपालम्भविषयः । पश्य

इन्द्रकल्पे स्थिते राज्ञि स्नेहपर्यश्रुलोचने ।
अभिषेकाय निर्लज्जो यस्सिंहासनमास्थितः ॥ १८ ॥

सीता— सच्चं एव्व भणिदं अज्जउत्तेण ।

सत्यमेव भणितमार्यपुत्रेण ।

लक्ष्मणः— "वयसा परिणतोऽहं" इति तातस्तथा त्वयि प्रतिपन्नः ।

रामः— ननु भरतः कनीयान्मे ।

---

पृष्टः क्रमविपर्यासस्य हेतुत्वं दर्शयति— **विपर्यस्त इति** ॥ विपर्यस्त इव यतोऽस्मत्पूर्वैरनाचरितस्य क्रमविपर्यासस्य माता निमित्तमभूत् । अत एव वद्वि-षयः कोप इत्यर्थः ॥ **यद्येवमिति** ॥ यदि मयि स्थितवति भरतस्य राज्याधिकारः संवृत्त इत्ययं क्रमभङ्गो जनन्युपालम्भहेतुः तर्हि प्रथममहमुपालम्भविषयः अधि-क्षेपविषयः प्रथमं मया क्रमभङ्गस्य कृतत्वात् । क्रमभङ्गमेव दर्शयति— **पश्येत्यादिना** ॥ **इन्द्रकल्प इत्यादि** ॥ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः इति कल्पप्प्रत्ययः । अनेन राज्यभरणासामर्थ्यं न निमित्तं मयि राज्यनिधाने इति दर्शितम् । किं पुनर्निमित्तमित्यत आह— **स्नेहपर्यश्रुलोचन इति** ॥ अ-नेन स्नेहातिशय एव मयि राज्यनिधाने निमित्तमिति दर्शितम् ॥ **राज्ञि स्थित इति** ॥ क्रमप्राप्तं राज्यमङ्गीकृत्य जनानुरागपात्रभूते स्थिते सतीत्य-र्थः । योऽहं पितुरनुवादं श्रेयस्त्वेन मन्यमानः क्रमभङ्गमविगणय्य सर्वजन-समक्षं निर्लज्जो भूत्वाभिषेकाय सिंहासनमास्थितस्सोऽहमिति पूर्वग्रन्थेनान्व-यः । सत्यमेव भणितमार्यपुत्रेणेत्यनेन लक्ष्मणवचनं सीताया अप्यनभिमत-मिति दर्शयति । अथ सौमित्रिरार्येण समर्थितमुपालम्भविषयत्वं निरस्यति— **वयसेति** ॥ तातः अहं वयसा परिणतो वार्धकमुपगत इति सञ्चिन्त्य तथा तेन प्रकारेण वसिष्ठादिकुलगुरुभिरमात्यैस्सह निरूप्य तदनुवादपुरस्सरमभिषेकपूर्व-कं त्वयि राज्यं प्रतिपन्नः प्रतिपादितवान् । कर्तरि निष्ठा । अन्तर्भावित-ण्यर्थत्वं च द्रष्टव्यम् । अत्र परस्वत्वापादनस्वस्वत्वनिवृत्त्योरभावात् प्रति-पादनं न्यसनमेव न दानम् । अत एव त्वयीत्युक्तम् । अत्रेन्द्रकल्पपदेनाभि-प्रेतस्य राज्यरक्षणसामर्थ्यस्य वयःपरिणतिरूपेण निमित्तेनापगममभिप्रेत्य

लक्ष्मणः— अहमशक्तः पृथिवीं रक्षितुमिति ।

रामः— बाल पश्य ।

न कथं रक्षितुं शक्तः पृथिवीमात्मदेवताम् ।
दानवोन्मूलनं तेजो यस्य द्यामपि रक्षति ॥ १९ ॥

लक्ष्मणः— किन्तु पुत्रस्नेहात्तथा चापल्यं कृतमिति ।

रामः— एष लोकस्वभावः बहुपुत्राणामेकस्मिन् ईषत्पक्षपातः । तव किं साधारणो भ्रातृस्नेहः ।

---

वयसा परिणत इत्युक्तम् । तमभिप्रायमजानान इव रामभद्रो वयआधिक्यमेव राज्यनिधाननिमित्तत्वेनोक्तमिति कृत्वाह— ननु भरतः कनीयान्मे इति ॥ अयमभिप्रायः । यदि वयआधिक्यं मयि राज्यनिधाने निमित्तं तर्हि भरतमपेक्ष्य मम वयोऽधिकत्वेन मयि स्थितवति तस्यापि राज्यपरिग्रहः समुचित एवेति । अथ लक्ष्मणः स्वाभिप्रायं विवृणोति— अहमिति ॥ न वयःपरिणतिमात्रं मया निमित्तत्वेनोक्तम् । किन्तु तत्कृतं राज्यरक्षणासामर्थ्यं भवतः पुनः वयःपरिणतिकृतमसामर्थ्यं नास्तीति भावः । अथ राघवस्तदुक्तां तातस्य तादृशीमशक्तिं प्रतिक्षिपति— बालेत्यादि ॥ लोकोत्तरपराक्रमे पितरि रक्षणसामर्थ्याभावं शङ्कमानस्त्वमत्यन्तं मूढोऽसीति भावः ॥ पश्येति ॥ सर्वलोके गीयमानं पितुः पराक्रममनुस्मरेत्यर्थः । आत्मैव देवता यस्या इति देवताशब्दो रक्षणगुणयोगेन दशरथे गौणः । सर्वदेवतात्मकत्वात् राज्ञो मुख्यमेव वा देवतात्वम् । यथाह— "अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः ।" इति । अस्मिन्पक्षे स्वस्वामिभावसम्बन्धमभिप्रेत्य बहुव्रीहिः । यस्य तेजः अनात्मदेवतामपि द्यामप्यपि रक्षतीति द्रष्टव्यम् । रक्षतीति वर्तमाननिर्देशेन वयःपरिणतौ सत्यामपि रक्षणसामर्थ्यं दर्शितम् । एवं क्रमभङ्गदोषे निरस्तेऽप्यपरितुष्यन् मातरि दोषान्तरमाविर्भावयति— किन्त्विति ॥ किन्त्वित्यनेन यौक्तिकज्ञानहेतुकः क्रमभङ्गाभावस्यानिच्छयानुवादः सूचितः । अस्तु क्रमभङ्गाभावः किन्तु तया पुत्रस्नेहात् चापलमभिलषितलाभमुद्दिश्य संभ्रमेणानुचितं कर्म कृतमिति यत् स एव दोषः । अथैतस्याप्यदोषत्वमाह । एष लोकस्वभावः न केवलमस्मन्मातुरेव यत् बहूनां पुत्राणां मध्ये कस्मिंश्चित्पुत्रे ईषत्पक्षपातः ईषदधिक इत्यध्याहारः । अथवा बहवः पुत्रा यासामिति बहुव्रीहिः । बहुपुत्राणां जननीनामित्यर्थः । भवतु नाम स्त्रीस्वभावत्वेन पुत्रस्नेहनिमित्तचापलं किमयमपि स्त्रीस्वभावः यद्भर्तृविपत्कारणत्वमित्यभिप्रायेणाह— सर्वथेति ॥ सर्वैः प्रकारैर्यथा पूर्वो-

लक्ष्मणः— किं बहुना सर्वथा तातस्य मरणकारणं सैव संवृत्ता।

रामः— मा मा। तातं प्रति [1] निरपराधः स गुरुजनः। पश्य

नियमसलिलं पित्रोर्हेतुं निरीक्षणवन्ध्ययोः
क्षिपति कलशं तोयाधारे पटुध्वनितं सुते।
उषसि मृगयां याता राज्ञा वनद्विपशङ्कया
रभसमिषुरुन्मुक्तः कालादसूनहरत्स्वयम् ॥ २० ॥

सीता— जुज्जइ तादिसेण विहिणा होदव्वम्। का उण अण्णहा अत्ताणं लोअं अ विणासेदि।

युज्यते तादृशेन विधिना भवितव्यम्। का पुनरन्यथा

---

क्तानां दोषाणां तेन तेन प्रकारेणान्यथात्वं समर्थितम् तथा तस्यास्तातस्य मरणकारकत्वाभावे हेतुत्वेन न कश्चिदपि प्रकारोऽस्तीति भावः। अत एव सैवेत्यनन्यकारणत्वनिश्चयः। न हि स्त्रीणामस्मात् गरीयानन्यदोषोऽस्तीति भावः। अथ मरणकारणत्वं निषेधति— मा मेति॥ एवं वोच इति शेषः। गुरुजन इत्यनेन स्नेहविश्वासबहुमानात्मिका भक्तिः व्यज्यते॥ पश्येति॥ रागद्वेषरहितो भूत्वा तत्त्वं निरूपयेत्यर्थः। निरपराधत्वमुपपादयति— नियमेति॥ मुनिसुते कस्मिंश्चिन्मुनिकुमारे एकस्मिन्दिवसे उषसि आसन्ने सति निरीक्षणवन्ध्ययोः अन्धत्वेन वार्धकेन चाश्रमाद्बहिः पदमपि चलितुमसमर्थयोरनन्यापत्ययोरात्मनः पित्रोः। पिता मात्रेत्येकशेषः। नियमार्थं सलिलमाहर्तुं तोयाधारे नद्यां पटुध्वनितं यथा भवति तथा कलशं प्रक्षिपति सति। ध्वनिपटुत्वं वनगजशङ्काबीजत्वेनोक्तम्। मृगयां याता वनं प्राप्य नित्यमेवातिसक्त्या कालविशेषमनालोच्य मृगयां कुर्वता राज्ञा न त्वन्येन केनचिदनुचरेण। अस्मत्पित्रा ध्वनिसादृश्यनिमित्तया वनगजभ्रान्त्या रभसं वेगेन भवितव्यतावलेन लक्ष्यस्वरूपमनवधार्य मुनिसुते इषुरुन्मुक्तः। इषून्मोचनकथनेनैव तस्य वधोऽर्थादावेदितः। तद्वधस्य साक्षादनुक्तिः तादात्विकं वृत्तान्तमनुसन्दधतः करुणावैवश्यादिति द्रष्टव्यम्। मुनिसुते उन्मुक्तो य इषुरिति यच्छब्दाध्याहारः। स एव कालात्कालं प्रतिपाल्य तातस्यासूनहरत्। मुनिकुमारवधहेतुकं मुनिशापं द्वारीकृत्य स शरः मरणहेतुः सञ्जात इति यावत्। अत्र मुनिशापे पितृनाशहेतुत्वेनोक्ते मुनेर्दोष उक्तस्स्यादिति मत्वा तदनुक्तिः। यतस्तातस्याबुद्धिकृतेन पूर्वकृतेन स्वकर्मणैवेदमवस्थान्तरं सञ्जातम् अतोऽत्र न कस्यचिदपराधोऽस्तीति भाव इति। युज्यते तादृशेन वि-

आत्मानं लोकं च विनाशयति ।

लक्ष्मणः— यद्येवमहमेवापराद्धः । प्रसीदत्वार्यः । कथाप्रसङ्गादविदितान्तरमागतास्स्मः पर्णशालाम् । प्रविशत्वार्यः ।

रामः— लक्ष्मण त्वयाप्येकान्ते परिश्रमोऽपनीयताम् ।

लक्ष्मणः— यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तः )

रामः— ( पर्णशालां प्रविश्य सर्वतो विलोक्य सविस्मयं ) देवि पश्य पश्य सर्वतोमुखनैपुण्यं वत्सलक्ष्मणस्य । इह हि

धनुर्ज्यानिर्घोषैस्सरभसमपास्तं मृगकुलं
कृता पर्णैश्शाला शयनमपि पुष्पैः प्रतिनवैः ।
लताभिर्वेत्राणां विरचितमभूदासनमिदं
जलैस्सिन्धोः सिक्ता बलिकुसुमभाजो वनभुवः ॥ २१ ॥

---

धिना भवितव्यम् । का पुनरन्यथात्मानं लोकं च विनाशयति इति सीताग्रन्थस्य सुगम एवार्थः ॥ यद्येवमिति ॥ यः पुत्रवियोगदुःखहेतुकमरणविषयेण मुनिशापेन पितृविनाशस्तत्रायमेवापराद्धः न माता । यतोऽज्ञानान्मया अनपराधिन्या मातुरुपालम्भः कृतः अतो यदज्ञानान्मया प्रलपितं तत्र बालोऽयमिति बुद्ध्या क्षन्तव्यमित्यभिप्रायेणाह— प्रसीदत्वार्य इति ॥ अस्याः कथायाः न केवलमस्मदज्ञाननिवृत्तिरेव प्रयोजनं किन्त्वयमपरोऽस्माभिरनिरूपितः मार्गदैर्घ्याज्ञानात् तन्निमित्तक्लेशाभावोऽपीत्याह— कथाप्रसङ्गादित्यादि पर्णशालामित्यन्तेन ॥ अथ रामो लक्ष्मणमात्मकृतमपराधमुद्दिश्यानुतापयुक्तमालोक्य प्रसन्नो भूत्वा प्रविशत्वार्य इति तद्वचनमाकर्ण्याविरताध्वसञ्चरणपर्णशालानिर्माणादिपरिश्रान्तं तं खेदोद्गमनिःश्वासादिभिरालक्ष्य कृपार्द्रचित्तस्तमेकान्ते विश्रमार्थं नियुङ्क्ते— त्वयापीति ॥ अपिशब्देन आवामस्यां पर्णशालायां कञ्चित्कालं विश्राम्याव इति दर्शितम् । गुरुजनसन्निधौ स्वैरासिकाभावमभिप्रेत्योक्तं— एकान्त इति ॥ अथ प्रविशन्नेव विस्मयनीयाशिल्पसंस्थानशालिनीं पर्णशालां दृष्ट्वा सीतां प्रति लक्ष्मणं प्रशंसति— देवीति ॥ सर्वतोमुखं सर्वत्र व्याप्तं नैपुणशब्देन तत्कार्यं संस्थानचातुर्यादि लक्ष्यते । लक्षणाफलं चादर्शगतप्रतिबिम्बवन्नैपुणस्यावगतिः । तेन च शिल्पसौष्ठवातिशयो व्यज्यते । मम धनुर्ज्याबन्धबन्धूकृतः इत्यादिमहाकविप्रयोगदर्शनात् धनुर्ज्याशब्दप्रयोगस्यादोषः ॥ अपास्तं मृगकुलमिति ॥ इ-

सीता— अज्जउत्त कुसुमपल्लवसमिद्धिहिं पण्णसालाविभूदिहिं कदत्थिदो पासादवहुमाणो ।

आर्यपुत्र कुसुमपल्लवसमृद्धिभिः पर्णशालाविभूतिभिः कदर्थितः प्रासादबहुमानः ।

रामः— देवि विविक्तं च स्थानमिदम् । सेव्यतां वनान्तमारुतः ।

तथा हि

अशङ्किता शिथिलय पांसुधूसरं
स्तनांशुकं शुकहरितं शुकालपे ।
विशोषिताधरकमलं विसर्पता
तरङ्गितं तव मुखगन्धवाहिना ॥ २२ ॥

---

त्रस्ततो धावतां मृगाणां भयपारवश्येनान्तराप्राप्तसजातीयविजातीयसङ्कराणि पदानि दृष्ट्वा पूर्वं श्रुतस्य ज्याघोषस्य मृगनिरासहेतुत्वं निश्चिनोतीत्यवगन्तव्यम् । ज्याघोषेत्यस्य व्याख्यानमत्रापि द्रष्टव्यम् ॥ आर्यपुत्र ॥ कुसुमपल्लवसमृद्धिभिः ॥ कुसुमपल्लवात्मिका समृद्धिः यासु ताभिः ॥ पर्णशालाविभूतिभिः कदर्थितः अधरीकृतः ॥ प्रासादबहुमान इति ॥ अनेन सीतायाः वनवासाभिरुचेरनुवृत्तिः प्रासादादावनास्था च दर्शिता । अथ सीतामध्वपरिश्रान्तां दृष्ट्वा करुणार्द्रहृदयः प्राह— देवीति ॥ विविक्तं चेति ॥ चशब्दो हेतौ । यत इदं स्थानं पर्णशालाद्वारं विविक्तं विजनं अतोऽयं गुणत्रयसम्पन्नो वनान्तमारुतो यथेष्टं सेव्यताम् । अत्र न सेवामात्रं विधेयं तस्यायत्नसाध्यत्वात् । अतस्सेवाप्रकार एव विधेयः । तमेव सेवाप्रकारं दर्शयति— अशङ्कितेति ॥ शङ्काभावे विविक्तत्वं हेतुः ॥ शुकालपे इति ॥ शुकस्यालपः आलापः स इवालपो यस्याः । न केवलं मधुरया आकृत्या नयनानन्दमेव वितनोषि । तत्तन्मधुरालापैः श्रोत्रानन्दमपि वितरसीति भावः । अनेन प्रियंवदत्वं नाम नायकगुणो दर्शितः । अध्वगमनसमुद्भूतेनायासेनात्यर्थं विसर्पता विविधं निस्सरता । विशोषिताधरकमिति विसर्पणक्रियाविशेषणम् । यथाधरो विशोषितो भवति तथा विसर्पता । कप्रत्ययः तादृशमधरं पश्यतस्तस्य करुणातिशयं द्योतयति । तस्या अध्वपरिश्रमादिव्यसनानुभावस्यात्मस्नेहनिमित्तत्वानुसन्धानेन खेदातिशयश्च द्योत्यते । तादृशेन तव मुखगन्धवाहिना मुखोद्गतेन निःश्वासमारुतेन । मुखगन्धवाहिनेत्यनेन निःश्वासमारुतस्य त्वन्मुखगन्धोद्वहनलाभेनान्येभ्यो मारुतेभ्योऽतिधन्यत्वमस्तीति दर्शितम् । तेन च सीताप्रशंसा द्योतिता । न चास्य

सीता— जं अज्जउत्तो आणवेदि । यदार्यपुत्र आज्ञापयति ।

( निष्क्रान्तौ )

इति शक्तिभद्रविरचिते चूडामणिनाटके
प्रथमोऽङ्कः ॥

---

शब्दस्य संज्ञिमात्रपरत्वेनावयवार्थविवक्षा नास्तीति वाच्यम् । सीताप्रशंसापरे वाक्ये प्रतीयमानायास्तत्प्रशंसायाः अपरित्याज्यत्वात् । यथोक्तं— "प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥" इति । एवंभूतेन निःश्वासमारुतेन तरङ्गितं तरङ्गवद्वर्तमानम् । अनेन कम्पातिशयोपलक्षितेन निःश्वासाधिक्येनायासातिशयो व्यज्यते । तेन च तस्या महती विश्रमापेक्षा दर्शिता । नायकस्य तद्व्यसनपर्यालोचनेन खेदातिशयश्च सूचितः । तद्व्यसनमवगम्य विश्रमार्थं तां नियुञ्जानस्य तस्य परच्छन्दानुवर्तित्वलक्षणं दाक्षिण्यमस्तीत्यपि दर्शितम् । एवंभूतं शुकवद्धरितं पांसुधूसरितमेतत् स्तनांशुकं शिथिलयेति शिथिलीकृत्याशङ्किता भूत्वा स्वैरं वनान्तमारुतं सेवस्वेत्यर्थः । पांसुप्रसरं प्रायशो मध्याह्ने भवतीति पांसुधूसरशब्देनाङ्कावसाने कालोपलक्षणमपि कृतमिति द्रष्टव्यम् । एतेनाप्यङ्कस्यार्धदिवसप्रयोज्यत्वमपि ज्ञेयम् । अत एव महतः सूच्यस्येतिवृत्तस्याभावाद्विष्कम्भकादिचतुष्टयेन विनाङ्कावतारमाश्रित्य द्वितीयाङ्कारम्भोऽविच्छेदेन करिष्यते । एवं सति द्वितीयाङ्कावसाने सन्ध्यावर्णनमुपपद्यते । अङ्कावतारश्चैवं लक्षितः । "अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः ।" इति ।

इत्याश्चर्यचूडामणिव्याख्यायां प्रथमोऽङ्कः समाप्तः ॥

## ॥ अथ द्वितीयोऽङ्कः ॥

( ततः प्रविशति ललितसुकुमारवेषा शूर्पणखा )

**शूर्पणखा**— ( सनिर्वेदं ) पुणो वि तं एव्व रामं पदिभावे पसादइस्सम् । जस्स वअणप्पच्चएण लक्खणमासादिअ मूढसमिद्धं सरस्सदी विअ अकिदत्था एव्व णिवुत्तम्हि । अज्ज वि दाव मए पण्णसालस्स पस्से मुधा सो अअरुणो अपुरुसो अधम्मिओ अदक्खिणो सो मणुस्सअंतु पडिवालिदो। अहो णु खु मए मन्दभाआए सेल्लो संपादिओ ! अहवा एत्तिआइ वा तस्स भाअहेआणि जेण अहं पच्चादिट्ठम्हि । होदु इमस्स पुव्वजस्स सव्वं णिवेदिअ पच्चा जाणिस्सम् । ( परिक्रामति )

पुनरपि तमेव रामं पतिभावे प्रसादयिष्यामि यस्य व-

---

आश्चर्यचूडामणिनाटकेऽयमाद्यो यथाबुद्धि निरूपितोऽङ्कः ।
अङ्को द्वितीयोऽपि गभीरहृद्यो व्याख्यास्यतेऽस्माभिरनन्यचित्तैः॥

अथ निशाचरी मदनमार्गणविवशीकृतस्वान्ता पर्णशालासमीपं प्राप्य लक्ष्मणागमनं प्रतिपाल्य चिरमवस्थिता तमदृष्ट्वा दैन्यचिन्तेर्ष्यामर्षसन्तापनिर्वेदजडताविषादादिभावपरम्परातरङ्गितविरहदुःखमयपारावारनिमग्ना जृम्भणदीर्घश्वासादिभिरनुभावैरुपलक्षिता ततः प्रतिनिवृत्य कथञ्चिदीषदात्मानं संस्तभ्य किमिदानीं मया कर्तव्यमिति संशय्य चिरं विमृश्यानन्तरकरणीयं कर्म निश्चिनोति— **पुनरपीति** ॥ स हि पूर्वं लक्ष्मण इव मां वञ्चितवानिति मत्वेदमुक्तम् ॥ **तमेव राममिति** ॥ अभिगम्यगुणैर्युक्तं न तु लक्ष्मणवदतिदुर्धर्षम् ॥ **पतिभावे** ॥ पतिभावं निमित्तीकृत्य ॥ **प्रसादयिष्यामीति** ॥ न कठोरहृदयं लक्ष्मणमित्येवशब्देन दर्शितम् ॥ **यस्य वचनप्रत्ययेन** ॥ लक्ष्मणस्त्वां परिग्रहीष्यतीति वचने विश्वासेन ॥ **लक्ष्मणमासाद्य सरस्वतीव मूढसमृद्धम्** ॥ भावे मूढशब्दो निष्ठान्तः। मोहेनाज्ञानेनाधिकमित्यर्थः । अत्र सरस्वतीपक्षे आसादनं मूढोऽयमित्यवगममात्रम् । यथा सरस्वती मूढोऽयमिति ज्ञात्वा तस्मान्निवर्तते तं नाभिगच्छतीत्यर्थः । तथाहमपि कामसुखानभिज्ञं म-

चनप्रत्ययेन लक्ष्मणमासाद्य मूढसमृद्धं सरस्वतीव अकृतार्थैव निवृत्तास्मि। अद्यापि तावत् मया पर्णशालायाः पार्श्वे मुधा सः अकरुणः अपुरुषः अधार्मिकः अदक्षिणः स मनुष्यजन्तुः प्रतिपालितः। अहो नु खलु मया मन्दभाग्यया शल्यः सम्पादितः। अथवा एतावन्ति वा तस्य भागधेयानि येनाहं प्रत्यादिष्टास्मि। भवतु अस्य पूर्वजस्य सर्वं निवेद्य पश्चात् ज्ञास्ये।

---

त्वाकृतार्थैव निवृत्तास्मि ॥ अकृतार्थेति सरस्वत्यां योजनीयम्। सरस्वतीवेत्यनेन सरस्वतीवदात्मनोऽपि विरिञ्चापत्यत्वेनाभिजात्याधिक्यं दर्शितम्। तेन तद्दोष एव निवृत्तिकारणं नात्मदोष इति द्योतितम्। स एव रामः पुनः प्रसादितस्सन् मयैषा वृथा परिक्लेशितेति करुणयावश्यं मां परिग्रहीष्यतीति तद्बुद्धिरनेन वचनविन्यासेन गम्यते। अथ कदाचिदप्यननुभूतपूर्वामवमानप्राप्तिमुद्दिश्य निर्वेदाधिक्यमवलम्बमाना सानुतापं चिन्तयति। अद्यापि तावन्मया पर्णशालायाः पार्श्वे मुधा स मनुष्यजन्तुः प्रतिपालित इत्येकं वाक्यम्। सो इत्यादि अदक्खिणो इत्येतदन्तं वाक्यान्तरम्। एकवाक्यत्वे तच्छब्दद्वयस्यासंभवप्रसङ्गात् ॥ अद्यापीति ॥ सङ्केतसमयमतिक्रम्यापि चिरकालं प्रतिपालित इति दर्शितम् ॥ मनुष्यजन्तुरिति ॥ जननमात्रसिद्धो दुःखभूयिष्ठः प्राणिविशेषो जन्तुरित्युच्यते। यतोऽयं भागधेयाभावात् स्वयमुपनतं सुखं द्वेष्टि अतो जन्तुरेवेति भावः। यथोक्तं— "तृणानामिव हि व्यर्थं नृणां जन्म सुखद्विषाम्।" इति। अथोभयगतेनानुरागेण डोलायमाना सा पुनरपि लक्ष्मणं प्राप्यानागमकारणं गुरुपरिचर्यापारतन्त्र्यमुपेक्षा वेत्यनवधार्य यदिदं मया रामाभिगमनमारब्धं तन्नापनयः किं मे न स्यादित्याशङ्क्य स्वयमेव तन्नास्तीति लक्ष्मणस्यानुभूतदोषानुस्मरणेन निश्चिनोति— अकरुण इति ॥ यतो वनमध्ये एकाकिनीं शरणागतां मां परित्यज्य सङ्केतव्याजेनापाक्रमत् अतोऽकरुण एवायमिति मत्वाकरुण इत्युक्तम्। असत्यवादित्वेनाधार्मिक इत्युक्तम्। रसमार्गानभिज्ञत्वात् अपुरुष इत्युक्तम्। यतः प्रथमदर्शनसमये वाङ्मात्रेणाप्यनभिनन्द्य तूष्णीं गतवान् अतोऽस्य दाक्षिण्यलेशोऽपि नास्तीति मत्वादक्षिण इत्युक्तम्। अत्र दाक्षिण्यं परच्छन्दानुवर्तित्वम्। यतस्स लक्ष्मण एवंभूतः अतो राममेवानेवंभूतमुपगम्य प्रसादयिष्यामीति वाक्यपर्यवसानम्। एवं पूर्वदृष्टेन स्वभावेन लक्ष्मणस्यानधीनत्वं मन्यमाना मानभङ्गसमीरणसंवर्धितस्य विरहानलस्योपशमोपायमपश्यन्ती सनिर्वेदमात्मानमवजानाति। अहो नु खल्वित्यव्ययसमुदायो नुशब्दसामर्थ्याच्चिन्तायां वर्तते। यतो मया शल्यं संव्यूढं मन्दैव निर्भाग्यै-

( ततः प्रविशति रामः सीतया सह )

रामः— वैदेहि विदूरे सर्वं विस्मयनीयतया श्रूयते । पश्य—

शैलायामिभिरम्बुवाहनिवहच्छायैस्त्रियामाचरैः
सेव्या पञ्चवटीति मे मतिरभूदुद्वेलकौतूहला ।

वाहमिति । मन्दत्वमत्र विधेयम् । शल्यशब्देन दुःखातिशयो लक्ष्यते । अनेन शल्यसमुत्थदुःखवत् सर्वदानुवृत्तिरसह्यत्वमप्रतीकार्यत्वं च दर्शितम् । अथ निशाचरी प्रसादितो राम एव मदीयं शल्यं नूनमपाकरिष्यतीति विचिन्त्यात्मनो निर्भाग्यत्वं निषेधति— अथवेति ॥ पक्षव्यावृत्तावथवाशब्दः । पक्षान्तरं परिगृह्णाति— एतावन्ति वा तस्य भागधेयानि येनाहं प्रत्यादिष्टास्मि ॥ वाशब्दोऽवधारणे । येन यस्मात् त्रैलोक्यनाथस्य रावणस्य सहोदरी सर्वाभिलषणीयसम्बन्धाहं प्रत्याख्याता । अतस्तस्य लक्ष्मणस्य भागधेयमेतावदेव नाधिकं अल्पतममित्यर्थः । एवं रामपरिग्रहप्रत्याशयात्मनः स्मरसन्तापोपशममासङ्कल्प्य लक्ष्मणात् सञ्जातस्य मानभङ्गस्य याकाचित्प्रतिक्रिया कर्तव्येत्यध्यवस्यति— भवत्विति ॥ अमुष्य लक्ष्मणस्य पूर्वजस्य रामस्य सर्वं प्रत्यादेशप्रकारं निवेद्य पश्चात् ज्ञास्यामीति वाक्यार्थः । अनेन वचनाविन्यासेनैवंभूतस्तस्या दुरभिप्रायो गम्यते । सर्वथानृतवचनेन मां वञ्चितवन्तं दुरात्मानं लक्ष्मणमुद्दिश्य प्रतिपरिभवः कर्तव्य एव । स यदि प्रत्यादेशप्रकारनिवेदनात् पूर्वमेव क्रियते ततस्तद्धेतुकेन कोपेन रामो न मामङ्गीकरिष्यत इति प्रथमं तन्निवेदनमेव कर्तव्यम् । पश्चात्स रामो यदि मां परिग्रहीष्यति ततः क्रमेण तं वशीकृत्य तयोः परस्परं प्रद्वेषमापाद्य प्रतिपरिभवं करिष्यामि । यदि सोऽपि लक्ष्मणवन्मामवजानीयात् ततः तावुभावपि प्रति यत्किञ्चिदकल्याणं कर्माचरिष्यामि । तत्किमिति पश्चान्निरूप्य ज्ञास्यामीति । अथ राघवः सीतया सह पर्णशालामधिष्ठाय वनान्तमारुतसेवापनीयमानाध्वपरिश्रमो भूत्वा यातुधानदर्शनोत्सुकस्सन् भयङ्करानेकराक्षससमाकीर्णत्वेन श्रुतां पञ्चवटीमतथाविधां दृष्ट्वा समुद्रमध्यस्थसुवेलगिरिशिखरनिवेशितायाः लङ्कायाः अपि पूर्वं विस्मयनीयत्वेन श्रुतायाः अतथाविधत्वमुत्प्रेक्ष्यात्मीयायाः पराक्रमशक्तेरनुरूपपरिपन्थिलाभाभावमाशङ्क्यापरितुष्यन् प्रस्तुते विषयविशेषे अनुभूतस्य श्रवणाननुरूपदर्शनात्मकस्य धर्मस्य सीतां प्रति सामान्यनिष्ठत्वं प्रतिपादयति— वैदेहीत्यादिना ॥ यस्य यदभिलषितं तस्य तदुद्दिश्येष्टजनेन सह व्यवहारो दृष्टः अतस्सीतां प्रत्येतन्निवेदनेन राक्षसदर्शनौत्सुक्यातिशयो गम्यते । विदूर इत्यनेन श्रवणस्यानन्तरमेव न विसंवादः किन्तु चिरेणैवेति दर्शितम् । एतदेवोपपादयति— शैलेति ॥ पञ्चवटीति ॥ पञ्चवट्या एव घोरसत्त्वसमाकीर्णत्वेन श्रुतायाः कौतूहलहेतुत्वमस्ति

सेयं देवि चिरोचितामुपनयत्युद्यानयोग्यां श्रियं
श्रोतुर्विस्मयनीयवस्तुविषयाः शैलाटवीसागराः ॥ १ ॥

सीता— अज्जउत्त अत्थि मह वि कोदूहलं वणन्तरप्पवुत्ताइ अच्च-
रिआइ पच्चा अन्तेउरणिच्चवासस्स पुणो पुणो कहअमाणाए
विह्मयं उप्पादेदुं ।

आर्यपुत्र अस्ति ममापि कौतूहलं वनान्तरप्रवृत्तानि
आश्चर्याणि पश्चादन्तःपुरनित्यवासस्य जनस्य पुनः पुनः
कथ्यमानस्य विस्मयमुत्पादयितुम् ।

---

विशेषतस्त्रियामाचरैः सेव्येति श्रुतायाः ॥ सेव्येति ॥ सेवनयोग्यत्वाभिधानेन त-
थामन्यतो भयाभावेन स्वैरसञ्चारक्षमत्वं दर्शितम् ॥ त्रियामाचरैरिति ॥ सर्व-
प्राणिनामुपरतिकाले सञ्चरणशीलत्वेन दौरात्म्यातिशयो व्यज्यते । पुनरपि शै-
लायामिभिरम्बुवाहनिवहच्छायैरिति विशेषणद्वयेन कौतूहलातिशयहेतुत्वमा-
वेदितम् । अत्रान्येषां जनानां भयातिशयनिमित्तत्वेन स्थितस्यैवंभूतराक्षस-
श्रवणस्य उद्वेलकौतूहलहेतुत्वमुच्यमानमपरिच्छेद्यानुभावत्वं महासत्त्वतां चैतस्य
द्योतयति— सा विस्मयनीयत्वेन श्रुता ॥ इयं अविस्मयनीयत्वेन
दृश्यमाना ॥ चिरोचितां चिरपरिचितामित्यर्थः ॥ उद्यानयोग्यां श्रिय-
मुपनयति ॥ वृद्धिसन्निधिं प्रापयति । उद्यानयोग्यामित्यनेन पञ्चवट्या न
केवलं राक्षससन्निधानकृतमेव विस्मयनीयत्वं किन्तु स्वरूपाश्रितमपीति दर्शितम् ।
पञ्चवटीसंज्ञके अटवीविशेषेऽनुभूतं श्रवणाननुरूपदर्शनात्मकं धर्मं सामान्य-
निष्ठत्वेन सर्वशब्देनोक्तं विवृणोति— श्रोतुरिति ॥ विषयशब्द आश्रयवाची ।
अत्र सागरतरणरावणवधादेरीषत्करत्वेन स्वपराक्रमाननुरूपत्वमालोच्यापरितोषो
व्यज्यते । अत्र कविना सर्वराक्षसवधहेतुकस्यार्थकामानुबद्धस्य धर्माख्यस्य
नाटकफलस्य हेतुभूतः पर्णशालानिवासः आरम्भसंज्ञकेनावस्थाविशेषेण का-
र्यांशेन सह निबद्धः । तत एव तत्समन्वयलक्षणो मुखसन्धिरप्यभिहित इति
ज्ञेयम् । "स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।" इति बीजलक्षणम् ।
"औत्सुक्यमात्रमारम्भः फललाभाय भूयसे । मुखं बीज- मुत्पत्तिर्नानार्थ-
रससंभवा ॥" इत्यारम्भमुखसन्ध्योर्लक्षणम् । सर्वत्र बीजारम्भमुखसन्धीनामन-
तिभेदेनापृथग्भावात् उदाहरणैकत्वम् । अत एव दशरूपकव्याख्याने उक्तं
"बीजारम्भोदाहरणमेव मुखसन्ध्युदाहरणमनुसन्धातव्यं" इति । आर्यपुत्त
पश्चात् वनवासानन्तरं वनान्तरप्रवृत्तान्याश्चर्याणि आश्चर्यकराण्यर्थान्तराणि पुनः
पुनः कथयन्त्या ममान्तःपुरनित्यवासस्य जनस्य विस्मयमुत्पादयितुं कुतूहलम-

शूर्पणखा— ( उपसृत्य ) जेदु जेदु अज्जो ।

जयतु जयत्वार्यः ।

रामः— सुन्दरि किं दृष्टस्त्वया लक्ष्मणः ।

शूर्पणखा— आं दिट्ठो । आं दृष्टः ।

रामः— किं श्रुतं तेन मे वचनम् ।

शूर्पणखा— सुदं एव्व । श्रुतमेव ।

रामः— किमिति तेन त्वं प्रत्याख्याता ।

शूर्पणखा— तवस्सिधम्मेण अज्जं उवअरन्तस्स मे किं तुए समाहिभङ्गस्स णिमित्तभूदाए त्ति ।

तपस्विधर्मेण आर्यमुपचरतो मे किं त्वया समाधिभङ्गस्य निमित्तभूतयेति ।

रामः— ( सस्मितमात्मगतम् ) तस्यानेन वचनेन भवितव्यम् ।

---

स्तीत्यन्वयः । अन्तःपुरनित्यवासस्येत्यनेन कदाचिदप्यद्भुतवस्तुदर्शनाभावेन तच्छ्रवणौत्सुक्यातिशयो दर्शितः । पुनः पुनरिति कथनस्य पौनःपुन्यं प्रश्नस्य पौनःपुन्यमावेदयति । अनेनाप्यौत्सुक्यातिशयो गम्यते । एतदुक्तं भवति । न केवलं मम विस्मयनीयपदार्थदर्शन एव कौतूहलं सञ्जातं किन्तु तन्निवेदनेनान्तःपुरवासिनो जनस्य विस्मयोत्पादनेऽपीति । अथ राघवः शूर्पणखामात्मसमीपं प्राप्य कृतसमुदाचारां उपगतस्मरचापलामवलोक्य किञ्चित्सञ्जातनिर्वेदोऽपि सावहितो भूत्वा लक्ष्मणकृतप्रत्यादेशनिमित्तं प्रत्यागमनं जानन्नप्यजानान इव तत्प्रकारबुभुत्सया सादरं परिपृच्छति— **सुन्दरीति** ॥ लोकोत्तरसौन्दर्यादिगुणसम्पन्नाया भवत्याः परिग्रहाभावो न घटते यतस्तस्माद्दर्शनमेव प्रत्यागमननिमित्तत्वेन शङ्क्यत इत्याशयः । दर्शनमेव सञ्जातं न तत्फलमित्यभिप्रायेणाह— **दृष्ट इति** ॥ तमिममभिप्रायं जानन्नप्यजानान इव पृच्छति— **श्रुतमिति** ॥ श्रवणपूर्वकं मद्वचनं तदर्थानुष्ठानेनाङ्गीकृतं किमिति भावः । श्रुतमेवेत्येवशब्देन सूचितस्य प्रत्याख्यानस्य प्रकारं पृच्छति— **किमिति** ॥ केन प्रकारेणेत्यर्थः । अथ सा प्रत्याख्यानप्रकारं निवेदयति— **तपस्वीति** ॥ तपस्विनां धर्ममवलम्ब्य नित्यमार्यमुपचरतो मम किं त्वया समाधिभङ्गस्य निमित्तभूतयेति । अनेन वासो वल्कलमित्यत्रोक्त एवार्थोऽभिहित इति ज्ञेयम् । अथ राघवः प्रत्याख्यानप्रकारश्रवणेन तुष्टो भूत्वा लक्ष्मणं मनसा

( प्रकाशम् ) भद्रे पुनरपि भवतीं परिश्रमपथे नियोक्ष्यामि ॥

शूर्पणखा— मा मा एव्वं अज्जेण भणिदुं । एत्थ एव्व वसमाणा अज्जपादाइ अहं उवअरिस्सं ।

मा मैवमार्येण भणितुम् । अत्रैव वसन्ती आर्यपादावहमुपचरिष्यामि ।

सीता— एसा खु तवस्सिणी अज्जउत्तं अहिकारिअ उप्पण्णेण सिणेहेण अत्तणो गुणपक्खपादं विभावेदि ।

एषा खलु तपस्विनी आर्यपुत्रमधिकृत्योत्पन्नेन स्नेहेन आत्मनो गुणपक्षपातं विभावयति ।

रामः— ( शूर्पणखां विलोक्य ) भद्रे तवायं व्यवसायः मयापि

---

श्लाघते— तस्येति ॥ अनया मद्वचनेनात्मपरिग्रहे विज्ञापितेऽपि लक्ष्मण एनां न परिगृह्णातीति लक्ष्मणगतेन विश्वासेन पूर्वं मयैषा लक्ष्मणाभिगमनाय नियुक्ता । हन्त तत्तथैव जातमिति हर्षः ॥ तस्येति ॥ बाल्यात्प्रभृति निसर्गत एवापथान्निवर्तमानस्य ॥ अनेन वचनेनेति ॥ समाधिभङ्गस्य निमित्तभूतां त्वां न परिगृह्णामीति परुषरूपेणादत्ताशाप्रसरेण । न तु मद्वचनमिव दत्ताशाप्रसरमित्यर्थः । तस्य पूर्वदृष्टस्य स्वभावस्यानुरूपमेवेदं वचनम् । अतः सत्यमेवानयोक्तमिति वाक्यपरिसमाप्तिः । अथ प्रकाशं तां लक्ष्मणप्रत्याख्यानेन सानुशय इव भूत्वा प्रियंवदत्वमपरित्यजन्नेव प्रत्यादिशति— पुनरपीति ॥ ईदृशपरिश्रमानर्हामपि भवतीं गत्यन्तराभावात्पुनरपि परिश्रमपथेऽनिच्छन्नपि विनियोक्तुमारभे । अत्र लटा नियोगप्रारम्भो दर्शितः । तेन च नियोगानर्हत्वं सूच्यते । अयमाशयः । त्वद्विधानामङ्गनानां सपत्नीकपुरुषपरिग्रहोऽतिदुस्सहः अत एव पुनरपि परिश्रमपथं नेतुं त्वामारभ्यते । तस्मात्सर्वोऽयं परिश्रमस्सुखोदर्कत्वात् सोढव्य इति । अथ निशाचरी भूयोऽपि लक्ष्मणाभिगमनं नियोक्ष्यमाणमाज्ञाय तन्निषेधति— मा मेति ॥ आर्येणैवं भणितुं मा मा व्यवसायः क्रियतामिति योजनीयम् । लक्ष्मणाभिगमनहेतुकं पूर्वमनुभूतं दुरवस्थाविशेषमनुस्मृत्य मा मेत्युक्तम् । यदि लक्ष्मणाभिगमनं नियोक्तुमारभ्यते तत्कदाचिदपि न करिष्यामीति भावः । तर्हि किं करिष्यसीत्यत आह— अत्रैव त्वत्समीप एव नित्यं वसन्ती अहमार्यपादस्य पादावुपचरिष्यामीति । नाहमतः परमन्यत्र गच्छामीति भवत्पादपरिचरणादन्यत् न करोमि चेति भावः । अथ राघवः तस्या आत्मपरिग्रहनिर्बन्धमवगम्य निसर्गसिद्धं गाम्भीर्यं प्रियंवदत्वं चापरित्यजन्नेव गम्भीरया वाचार्थतः प्रत्यादेशपर्यवसायिन्या प्रत्यादिशति— भद्रे इत्यादि ॥ व्यव-

प्रार्थनीयः । किन्तु—

साक्षात्कृत्य समित्समिद्धमनलं यस्या गुरोराज्ञया
हस्तं दत्तमजात्मजेन मुनिना धर्मार्थमालम्बिषि ।
साप्येषा पदमक्षरं जिगमिषोर्बन्धाय मे कल्पते
सन्नाहोऽयमतः परं सुवदने चिन्त्यस्त्वया चिन्त्यताम् ॥

---

सायशब्दो व्यवसीयत इति कर्मव्युत्पत्त्या व्यवसितवचनः । योऽयं मया सह संवासः त्वया व्यवसितस्सन् मां प्रति प्रार्थ्यते स मयापि प्रार्थनीयः प्रार्थयितुं योग्यः न तु प्रार्थ्येत इति भावः । प्रार्थनायोग्यत्वे हेतुं सम्बुद्ध्या दर्शयति— भद्रे इति ॥ सौन्दर्यादिसम्पदि विमृश्यमानायां भवत्या सह संवासः प्रार्थनायोग्य एव न खलु तादृशं भवत्यां किञ्चिदप्यवद्यमस्ति येन प्रार्थनायोग्यत्वं न स्यादिति भावः । एवं तर्ह्ययं जनोऽविलम्बमनुगृह्यतामित्याशङ्क्याह— किन्त्विति ॥ यद्यपि भवत्या सह संवासे सन्निधिर्योग्यता च विद्यत एव तथापि किञ्चिदुपरोधो भवति । कः पुनरुपरोध इत्यत आह— अक्षरं पदं जिगमिषोरिति ॥ एतद्विशेषणत्वेनोपात्तमपि विधेयतया व्याख्येयम् । अनेनाकाङ्क्षाभाव एवोपरोध इति दर्शितम् । पदशब्देन पद्यते गम्यते इति कर्मव्युत्पत्त्या ब्रह्माभिधीयते । यतः सर्वैर्विद्यास्थानैः ब्रह्मैव प्रतिपाद्यते । अथवा जन्माद्यस्य यत इत्यनेन न्यायेन जगदुत्पत्त्यादिस्थानत्वात् ब्रह्मणः पदशब्दवाच्यत्वम् । यद्यपि ब्रह्मणः स्वप्रकाशत्वेन निर्विकारत्वेन च विद्यास्थानगम्यत्वं जगदुत्पत्त्यादिकारणत्वं वा पारमार्थिकं नास्ति तथाप्युपनिषदर्थविचारजन्यस्य ज्ञानस्य ब्रह्मनिष्ठत्वात् आरम्भाधिकरणन्यायेन जगतो ब्रह्मविवर्तत्वाभ्युपगमाच्च तद्व्यवहारो घटते । न क्षरति विकुरुत इति अक्षरं जन्मादिविक्रियारहितमित्यर्थः । नित्यमिति यावत् । एतत्सत्यज्ञानानन्तानन्दाद्यात्मकस्य स्वरूपस्याप्युपलक्षणम् । बाधार्होऽयं प्रपञ्चः दृश्यत्वात् शुक्तिरजतवदित्यनुमानेनात्मव्यतिरिक्तस्य सर्वस्य भेदप्रपञ्चस्य मिथ्यात्वादात्मनश्च स्वप्रकाशत्वेन दृश्यत्वाभावात् सत्यरूपत्वं ज्ञानरूपत्वं सुखरूपत्वं च सुखमहमस्वाप्समिति सुप्तोत्थितस्य सुखानुभवपरामर्शस्यान्यथानुपपत्त्या सुखवत्परमप्रेमास्पदत्वादनन्यशेषत्वेन सर्वशेषित्वाच्च द्रष्टव्यम् । सत्यज्ञानाद्युपनिषद्वाक्येभ्योऽपि सुखादिरूपत्वमात्मनोऽपि ज्ञायते । उपनिषदस्तु पुस्तकवाचनानर्हत्वात् न लिख्यन्ते ॥ जिगमिषोरिति ॥ जीवब्रह्मैक्यनिष्ठेन ज्ञानेन नाहं मनुष्यः ब्रह्मैवाहमिति प्रागविद्याप्रभावितमनुष्यत्वाद्यध्यासनप्रतिषेधेनात्मनः पूर्वोक्तलक्षणब्रह्मत्वावधारणमेव ब्रह्मप्राप्तिः । तामिमां ब्रह्मप्राप्तिमिच्छतो मम त्वत्परिग्रहः कथं स्यादिति भावः । उक्तेऽर्थे विस्रम्भजननार्थमाह— सन्नाहोऽ-

यमिति ॥ अयमिति प्रत्यक्षदृश्यमानपर्णशालानिवासजटावल्कलादिधारणात्मकः सन्नाहप्रकारोऽत्र विधेयः । यत एवास्माकमक्षरपदगमनवाञ्छा भवति अत एव तदनुरूपः सन्नाहोऽस्माभिरवलम्बित इत्यर्थः । ननु यथा सीतया सह संवासः निवृत्तिमार्गविरोधी न भवति तथा मया सह संवासोऽपि तद्विरोधी न भवति अत आह— सेति ॥ तच्छब्देन परामृष्टं सीताया विशेषं दर्शयति— साक्षादिति ॥ अहं गुरोराज्ञयाजात्मजेन मुनिना सहितो भूत्वा समित्समिद्धमनलं साक्षात्कृत्य यस्याः दत्तं हस्तमालम्बिषीत्यन्वयः । धर्मार्थमित्यनेन परिणयनस्यानुरागपूर्वकत्वं निरस्तं न तु कामफलत्वं तस्यावर्जनीयत्वात् । न च विवाहस्य मोक्षपरिपन्थित्वं तस्याभावे मोक्षस्यैवासिद्धेः । तथा च मनुनोक्तं— "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥ अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् । अनिष्ट्वा चैव यज्ञैस्तु मोक्षमिच्छन्व्रजत्यधः ॥" इति । किञ्च "आश्रमादाश्रमं गच्छेत्" इत्यादिना "गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया । वेदव्रतानि वाचारं नीत्वाप्युभयमेव वा ॥ अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।" इत्यादिना च विहितत्वादुद्वाहस्यावश्यकर्तव्यत्वम् । मोक्षार्थिना धर्मानुष्ठानं कर्तव्यमेव जीवनं निमित्तीकृत्य विहितानां नैमित्तिकानामग्निहोत्रादीनामकामनया कृतानां दर्शपूर्णमासादीनां चोपात्तदुरितक्षयान्तःकरणशुद्ध्यादिसमर्पणद्वारेण मोक्षशेषत्वात् । नचानूढभार्यस्याग्निहोत्रादिकर्मानुष्ठानं संभवति तस्याग्न्याधानानर्हत्वेनानग्नित्वात् । तस्माद्धर्मानुष्ठानशेषत्वेनापि परिणयनमवश्यं कर्तव्यमेव ॥ गुरोराज्ञयेति ॥ धर्मार्थोऽपि विवाहः पितुराज्ञयैव कृतः न स्वाच्छन्द्येनेत्यर्थः ॥ अजात्मजेन मुनिनेति ॥ अनेनास्मत्कुलीनैः कुलगुरुणा वसिष्ठेन विना न किञ्चित्कर्मानुष्ठितपूर्वम् । अतो मयापि तेन विना न किञ्चिदनुष्ठेयमिति द्योतितम् ॥ हस्तं दत्तमिति ॥ "हरंस्तां चोरदण्डभाक्" इति स्मृत्या कन्यकाया अदत्ताया हरणे दोषस्मरणाद्दत्तमित्युक्तम् । तत्र हस्तदानेन कन्यादानमेवाभिप्रेतम् । यतः पाणिग्रहणमेव कन्यकाया आदानं तेन दानस्यापि हस्तप्रधानतया निर्देशः कृतः । दत्तमित्यत्र जनकावनिपालेनेति योग्यतया सिध्यति । पितरि सति अन्यस्य दातृत्वानर्हत्वात् । यथोक्तं— "पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥" इति । यत्पुनः पुरोहितकर्तृकं राजकन्यायाः स्मृत्यां हस्तदानं विहितं तदा शतानन्देनेत्यध्याहारः । तस्मिन्पक्षे पूर्वमेव मन्त्रोच्चारणपूर्वकं दत्तायाः कन्यकायाः पाणिग्रहणकाले हस्तस्योपयन्तृहस्तसमीपप्रापणमात्रं दानम् । न हि हस्तमात्रस्य स्वस्वत्वनिवृत्तिः परस्वत्वापादनं वा संभवति । अजात्मजेन मुनिना हस्तं दत्तमिति के-

**शूर्पणखा**— जइ एव्वं ण सक्कुणोमि अण्णदो गमिदुं। एत्थ एव्व वसमाणा जीविअं परिच्चइस्सम्।

यद्येवं न शक्नोमि अन्यतो गन्तुम्। अत्रैव वसन्ती जीवितं परित्यक्ष्यामि।

---

श्चिदाहुः। तदयुक्तं उपयन्तृपुरोहितत्वेन तस्य सन्निधौ सत्यपि योग्यत्वाभावात्। नच प्राधान्यात्तस्य योग्यत्वं प्राधान्यस्य विधानाभावात्। न च दातृपुरोहितत्वारोपेण तस्य विधिविषयत्वम्। एकस्यैव विधेर्गौणमुख्यभेदेन विषयभेदप्रसङ्गादित्यलमतिदूरमनेन। अत्र दत्तमित्यनेनैव विवाहस्य मुख्यत्वमपि दर्शितम्। तथा च स्मर्यते— "ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्॥ यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम्। सह धर्मश्चर्यतामित्युक्त्वा यद्दीयतेऽर्थिने॥ स कायः पावयेत्तज्जः षट् षड्वंश्यान्सहात्मना। आसुरो द्रविणादानात् गान्धर्वस्समयान्मिथः। राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात्॥" इति। तस्मादुक्तप्रकारेण परिगृहीता सैषा सीता न केनचिदपि हेतुना बन्धाय भवितुमर्हति। त्वत्परिग्रहस्तु पूर्वोक्तानां धर्मार्थत्वगुरुनियोगादीनामभावात् दोषायैव भवेदिति भावः। ननु यथा सीता परिगृहीता तथैव गुरुनियोगादिपूर्वकं यथाविध्ययं जनोऽपि परिगृह्यतामित्यत आह— **सैषापि मे बन्धाय कल्पत इति**॥ अपिर्विरोधे। वर्तमानसामीप्ये वर्तमानवद्वेति प्रत्यासन्ने भविष्यदर्थे लट्। अपिशब्दः शङ्काद्योतनार्थः। कल्पत इत्यनुषङ्गः कर्तव्यः। तथा चायमर्थः सम्पद्यते। उक्तेन प्रकारेण अक्षरपदप्राप्त्यनुकूलापि सैषा सीता बन्धाय भविष्यतीति यस्य महती शङ्का तस्य कथमन्याङ्गनापरिग्रहः स्यात्। विशेषतोऽरण्यमध्ये सहसा दृश्यमानाया अविदितकुलनामधेयायाः स्वैरिण्यास्तव परिग्रहोऽत्यन्तमधर्मायैव भविष्यतीति भावः। यतो मदीयमवस्थान्तरमीदृशम् अतः परमन्यदेव चिन्त्यम्। अथवा योऽयं मया सह संवासो व्यवसितः अतोऽन्यदेव चिन्त्यम्। तर्ह्यन्यदपि मदीयं हितं त्वयैव विचिन्त्योपदिश्यतामिति पुनरप्यनुबन्धमाशङ्क्याह— **त्वया चिन्त्यतामिति**॥ एतदपि मया न चिन्तनीयं को वास्मिञ्जगति त्वत्कटाक्षवशंवदो न भवति यो वा नाहमिव मुमुक्षुरित्यभिप्रायेणाह— **सुवदने इति**॥ अथ निशाचरी तदुक्तिसूचितं साक्षात्प्रत्यादेशमाकलय्य निर्वेदेर्ष्यामर्षविषादादिविवशीकृतस्वान्ता भेदप्रयोगेणादृष्टदोषशङ्काजनकेन तं वशीकर्तुमारभते— **यद्येवमिति**॥ यद्यतः परं कर्तव्यं कर्म मयैव चिन्तयित्वा कल्पनीयमिति तर्हि तन्निरूप्यावधारितमेव अहं भवद्गुणगणपाशानिगळिता भवत्सकाशादन्यत्र गमनं प्रति न शक्नोमि। अत्राशक्तिरेव हेतुः। एतन्निरूप्य कल्पितम्

**सीता**— अज्जउत्त ण खु दाव उवक्खणीओ से ववसाओ ।

आर्यपुत्र न खलु तावदुपेक्षणीयोऽस्या व्यवसायः ।

**रामः**— भद्रे भूयोऽपि लक्ष्मणाभिगमनार्थमेव भवतीं प्रार्थये ।

**शूर्पणखा**— संदं पावं, संदं पावं, अज्जस्स वअणं पमाणीकरन्तीए मए अपहत्थिदो इत्थिआसमुदाआरो ।

शान्तं पापं, शान्तं पापं, आर्यस्य वचनं प्रमाणीकुर्वत्या मया अपहस्तितः स्त्रीसमुदाचारः ।

**रामः**— भद्रे मा मैवम् । एष सनातनो धर्मः । पश्य

---

एतत्तु विमृश्याध्यवसितं किं तदित्यत आह— **अत्रैव निवसन्ती जीवितं परित्यक्ष्यामि** ॥ त्वदीयकारुण्यलेशलाभाशया कानिचिद्दिनान्यत्रैव निवसामि । यदि पुनस्तन्न लप्स्यते तर्हि दुःखास्पदमात्मानं भवत्पुरत एव परित्यक्ष्यामीत्यर्थः । अथ सीता तस्याः मरणव्यवसायमाज्ञाय पर्याकुलहृदया तस्यामनुग्रहं प्रार्थयते ॥ **आर्यपुत्र न खलु तावदुपेक्षणीयोऽस्या व्यवसाय इति** ॥ यत आर्यपुत्रनिबन्धनोऽस्याः जीवितपरित्यागव्यवसायः अत एषा अभिमतसम्पादनेनानुगृह्यतामित्यर्थः । अनेनार्जवं नाम स्वीयागुणो दर्शितः । यथोक्तं "स्वीया शीलार्जवादियुक्" इति । अथ रामस्तस्या अत्यन्तापसरणमशक्यं मन्यमानः तादात्विकानुबन्धापाकरणार्थमाह— **भद्रे इति** ॥ सर्वगुणसम्पन्नायास्तवायं साहसकर्मनिर्बन्धोऽत्यन्तमनुचित इति भावः । लक्ष्मणाभिगमनार्थमेवेत्येवशब्देन नात्यन्तं त्वां दूरीकरोमीति द्योतितम् । प्रार्थये इत्यनेन लक्ष्मणेन सह संवासः आत्मनोऽप्यभिमत इति तां प्रत्यवगमयति ॥ **शान्तं पापं शान्तं पापमिति** ॥ आशंसायां निष्ठा । इत्थमत्यन्तं दैन्यानुभवनिमित्तं पापं शाम्यत्वित्यर्थः ॥ **आर्यस्य वचनं प्रमाणीकुर्वत्येति** ॥ पूर्वमप्रमाणत्वेनानुभूतमप्यार्यस्य वचनं इदानीं प्रमाणत्वेन मन्यमानयेत्यर्थः । हेतुगर्भं चैतद्विशेषणम् ॥ **मया स्त्रीसमुदाचारोऽपहस्तितः** ॥ अस्य भवन्नियोगानुष्ठानस्येदानीं स्त्रीसमुदाचारपरित्यागात्मकमनिष्टं तावत् फलं सिद्धमेव इष्टं तु फलं दूरे सन्दिग्धं चेत्यर्थः । अत्र विरक्तं प्रत्यनभिसरणमेव स्त्रीसमुदाचारत्वेनाभिप्रेतम् । अथ दाशरथिर्जानन्नपि तस्या अभिप्रायमभिसरणमात्रमयोग्यत्वेनोक्तमिति कृत्वा तस्य योग्यतां समर्थयते— **एष इति** ॥ एषः स्त्रीणां प्रियं प्रत्यभिसरणं नाम धर्मस्सनातनः उत्कृष्ट एव । कथमुत्कृष्टत्वमत आह— **पश्येति** ॥ अत्र मयोच्यमानं हेतुं सावधानं निरूपयेत्यर्थः । पश्येत्यस्य

अभिसरणमयुक्तमङ्गनाना-
मिति तव सुन्दरि मा स्म भूद्वितर्कः ।
ननु पतिमगमत्स्वयं नदीनां
सरिदपि शम्भुजटामुहूर्तमाला ॥ ३ ॥

शूर्पणखा— अज्जपादेसु परवसा अहं किं ण करिस्सम् । ( आत्मगतम् ) होदु जइ सो जणो दाणिं वि पच्चादेसपरुसो मं अन्तरेण भवे पच्चा अहं सहअं एव्व अत्तणो पिकिदिं पडिवज्जिस्सम् । ( इति निष्क्रान्ता )

आर्यपादेषु परवशाहं किं न करिष्यामि । भवतु यदि स जनः इदानीमपि प्रत्यादेशपरुषो मामन्तरेण भवेत्

---

उत्तरार्धेन सम्बन्धः ॥ शम्भुजटामुहूर्तमाला सरिदपि नदीनां पतिं स्वयमगमदिति ॥ अयमभिप्रायः । सर्वाङ्गनानामुत्तमा पातकिनोऽपि सद्यःस्पर्शनमात्रेण पुनाना गङ्गापि सुकृतसञ्चयलभ्यनिवासात् सुरलोकात् जगदीश्वरस्य जटाटवीं प्राप्य तेन लालितापि ततो महीतलमासाद्य बहुपत्नीकमुदासीनमपि पारावारं स्वयमेवाभ्यगमदिति प्रसिद्धमेव । अतोऽङ्गनानामयं धर्म उत्कृष्ट एव । ततश्च अङ्गनानामभिसरणमयुक्तमिति योऽयं तव वितर्कः स मा स्म भूत् सुन्दरीति ॥ अस्मिन् जगत्यैहिकसुखार्थी को वा तरुणः एवं सौन्दर्यादिगुणगणपूर्णां स्वयमेवाभिसरन्तीं भवतीमवलोक्य औदासीन्यमवलम्बेतेति भावः । अत्राङ्गनाविशेषनिष्ठेनाभिसरणेनाङ्गनासामान्यनिष्ठस्याभिसरणस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः । अथ निशाचरी लक्ष्मणाभिसरणमनिच्छन्त्यपि तच्चित्तानुसरणार्थमनुमन्यते ॥ आर्यपादेषु परवशाहं किं न करिष्य इति ॥ आर्यस्नेहपराधीनाहमत्यन्तदैन्यावहमपि विरक्तं प्रत्यभिसरणं करोमीत्यर्थः । एवं मायाबलप्रदर्शितेन रूपवैचित्र्येण बहुविधैः सामभेदैर्भेदविशेषैश्च रामलक्ष्मणयोः सत्त्वभ्रंशमापादयितुमसमर्था अभीष्टाभावावमानप्राप्त्यादिनिबन्धनेन न्यग्भूतरागेण द्वेषेण कलुषीकृतमानसा भूयोऽपि लक्ष्मणकर्तृकमात्मनः प्रत्यादेशमाशङ्क्य स्वयमेव तत्प्रतिक्रियां निर्धारयति । भवत्विति मानसनिश्चये । स जनो लक्ष्मणो मामन्तरेण उद्दिश्य इदानीं प्रत्यादेशपरुषो भवेत् । संभावनायां लिङ् । इह परिग्रहप्रत्यादेशयोरन्यतरोऽवश्यंभावी । तत्रापि प्रत्यादेशस्यैव संभव इत्यर्थः । अत्र हेतुः— स इति ॥ तच्छब्देन पूर्वानुभूतनिर्दयत्वमपि परामृश्यते ॥ इदानीमिति ॥ पूर्वं रामप्रसादनदुराश-

पश्चादहं सहजामेवात्मनः प्रकृतिं प्रतिपत्स्ये ।

सीता— अज्जउत्त णं तवस्सिणीं बालिअं पच्चादिसंतेण अज्जउत्तेण अअं दाव जणो उक्कण्ठाभाअणं किदो ।

आर्यपुत्र ननु तपस्विनीं बालिकां प्रत्यादिशता आर्यपुत्रेण अयं तावज्जनः उत्कण्ठाभाजनं कृतः ।

रामः— देवि न संसर्गमर्हति कुटुम्बिनां अनर्गलः स्त्रीजनः ।

सीता— जइ एव्वं अविस्ससणीओ जणो किस्स हेदुणो कुमारस्स समीपे पेसिदो ।

यद्येवमविश्वसनीयो जनः कस्य हेतोः कुमारस्य समीपे प्रेषितः ।

रामः— देवि तया सह कुमारस्य सम्बन्धः कुतः । ननु तस्याः प्रत्यादेशव्यपदेशः ।

---

या प्रत्यादेशप्रतिक्रियामकृत्वैव प्रतिनिवृत्ता इदानीं तु तथा न करोमीति भावः ॥ पश्चात् प्रत्यादेशानन्तरमेव । आत्मनः सहजां प्रकृतिं प्रतिपत्स्ये । ततश्च प्रत्यादेशस्य फलं तत्क्षण एव दर्शयिष्यामीति वाक्यस्य पर्यवसानम् । अत्र कविना भाविनः स्वरूपधारिण्याः शूर्पणखायाः प्रवेशस्य सूचनं कृतमिति मन्तव्यम् । अथ तस्यां निष्क्रान्तायां सीता तत्प्रत्यादेशं प्रति अनुतापमवलम्ब्याह— **आर्यपुत्रेति** ॥ तपस्विनीं बालिकामित्यनेन तद्गोचरकारुण्यातिशयो व्यज्यते ॥ **प्रत्यादिशतेति** ॥ प्रत्यादेश उत्कण्ठायां हेतुः । उत्कण्ठा व्यसनं अयं जनो व्यसनस्य भाजनं कृतः । तस्या अनाथायाः प्रत्यादिष्टायाः अतिशोचनीयमवस्थान्तरमालोच्य मम महत् व्यसनं जायत इत्यर्थः । अथ तस्यास्तत्त्वाववोधनेनानुतापमुपनयति— **कुटुम्बिनां** गृहस्थानाम् ॥ **अनर्गलः** ॥ अर्गलशब्देन श्रुतिस्मृतिसिद्धा मर्यादा लक्ष्यते । तामुल्लङ्घ्य इतस्ततःसञ्चरणस्वभावः स्त्रीजनः न संसर्गमर्हति । गृहस्थानां स्वैरिणीपरिग्रहस्य निषिद्धत्वात् अनर्हत्वं संसर्गस्योक्तम् । अथ सीता लक्ष्मणेन तस्याः परिग्रहमाशङ्क्याह— **यद्येवमिति** ॥ यद्येवमविश्वसनीयो जनः केन हेतुना कुमारस्य समीपे प्रेषितः । कुमारो ह्यहमिव तस्या निरर्गलत्वं ज्ञातुं न शक्नोति । विशेषतः पुनस्तयात्मपरिग्रहार्थमार्यपुत्रनियोगे विज्ञापिते निरर्गलत्वशङ्कापि नोदीयात । अतोऽवश्यं कुमारस्य तया सह संसर्गो भविष्यत्येवेति भावः ॥ **देवि तया सह कुमारस्य सम्बन्ध इति** ॥ कुतः कस्माद्धेतोः । न कश्चिदपि हेतु-

सीता— हा कुमारेण पच्चाखिदे का उण से गई ।

हा कुमारेण प्रत्याख्याते का पुनरस्या गतिः ।

रामः— ( सीतां निरीक्ष्य ) देवि तिष्ठतु सर्वम् ।

चरणनलिनसाध्यं यानमाहार्यमम्भः
शयनमवनिपृष्ठं मण्डनं स्नानमात्रम् ।
तव तरुणि तथापि त्वं श्रिया चक्षुषी मे
हरसि पुरमयोध्यामावसन्तीव चित्रम् ॥ ४ ॥

सीता— ( आत्मगतं ) किं णु खु ण जाणादि अज्जउत्तो णं महरिसि-

---

रस्ति । आत्मभार्यां राज्योपभोगं च परित्यज्य मत्परिचरणार्थं वनं प्राप्तस्य स्वैरिणीपरिग्रहः शङ्कितुमपि न शक्यत इति भावः । ननु तत्समीपप्रेषणस्य दोषहेतुत्वाभावेऽपि किं प्रयोजनमत आह— **नन्विति** ॥ **तस्याः प्रत्यादेशव्यपदेश इति** ॥ प्रत्यादेशार्थो व्यपदेशः प्रत्यादेशव्यपदेशः । तत्समीपप्रेषणात्मकं व्याजमाश्रित्य तस्याः प्रत्यादेशः कृत इति यावत् । अथ जानकी पुनरप्युत्तमाङ्गनाधर्मेण हृदयमार्दवेन उभाभ्यां प्रत्यादिष्टायास्तस्याः गत्यन्तराभावमालोच्य सानुतापमाह— **कुमारेणापि प्रत्याख्याते** ॥ भावे निष्ठा । प्रत्याख्याने कृते ॥ **का नु खल्वस्या गतिरिति** ॥ अथैवमपनीताध्वश्रमतया पर्णशालानिवासेन च मायानिशाचरीप्रत्यादेशेन कृतार्थतयानन्यचित्तस्सन् सीताया अनसूयावरप्रभावसमुदितं कान्तिमहिमानमालोक्य विस्मयौत्सुक्यविवशीकृतस्वान्तो भूत्वात्मीयं तदवस्थान्तरं सीतां प्रति निवेदयति— **देवीति** ॥ अन्यत्सर्वं तिष्ठतु । न निरूपणीयमित्यर्थः । इदं तु कथमिति निरूपणीयमित्यर्थात् सिध्यति । किं तदित्यपेक्षायामाह— **चरणेति** ॥ हे तरुणि यस्याः पूर्वमुद्यानादिगमनमपि शिबिकादिसाध्यं तस्या एव तवेदानीं कण्टकिते शर्करिले दवीयसि मार्गे यानं चरणनलिनाभ्यां नलिनवत्सुन्दरसुकुमाराभ्यां महता प्रयत्नेन साध्यम् । तथाहार्यमम्भोमात्रं न स्निग्धान्नादि । तथा शयनमवनिपृष्ठं केवलैव भूमिः । तथा मण्डनमपि स्नानमात्रादन्यदनुलेपनाद्यपि दुर्लभम् । अत्र तद्यपनानुभवस्यात्मस्नेहनिमित्तत्वमनुसन्दधतस्तस्य तस्यां स्नेहप्रवृत्तेरतिशयो गम्यते । यद्यप्येतत्सर्वं ग्लानिनिमित्तं न शोभानिमित्तं तथापि अयोध्यां पुरमावसन्तीव मे चक्षुषी श्रिया हरसि विषयान्तरेभ्यो निवर्त्यान्तःकरणेन सहात्मतादात्म्यं नयसि इति यत् एतदत्यन्तं चित्रमाश्चर्यम् । असत्यपि शोभाकारणे शोभात्मकस्य कार्यस्य दृश्यमानत्वात् आश्चर्यहेतुत्वम् । अथ जानकी स्वयमेव तत्कारणं विमृशति— **किन्नु खल्विति** ॥ अवधारयति । न जानात्यार्यपुत्रोऽनसूया-

पदिणीए अणसूआए अस्समे मं विसज्जअन्तीए मए दिण्णं वरं तुह भत्तुणो दंसणपहे सव्वं मण्डणं भविस्सदित्ति । किन्तु खलु न जानात्यार्यपुत्रः ननु महर्षिपत्न्या अनसूयया आश्रमे मां विसर्जयन्त्या मे दत्तं वरं तव भर्तुर्दर्शनपथे सर्वं मण्डनं भविष्यतीति ।

( नेपथ्ये ) तिष्ठ तिष्ठ पिशिताशने तिष्ठ !

रामः— ( आकर्ण्य ) अये लक्ष्मणस्येव स्वरः ।

सीता— हं सो एव्व । हं तस्यैव ।

( ततः प्रविशति लक्ष्मणः स्वरूपधारिण्या शूर्पणखया निष्कोशेन निस्त्रिंशेन च )

लक्ष्मणः— तिष्ठ तिष्ठ पिशिताशने तिष्ठ ।

रामः— ( आकर्ण्य दृष्ट्वा ) लक्ष्मण किमिदम् ।

भीमदंष्ट्रमरुणोर्ध्वमूर्धजं
शैलवर्ष्म जलदोदरच्छवि ।
ताटकां हतवतस्ततोऽपि मे
रूपमेतदवशं भयावहम् ॥ ५ ॥

---

नुग्रहमिति वाक्यपरिसमाप्तिः । तमेवानुग्रहमाह— नन्विति ॥ महर्षिपत्नीत्यनेन महर्षिवदेव निग्रहानुग्रहशक्तत्वं दर्शितम् । मां विसृजन्त्या गमनार्थमनुजानानया वनवासाध्वगमनादिनिबन्धनां शोचनीयामवस्थामवलोक्य स्वयमनुशोचमानया एवंभूताया अस्या दर्शने भर्तुरात्मस्नेहनिमित्तमेषा व्यसनमनुभवन्तीत्यनुतापो माभूदिति दयापरवशयानसूयया वरं दत्तमेव । ननुरवधारणे ॥ तव भर्तुर्दर्शनपथे सर्वं मण्डनं भविष्यतीति ॥ एतच्च कविना सप्तमेऽङ्के लङ्कायां जानक्याश्चिरसंवासेनाशङ्कितलोकापवादस्य रामस्य तद्दर्शनसमये व्यभिचारनिश्चयोत्पादनद्वारेण वक्ष्यमाणस्याग्निप्रवेशस्य बीजत्वेनापक्षिप्तमिति ज्ञेयम् । अथ राघवः सौमित्रेरात्मना प्रत्यादिष्टां राक्षसीं स्वरूपधारिणीमवलोक्य कुपितस्य तिष्ठ तिष्ठेत्यादिकं संरम्भगर्भं नेपथ्ये क्रियमाणं वचनमाकर्ण्य तदनुसारेण दत्तदृष्टिः निस्त्रिंशहस्तेन लक्ष्मणेन सह रङ्गं प्रविष्टां भयङ्कराकारां तामवलोक्य सविस्मयमाह— किमिदमिति ॥ दृश्यमानवस्तुस्वरूपजिज्ञासापरमेतद्वाक्यम् । अथ राक्षसीत्यवधार्य तत्स्वरूपं सविस्मयं वर्णयति ॥ एतद्रूपं ताटकां ह-

सीता— ( ससंभ्रमं ) अज्जउत्त वारेहि वारेहि दाणिं रक्खसिं ।
आर्यपुत्र वारय वारयेदानीं राक्षसीम् ।

रामः— देवि न भेतव्यं न भेतव्यम् । किं न दृष्टपूर्वं त्वया चित्रभित्तौ पिशाचिकारूपम् ।

सीता— हिअअ किं एदं । णं एसो अज्जउत्तो । अज्जउत्तसणाहस्स तुह किं पवेपणं ।
हृदय किमेतत् । नन्वेष आर्यपुत्रः । आर्यपुत्रसनाथस्य तव किं प्रवेपनम् ।

शूर्पणखा— दिट्ठिआ बुभुक्खिदाए मए तावसपिशिदासणजादणिव्वेदाए सअं एव्व उवणदाइ सिणिद्धसुउमाराइ भक्खरूपाइ । आं इमाइ खादिअ सीदं अज्जलावणस्स उपाअणं

---

तवतोऽपि मे ॥ ततः ताटकायाः अधिकं भयावहमिति ॥ यद्यपि तदानीं दृश्यमाना राक्षसी न तस्य भयमावहति ताटकापि वा पूर्वं न भयहेतुरासीत् तथापि तस्या अत्यन्तं भयङ्करत्वं प्रतिपादयितुं लोकबुद्ध्यनुसारेणात्मनोऽपि भयावहत्वमापाद्यते । इतरथा शैलायामिभिरित्यनेन वृत्तेन शून्यमिति वर्तिष्यमाणेन च श्लोकेनास्य श्लोकस्यासङ्गतिः स्यात् । धीरोदात्तगुणो महासत्त्वता च भज्येत ॥ अवशामिति ॥ रूपविशेषणम् । ईर्ष्यारोषादिभिरवशां परवशामित्यर्थः । भयङ्करत्वमेवोपपादयति— भीमेति ॥ शैलवर्ष्म जलदोदरच्छवीति विशेषणद्वयेन यथाश्रवणं दर्शनेन कौतूहलातिशयो व्यज्यते । अथ सीता राक्षसीदर्शनेन भयपरवशा ससंभ्रममाह— आर्यपुत्रेति ॥ आर्यपुत्र वारय वारयेदानीं राक्षसीमिति ॥ इदानीमेव वारय अस्या वारणे कालातिपातो माभूत् । यतोऽस्मदभिमुखमेव त्वरिततरमागच्छति । अथ सीताभयोपशमनार्थं तस्या असारतां प्रतिपादयति— देवीत्यादिना ॥ किं न दृष्टपूर्वं त्वया चित्रभित्तौ पिशाचरूपमिति ॥ चित्रभित्तिगतपिशाचरूपवत् एतदपि रूपमत्यन्तमसारमित्यर्थः । अथ सीता आर्यपुत्रसन्निधाने आत्मनो भयानुपशममनुचितं मन्यमानात्महृदयमेवात्यन्तं परीक्ष्य तद्गतत्वेनात्मभयमारोप्य हृदयमधिक्षिपति— हृदयेति ॥ किमेतत् नन्वार्यपुत्र एषः आर्यपुत्रसनाथस्य तव किं प्रवेपनं साध्वसमिति । अथ निशाचरी प्रणयमुल्लङ्घ्य विजृम्भमाणेन अभीष्टलाभाभावावमानप्राप्त्यादिनिबन्धनेन रामलक्ष्मणगोचरेण क्रोधप्रकर्षेण विवशीकृ-

करिस्सम् । ( इत्यभिधावति )

दिष्ट्या बुभुक्षिताया मम तापसपिशिताशनजातनिर्वेदा-
याः स्वयमेवोपनते स्निग्धसुकुमारे भक्ष्यरूपे । आं इमे खा-
दित्वा सीतामार्यरावणस्य उपायनं करिष्ये ।

लक्ष्मणः— अभिधावत्येषा ।

व्याजृम्भते जलधरोदरचुम्बिबाहु-
रावर्तते क्षणनतोन्नतभूमिचक्रा ।

---

तात्मा तत्कृतन्यक्कारप्रतिक्रियाध्यवसायेन हर्षाभासमवलम्ब्याह— दिष्ट्या इति ॥ अत्र हर्षस्य क्रोधोपसर्जनत्वादप्राधान्यम् । एतावन्तं कालं दुर्लभवस्तुगोचरया दुराशया महादुःखावमानावनुभूतम् । इदानीं मम तस्या दुराशाया अपगमेनैतावत् सुखं सञ्जातम् । अनेनैव हेतुना मम सुखान्तराण्यपि निर्विघ्नं सेत्स्यन्तीत्यध्यवस्यति । बुभुक्षितायाः तापसपिशिताशनजातनिर्वेदायाः मम स्निग्धसुकुमारे द्वे राजकुमारापरसंज्ञके भक्ष्यरूपे प्रशस्तौ भक्ष्यौ । प्रशंसायां रूपबिति रूपप्प्रत्ययः । स्वयमेवोपनते सर्वत्र प्राकृतत्वात् बहुवचनान्तत्वम् । तापसानामस्थिप्रायाङ्गानां फलमूलाशिनां पिशितस्याशनेऽल्पत्वेन दुरास्वादत्वेन च यतो निर्वेदो जातः तेन तन्मांसाशनोपेक्षणादहमिदानीमत्यन्तं बुभुक्षितास्मि तस्या ममेत्यर्थः । भक्ष्यरूपत्वं स्निग्धसुकुमारत्वं च क्रमेण बुभुक्षापूरणे निर्वेदापगमे च हेतुत्वेन योज्यम् । स्वयमेवोपनते न तु स्वल्पेनाप्यस्मत्प्रयत्नेन । अनेनोपगमनस्य दैवाधीनत्वं दर्शितम् । अस्मदन्वयगुरुणा विधिनैव एषा क्षुत्परिपीडिता वर्तते अतोऽस्यै पर्याप्तं स्वादीयस्तमं भक्ष्यं देयमिति करुणाविवशेन भक्षणार्थमस्मत्सन्निधिमुपनीते इत्यर्थः । अनेन भक्षणस्य प्रतिबन्धाभावो दर्शितः । न हि दैवादुपनीयमानं वस्तु कश्चित्प्रतिबध्नाति । एवमनयोर्भक्षणस्यैतत्कृततिरस्कारनिष्कृतिः क्षुन्निवृत्तिश्च तावत् प्रयोजने विद्येते । अनेनैव कर्मणान्यन्महत्प्रयोजनमपि भविष्यतीति निश्चिनोति— आमित्यव्ययमध्यवसाये ॥ इमे खादित्वा सीतामार्यरावणस्योपायनं करिष्यामीति ॥ न तु भक्षयामि यतो भक्षणे कृते तात्कालिकी तृप्तिरेव फलम् । भ्रातुरुपायनीकृता चैषा यावज्जीवं कामोपभोगशेषतया उपयोक्ष्यते । अनयोर्भक्षणे कृतेऽवश्यमेव गत्यन्तराभावात् रमणीयगृहोद्यानादिविभवविलोभितमानसा मम भ्रातुर्वशे वर्तिष्यते । अतः सर्वथा तावदेनां न भक्षयिष्यामि । अत्र कविना शूर्पणखामुखेन प्रतिनायकवृत्तान्तस्य सीताहरणस्य बीजमुपक्षिप्तमिति ज्ञेयम् ॥ इत्यभिधावतीति ॥ इति निश्चित्य प्रथमं लक्ष्मणं भक्षयितुं तदभिमुखमभिधावतीत्यर्थः । अथ लक्ष्मणोऽभिधावन्तीं

व्यादाय वक्त्रमभिधावति भीममस्मा-
नुद्घाटितार्गलकवाटपुटा पुरीव ॥ ६ ॥

रामः— एषैषा

गगनमुत्पतति क्षितिमण्डले
भ्रमति धावति तिष्ठति जृम्भते।
नखमुखैरसिवर्ष्मभिरम्बरे
जलमुचां शकलीकुरुते कुलम् ॥ ७ ॥

सीता— अज्जउत्त वारेहि वारेहि दाणिं रक्खसिं।
आर्यपुत्र वारय वारयेदानीं राक्षसीम्।

रामः— देवि न भेतव्यं न भेतव्यम्।

---

तां दृष्ट्वा सत्त्वबलमवलम्ब्य तत्स्वरूपं तत्त्वतः प्रत्यक्षीकरोति । एषास्मदभिमुखं वेगेन ससंभ्रममागच्छतीत्यर्थः । श्लोकगतोऽभिधावतिशब्दोऽनुवादः ॥ भीमं भयङ्करं यथा भवति तथा ॥ वक्त्रं व्यादायास्मानभिधावति ॥ एषा जलधरोदरचुम्बिबाहुः भीमं व्याजृम्भते ॥ व्याजृम्भणसमये भुजयोरूर्ध्वप्रसरणात् जलधरोदरचुम्बित्वम्। आवर्तत इत्यनुवादः। आवर्तमानैषा प्रतिक्षणं पदोन्नमनावनमनाभ्यां नतमुन्नतं च भूमिचक्रं यस्यास्सा तथाविधा वर्तते। एवंभूतैषा उद्घाटिते अर्गले यस्य तत्तादृशं कवाटपुटं यस्यास्सा तथाविधा जङ्गमा काचन पुरीव भाति। अथ रामोऽपि तच्चेष्टाः सकौतुकं प्रत्यक्षीकरोति ॥ एषैषेति ॥ द्विर्वचनं पूर्वसञ्जातराक्षसदर्शनौत्सुक्यस्य तस्य तद्दर्शनकौतूहलातिशयं द्योतयति। निगदव्याख्यानः श्लोकः। इह भीमदंष्ट्राद्याकारविशेषाणामुत्पतनभ्रमणादिचेष्टाविशेषाणां चान्येषां भयहेतुत्वेन स्थितानां कौतूहलहेतुत्वं तस्य महासत्त्वतामावेदयति । अथ सीताभिधावन्तीं राक्षसीं दृष्ट्वात्यन्तं भयविवशा भूत्वा तद्वारणं प्रार्थयते— आर्यपुत्रेति ॥ इह शूर्पणखाकारचेष्टाभिर्बीभत्सरसो दर्शितः । तत्कार्यश्च भयानकरसः सीतागतैरूरुस्पन्दनमुखशोषणहृदयकम्परोमोद्गमादिभिरनुभावैर्व्यक्तो दर्शितः । उक्तं हि मुनिना— "विकृतमुखसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात् । गुरुनृपयोरपराधात् कृतकश्च भयानको ज्ञेयः ॥ गात्रमुखदृष्टिभेदैरूरुस्तम्भादिवीक्षणोद्वेगैः। समुखशोषणहृदयस्पन्दनरोमोद्गमैश्च भयम् ॥" इति । अथ रामस्सीताया भयमुपशमयन् असारतां तस्या उपपादयति— देवीति ॥ अरविन्दलोचने एषा न राक्षसी किन्तु एतदपरं यन्त्रमेवाचेतनं दार्वादिनिर्मितं तिर्यङ्मनुष्याद्याकारं

शून्यमन्तररविन्दलोचने
यन्त्रमेतदपरं न राक्षसी ।
लीढमीषदधुना ममायुधै-
रार्तनादमवनौ पतिष्यति ॥ ८ ॥

**लक्ष्मणः**— प्रसीदत्वार्यः । अहमेवैनां प्रतिबध्नामि ।

( इत्यन्तरं प्रविशति )

**शूर्पणखा**— हद्धि, अच्चाहिदं खु एदम् । भक्खरूपाइ मे परक्कमंति

---

चेतनव्यापारकौशलवशेन भ्रमणादिविलासास्पदं यन्त्रमित्युच्यते । इह राक्षस्याः भयङ्करचेष्टाविशेषयोगे सत्यपि यन्त्रवदेव भयहेतुत्वाभावं दर्शयितुं यन्त्रत्वमारोपितम् ॥ **अपरमिति** ॥ यद्यपि परायत्तव्यापारेभ्यो यन्त्रान्तरेभ्योऽस्य स्वायत्तव्यापारत्वेन भेदो विद्यत एव तथाप्यस्य यन्त्रावान्तरभेदत्वमेव न त्वयन्त्रत्वमित्यभिप्रायः । अत्र प्रकृताया राक्षस्या निषेधेनान्यस्य समर्थनादपह्नुतिरलङ्कारः । यथाह— "प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।" इति । यन्त्रत्वमेवोपपादयति— **अन्तःशून्यमिति** ॥ सत्त्वबलशून्यमित्यर्थः । एवमत्यन्तमसारादप्येतस्माद्यदि स्त्रीस्वभावसुलभेन चापलेन तव भयं जायते तदा एतदप्ययत्नेन निवारयाम इत्याह—**लीढमिति** ॥ ममायुधैरीषल्लीढमेव न तु क्षणमपि तैर्विमर्दक्षमं आर्तो दुःखविधुरो नादो यस्मिन् पतने तथा भूत्वाधुनैवावनौ पतिष्यति यतस्तस्मान्न भेतव्यमिति । इह कविना वीभत्सकार्येण विरोधिना भयेन वीररसस्थायिनः सर्वराक्षसवधोत्साहस्याबाधो दर्शितः । यथाह— "विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥" "शृङ्गारवीभत्सरसौ तथा वीरभयानकौ । रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥" इति । **हा धिक् अत्याहितं खल्वेतत् भक्षरूपाणि मे पराक्रमन्त इति** ॥ अथान्तरं प्राप्य राक्षसीं निरुन्धानं तया गृहीतं किञ्चित्प्रमत्तमालक्ष्य सरोषमाह— **तिष्ठेत्यादिना** ॥ हे राक्षसि कृतागसि कृतापराधं जनमुद्दिश्य वयं न मुनयः । यथा मुनयोऽशक्तेः तपोभङ्गभयाद्वा युष्माभिः कृतं तं तमपराधं क्षमन्ते वयं तु न तथा क्षमामहे । सद्य एवापराधिनां तत्फलं दर्शयामः । उत्पथगामिनां त्वादृशां निग्रहोऽस्माकं कुलधर्म एवेति भावः । तस्मादिमं संरम्भं त्यज । अयं संरम्भोऽस्मासु अकिञ्चित्कर एवेत्यभिप्रायः ॥ **इदं धृतं धनुरिति** ॥ एते राज्यभ्रष्टाः वनं प्राप्य जटावल्कलधारिणो भूत्वा भिक्षुकन्यायेन इतस्ततस्सञ्चरन्तः किं कुर्वन्तीति मत्वा संरम्भं मा कृथाः । कृतापराधानां त्वादृशां सद्य एव निग्रहायेदं धनुर्धृतमेव आयुधग्रह-

हा धिक्, अत्याहितं खल्वेतत् । भक्षरूपाणि मे पराक्रमन्ते ।

लक्ष्मणः— आः त्वामद्य विहङ्गेभ्यो विभजामि ।

शूर्पणखा— इमं दाव पुव्वं कठोरहिअअं एकन्दे खादिस्सं ।

इमं तावत् पूर्वं कठोरहृदयं एकान्ते खादिष्यामि ।

लक्ष्मणः— एष गृहीतोऽहम् । अये प्रमत्तोऽस्मि ।

रामः— तिष्ठ तिष्ठ ।

मुनयो न वयं कृतागसि
त्यज संरम्भमिदं धृतं धनुः ।
करुणाविमुखाः शिलीमुखाः
सततं राक्षसि राक्षसेषु नः ॥ ९ ॥

---

णापेक्षयापि न कालविलम्ब इति भावः । किञ्च पूर्वमेव धर्मस्थित्यन्तरायनिरतेषु सर्वेष्वेव राक्षसजातीयेष्वाबद्धवैरा वयं अतो राक्षसजातीयत्वेनैव भवत्याः निग्रहार्हत्वं किं पुनर्महत्यपराधे सतीत्यभिप्रायेणाह— करुणेति ॥ नः शिलीमुखाः राक्षसेष्वविशेषनिर्देशात् राक्षसजात्युपलक्षितेषु सर्वेषु स्त्रीबालवृद्धादिष्वपि सततं करुणाविमुखा इति । शिलीमुखा एव राक्षसैस्समं विप्रतिपत्तुं पर्याप्ताः तेषां बहुत्वस्य च शिलीमुखत्वमेव पर्याप्तम् । बहूनामपि तेषामेकेनाप्यात्मना न स्पर्धार्हत्वमिति द्योतयितुमात्मनः करुणाविमुखत्वं शिलीमुखेष्वारोपितम् । उभयत्रापि बहुवचनान्तोऽस्मच्छब्दः आत्मनो गौरवं द्योतयति । अनेन वचनविन्यासेन निगूढाहङ्कारत्वं नाम धीरोदात्तगुणो गम्यते । यथाह— "महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥" इति । अत्र वीरस्थायिन उत्साहस्य राक्षसीदुर्व्यापारदर्शनसमुद्बुद्धस्य मतिगर्वधृतिप्रहर्षादिभिः अनुभावैः पोषं नीयमानस्य रसतया परिणतिर्द्रष्टव्या । तथा चाह— "कारणान्यथ कार्याणि व्यभिचारीणि यानि च । रत्यादेस्स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ विभावाश्चानुभावाश्च कथ्यन्ते व्यभिचारिणः । व्यक्तस्स तैर्विभावाद्यैस्स्थायी भावो रसस्स्मृतः ॥" इति । अथ लक्ष्मणस्तया गृहीतः क्षणकालं प्रमत्तो भूत्वा तदैवात्मानं सत्त्वबलेनात्मसात्कृत्य सक्रोधमाह— आ इति ॥ आ इति कोपे । "आस्तु स्यात्कोपपीडयोः" इत्यमरः । अद्येदानीमेव त्वां विहङ्गेभ्यो गृध्रादिभ्यो विभज्य ददामीत्यर्थः । अत्र रौद्ररसो भाविनः करुणरसस्य कारणत्वेनाधरदंशनभ्रुकुटीमुखरागादिभिरनुभावैरावेगौग्र्यादिभिः व्यभिचारिभि-

शूर्पणखा— ( लक्ष्मणं गृहीत्वा ) हाद्धि लहूइ गिरिसिहराइ ।

हा धिक् लघूनि गिरिशिखराणि ।

( खमुत्पत्य निष्क्रान्ता )

रामः— ( सशोकं ) देवि किमद्यापि स्त्रीस्वभावं न मुञ्चसि ।

साध्वसेन सह धैर्यमास्थिता

मुञ्च मां हरिणमुग्धलोचने ।

तूर्णमुत्पतति वर्त्म वार्मुचां

राक्षसी भुजगृहीतलक्ष्मणा ॥ १० ॥

सीता— अज्जउत्त को मं रक्खदि । आर्यपुत्र को मां रक्षति ।

रामः— कुमारः केन रक्ष्यते ।

सीता— णं तस्स हत्थगदं आउहं ।

ननु तस्य हस्तगतमायुधम् ।

---

र्थं विशिष्टो दर्शितः ॥ इमं तावत्पूर्वं कठोरहृदयं एकान्ते खादिष्यामीति ॥ अयमभिप्रायः । सामादिभिरसाध्यमाना नरा दण्डेन वशं नीयमाना दृश्यन्ते । तत एकान्तं नीयमानोऽसौ यदि प्राणभयाद्वशमायास्यति तर्ह्येनं न भक्षयामि । अथ कठोरहृदयत्वेन दण्डेनापि न साध्यो भविष्यति ततोऽनेन निर्विघ्नं क्षुत्पीडामपनयामि । भक्षिते पुनरस्मिन् अनेन क्रमेण रामेऽपि दण्डप्रयोगः कार्यः । यदि सोऽपि न वशमायास्यति ततोऽनुजपदवीमनुयापयामि सर्वथानयोर्युगपद्भक्षणं न कर्तव्यम् । तदिदं सर्वमेकान्त इत्यनेन दर्शितमिति वेदितव्यम् । लक्ष्मणं गृहीत्वा खमुत्पत्येत्युत्तरक्रिया ॥ लघूनि गिरिशिखराणि ॥ अस्य गौरवमपेक्ष्य गिरिशिखराणां लघुत्वमित्यर्थः । अथ नभोमार्गमुत्पतन्त्या राक्षस्या गृहीतं लक्ष्मणं सीतां च भयविवशामालोक्य सविषादमाह— देवीति ॥ हरिणमुग्धलोचन इत्यनया सम्बुद्ध्या तदानीं भयानुवृत्तिर्दर्शिता । अद्यापि लक्ष्मणवैवश्यदर्शनेन विषादे कर्तव्येऽपि स्त्रीस्वभावं स्त्रीत्वकृतं भयं न मुञ्चसि । भयमोचनस्यावश्यकत्वं दर्शयति—यत एषा राक्षसी भुजगृहीतलक्ष्मणा भूत्वा वार्मुचां वर्त्म नभोमार्गं तूर्णमुत्पतति यादृशेन वेगेन मद्बाणानां न गोचरीभवति तथा गच्छतीत्यर्थः । अतो धैर्यमास्थिता साध्वसेन सह मां मुञ्च । अथ सीतामनुज्ञातात्मगमनां भयविवशां राक्षसी-

मानुषं जन्म धिक् कुत्सयामीत्यर्थः।



रामः— ( सविषादं ) आयुधेन किं प्रयोजनं राक्षसीभुजगृहीतस्य।

धिगहं मानुषं जन्म वसुधामात्रगोचरम्।
राक्षसी लक्ष्मणं हृत्वा तिरोऽभूत्पश्यतो मम ॥ ११ ॥

सीता— ( सविषादं ) हदाए मए अज्जउत्तं पडिबन्धमाणाए कुमारो हिअअसेल्लं कारिदो।

हतया मयार्यपुत्रं प्रतिबध्नत्या कुमारो हृदयशल्यं कारितः।

रामः— ( शरमुद्धरन् ) कस्य नु खलु दिव्यास्त्रस्यैषा विषयः।

( नेपथ्ये ) हं पादिदम्हि, अज्ज सरणं सरणं !

हं पातितास्मि, आर्य शरणं शरणम्।

रामः— अये स्त्रीस्वर इव। कुतोऽयं भूमिकम्पः। नूनं पातिता लक्ष्मणेन राक्षसी।

सीता— अहं वि तं एव्व तक्केमि। अहमपि तदेव तर्कयामि।

रामः— भद्रे हस्तमवलम्ब्य मामनुगच्छ यावदहं लक्ष्मणमन्वि-

---

मन्तर्हितां चालक्ष्य शोकविषादादिविधुरो भूत्वाह— धिगिति ॥ अहं मानुषं जन्म धिक् अत्यन्तं कुत्सयामि। "उभसर्वतसोः" इत्यादिना द्वितीया। कुत्सने हेतुमाह— वसुधेति ॥ वसुधामात्रं गोचरः आश्रयः सञ्चरणस्थानं यस्य तत्तथोक्तम्। वसुधामात्रगोचरत्वे जन्मनः कथं कुत्सनीयत्वमित्यत आह— राक्षसीति ॥ राक्षसी पश्यतो मम पश्यन्तं मामनादृत्य। 'षष्ठी चानादरे" इति षष्ठी। लक्ष्मणं हृत्वा तिरोऽभूत्। यतो वयं दुष्टराक्षसीवधसमर्था अपि मनुष्यत्वेन गगनमार्गगमनाशक्त्या तूष्णीमास्महे अतोऽतिनिन्द्यमिदं मनुष्यजन्मेत्यर्थः। अथ सीता आत्मकृतेनार्यपुत्रप्रयाणप्रतिबन्धेन लक्ष्मणस्य व्यसनमुत्प्रेक्ष्यानुतापमवलम्ब्याह— हतया मया आर्यपुत्रं प्रतिबध्नत्या कुमारो हृदयशल्यं कारित इति ॥ अत्रोभयोरपि राक्षसीकर्तृकलक्ष्मणहरणनिमित्तं दुःखं तद्दर्शनसमयभाविनो हर्षस्य पोषकतया निबद्धमिति ज्ञेयम्। अथ लक्ष्मणेन पातितया राक्षस्या अहं पातितास्मि आर्य शरणमित्याक्रन्दितमाकर्ण्यानन्तरमेव भूमिकम्पं च दृष्ट्वा लक्ष्मणेन पातितां तामाज्ञाय संजातानन्दः तदन्वेषणार्थं सीतामनुनयति—भद्रे इति ॥ पूर्वं

च्छामि ।

सीता— घत्तिस्सं । प्रयतिष्ये ।

( उभौ परिक्रामतः )

रामः— ( परिक्रम्यावलोक्य ) । अये

जगतीधरधातुसान्द्रमम्भः
सरितस्सर्पति किन्तु काननान्तम् ।
तरुणारुणकान्ति लोहितं नु
च्युतमुत्पातपयोधरोदरेभ्यः ॥ १२ ॥

( ततः प्रविशति लक्ष्मणः )

लक्ष्मणः— ( सानुक्रोश ) हन्त धिङ्मां स्त्रीव्यपदेशिनीं प्रति प्रथममुद्यतास्त्रम् । अथवा नेदमनुशयस्थानम् ।

---

मया भ्रातृस्नेहेनैकाकिनीं त्वामुत्सृज्य गन्तुमुपाक्रमि । तदा भवती यदि मां न्यवारयिष्यत्तदा महानपनयोऽभविष्यत् अतोऽत्यन्तं समीचीनैव तव प्रेक्षाबुद्धिरिति सम्बुद्धयाभिप्रायः ॥ हस्तमवलम्ब्येति भयोपशमनार्थम् । यत इदानीं लक्ष्मणेन भूमिष्ठेन भवितव्यम् अतो लक्ष्मणमनु उद्दिश्य गच्छाव इति ॥ घत्तिस्सं प्रयतिष्य इत्यर्थः । अथ दूरत एव राक्षस्या आभिसृमरं रुधिरप्रवाहमालोक्यान्यथा संभावयन्नाह— जगतीधरधातुसान्द्रम् पर्वतस्थैर्धातुभिः सान्द्रं अत्यन्तं कलुषीकृतम् । अत एवातिरक्तमम्भः कर्तृ ॥ सरित उन्नतात्पर्वतान्निर्गच्छन्त्या नद्याः । काननान्तं कर्म । पर्वतमधोऽधो वर्तमानं वनमध्यं सर्पति किन्तु । अत्र सर्पणस्य वर्तमानत्वनिर्देशेन प्रवाहरूपेणाम्भसोऽभिसरणस्याविरतिर्दर्शिता । अथ तत्समीपमुपगम्य रुधिरमिति विज्ञाय तत्कारणमुत्प्रेक्षते— उत्पातपयोधरोदरेभ्यः जगद्विनाशसूचकानां मेघानामुदरेभ्यश्च्युतम् ॥ तरुणारुणकान्ति बालादित्यसमानकान्ति ॥ लोहितं किन्तु इति ॥ अथ लक्ष्मणः आत्मानमुद्धृत्य मध्येगगनमुत्पतन्त्यास्तस्याः पूर्वं मायाकृतविलासादिभिरात्मानं विलोभयन्त्या वैरूप्यकरणमेव समुचितो दण्ड इति मत्वा कर्णद्वयं नासिकां च विलूय निपात्य स्वयं भुवं प्राप्य कृते कर्मणि सानुक्रोशस्सानुतापो भूत्वाह ॥ धिङ्मामिति ॥ स्त्रीति व्यपदेशः शब्दमात्रमस्यामस्तीति स्त्रीव्यपदेशिनी । अनेन स्त्रीगुणानामार्जवमार्दवादीनामभावो दर्शितः । अत्र राक्षसीमिति विशेष्यमध्याहार्यम् । यद्यपि जातितः कर्मतश्च क्रूरतमायामस्यामस्त्रप्रयोगो न धर्मविरोधमावहति

दृष्ट्वा तस्याश्च दौरात्म्यं ज्ञात्वा भ्रातुश्च निश्चितम् ।
न्यस्तमस्त्रं निशाचर्याः कथञ्चित्कर्णनासिके ॥ १३ ॥

यावदार्यमुपसर्पामि । ( उपसृत्य ) जयत्वार्यः ।

रामः— ( सहर्षमालिङ्ग्य )

समुच्छ्वसिहि चेतस्त्वं कुशली लक्ष्मणोऽधुना ।
रेमे वनेऽपि येनाहमयोध्यामावसन्निव ॥ १४ ॥

( भूयः परिष्वज्य ) कुमार क सा राक्षसी ।

लक्ष्मणः— ( आत्मगतम् ) किमिति वक्ष्यामि । ( अधोमुखस्तिष्ठति )

( ततः प्रविशति साक्रन्दा शूर्पणखा )

शूर्पणखा— हा अज्जरावण, हा अज्जकुंभअण्ण, हा अज्जविभीसण, परित्ताअहि परित्ताअहि मं तापसव्वाजपडिच्छण्णाणं मणुस्साणं अविणआदो ।

हा आर्यरावण, हा आर्यकुम्भकर्ण, हा आर्यविभीषण, परित्रायस्व परित्रायस्व मां तापसव्याजप्रतिच्छन्नयोर्मनुष्ययोरविनयात् ।

---

तथाप्यस्य स्त्रीविषयत्वेनायशोहेतुत्वात् दैन्यापादकत्वमिति भावः । अथवा भ्रात्रा यदनुतिष्ठासितं तदेव मयानुष्ठितमित्यनुशयो न कर्तव्य इत्यभिप्रायेणाह— अथवेति ॥ निश्चितं निश्चयः राक्षसीदमनाध्यवसाय इति यावत् । स्त्रीत्वकृतया जुगुप्सया कथञ्चिदित्युक्तम् ॥ कर्णनासिके ॥ कर्णौ च नासिका च कर्णनासिकम् । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामिति द्वन्द्वस्यैकवद्भावात् एकवचनान्तत्वं नपुंसकत्वं च । अथ रामो लक्ष्मणमालिङ्ग्यानन्दविवशो भूत्वात्महृदयमेव परीकृत्याह— समुच्छ्वसिहीति ॥ सर्वत्र हृदयं परीकृत्योक्तिर्व्याक्षेपं द्योतयन्ती तन्निमित्तहर्षशोकाद्यतिशयं द्योतयति । हे चेतः अधुना समुच्छ्वसिहि । यतो लक्ष्मणः कुशली अहं येन वनेऽपि अयोध्यामावसन्निव रेमे । "उपान्वध्याङ्वसः" इति कर्मसंज्ञा । आत्मकृतस्य कर्मणः कुत्सितत्वमालोच्याधोमुखत्वमुत्तरादानं च । अथ क राक्षसीत्यनेन सूचिताया राक्षस्या रौद्रव्यापारकार्यभूतं करुणरसं दर्शयितुं द्वितीयं प्रवेशं प्रस्तौति— ततः प्रविशतीति ॥ हा आर्यरावण हा आर्यकुम्भकर्ण हा आर्यविभीषण तापसव्याजप्र-

**रामः**— लक्ष्मण पश्य पश्य ।

सन्ध्यारुणा सलिलवाहपरम्परेव<br>
शैलस्य धातुरसधूसरितेव भित्तिः ।<br>
बालातपप्रणयिनीव तमालवीथी<br>
सन्दृश्यते सरसलोहितताम्रमूर्तिः ॥ १५ ॥

**लक्ष्मणः**— ( स्वगतं ) दिष्ट्या कुत्सनीयं कर्मेदमार्यः स्वयमेव परिच्छिनत्ति ।

**रामः**— लक्ष्मण युक्तं कृतं त्वया । ननु वधस्थाने स्त्रीणामेष एव

---

तिच्छन्नयोर्मनुष्ययोरविनयान्मां परित्रायध्वमिति ॥ हाशब्दो दुःखातिशये । अत्रासन्निहितानामपि रावणादीनामाह्वानं दुःखस्योन्मादतया परिणतिं दर्शयति । यथाह— "श्रेष्ठस्येष्टवियोगात्स्यादुन्मादश्चित्तविप्लवः । धननाशाभिघाताद्यैर्नीचानां करुणाश्रयः ॥ असम्बन्धप्रलापाद्यैर्वर्ण्यते विकृतैरसौ । भावोऽयं रसपोषार्थं" इत्यादि । विकृतैर्विकारैरनुभावैः । तापसाविति एवंरूपेण व्याजेन प्रतिच्छन्नाविति विग्रहः । अभिगम्येन तापसवेषेण सर्वप्राणिनो वञ्चयित्वा निघ्नतोरित्यर्थः । अविनयशब्देन तत्कार्यभूत आयुधप्रहारो लक्ष्यते । अथ रामः साक्रन्दितश्रवणं दत्तदृष्टिस्तां पश्यन् कुतूहली भूत्वा सौमित्रिं प्रति तत्स्वरूपं दर्शयति— **पश्येति** ॥ पश्य पश्येति द्विर्वचनं कौतूहलातिशयं द्योतयति । दृष्टमेव तद्रूपं वर्णयति— **सन्ध्येति** ॥ अस्मिन् श्लोके एषा राक्षसीत्यध्याहार्यम् । एषा राक्षसी सरसेन तत्कालनिःसृतत्वादत्यन्तं द्रवीभूतेन लोहितेन ताम्रा मूर्तिर्यस्यास्तथाभूता सन्दृश्यते । एवंभूतैषा सन्ध्यारुणा सलिलवाहपरम्परेव भवति । सलिलवाहशब्देन मेघानामुपादानं कालिमानमभिव्यनक्ति । सलिलवहनकाले तथा दृश्यमानत्वात् । परम्पराशब्देन महत्त्वमौन्नत्यं च दर्शयति । उत्तिष्ठन्त्या अयं दृष्टान्तः । अथ वेदनातिशयकृतयाशक्त्या तत्क्षण एवासीनायाः उपमानान्तरमाह— **शैलस्येति** ॥ धातुरसेन धूसरिता शैलस्य भित्तिरिवासीना दृश्यते । अथ सादप्राचुर्येणासितुमप्यशक्त्या तत्काल एव शयानाया उपमानान्तरमाह— **बालेति** ॥ शयानैषा बालातपप्रणयिनी बालातपसम्पृक्ता तमालवीथीव दृश्यते । इहोपमानानां भेदेन तस्या वेदनातिशयेन प्रतिक्षणं शयनासनस्थितिषु व्यतिवृत्तिर्द्योत्यते ॥ **दिष्ट्येति** ॥ कुत्सनीयस्य कर्मणः स्वयमनभिधानाद्धर्षः । स्वयमेव परिच्छिनत्ति जानाति अतोऽस्माभिर्न वक्तव्यम् । अथ लक्ष्मणं स्त्रीविषयशस्त्रप्रहारकृतया लज्जयाधोमुखमाज्ञाय तामपनेतुं तस्य योग्यत्वं समर्थयते— **युक्तमिति** ॥ अथ मुनिवचनाच्छ्रुतपूर्वां तामार्यरावणेत्या-

दण्डः ।

सैषा शूर्पणखा नाम वसन्ती दण्डके वने ।
खरदूषणयोर्ज्येष्ठा रावणस्य कनीयसी ॥ १६ ॥

इति श्रूयते ।

शूर्पणखा— सुमरह सुमरह मणुस्सा तुम्हाणं अविणअं, तस्स फळं अज्जप्पहुदि दक्खिस्सह ।

स्मरतं स्मरतं मनुष्यौ युवयोरविनयं, तस्य फलमद्य प्रभृति द्रक्ष्यथः ।

लक्ष्मणः— आः अपेहि तावत् ।

शूर्पणखा— खरदूसणाणं मे इमं अवत्थं दंसइस्सम् । ( निष्क्रान्ता )

खरदूषणयोः मे इमामवस्थां दर्शयिष्यामि ।

सीता— अज्जउत्त अज्ज उच्छासिदम्हि । अहवा इत्थं पडिभये

---

दिप्रलपितं श्रुत्वा प्रतिजानाति— सैषेति ॥ या शूर्पणखा नाम राक्षसी श्रूयते सैषेत्यन्वयः । श्रवणसमुत्थानुभवकार्यस्य स्मरणस्यानुवर्तमानत्वात् श्रवणस्य वर्तमानतया निर्देशः । तत्स्मरणानुवृत्त्या च तद्दिदृक्षाया अनुवृत्तिर्दर्शिता । अत एव उत्केलकौतूहलेत्युक्तम् । खरदूषणयोर्ज्येष्ठा रावणस्य कनीयसीत्यनेन सोदरीन्यक्कारहेतुकस्तेषां वैरानुबन्धो दर्शितः । तेन सर्वराक्षसवधोत्साहस्य लब्धप्रसरतया कृतार्थता व्यज्यते । अनेन उत्तराङ्कप्रतिपाद्यः सीताहरणादिः प्रतिनायकवृत्तान्तः तद्विष्कम्भकसूच्यः खरदूषणादिवधश्च कविना सूचितः । अथ निशाचरी सैषेत्यादिनात्मानमात्मसम्बन्धिजनगौरवं च ताभ्यां विदितं मन्यमाना सगर्वमाह— हे मनुष्यौ युवयोरविनयं स्मरतम् स्मरतमिति ॥ अविनयशब्देन तत्कार्यं वैरूप्यकरणं लक्ष्यते ॥ तस्य फलमद्य द्रक्ष्यथ इति ॥ अयमभिप्रायः । अनेन मद्वैरूप्यकरणेन किमपि न भविष्यतीति मत्वा स्वैरासिकां मा कृषाथाम् । अनेन कर्मणाचिरेणाप्रतिकार्यं महद्व्यसनं भविष्यत्येव अतोऽयमविनयोऽनुस्मर्तव्य एव अनुस्मरणाभावे तन्निवारणाय पूर्वमेव यत्नो न स्यात् तस्मादस्य कर्मणो व्यसनानुबन्धित्वमनुस्मृत्य पूर्वमेव तदुपशमनार्थं यथाशक्ति यतेथाथाम् नत्वननुज्ञाप्य सहसा व्याजेनागत्य किञ्चित्कारिष्याम इति ॥ खरदूषणयोर्मेऽवस्थां दर्शयिष्यामीति ॥ अनेनाङ्कान्तःपातिवृत्तं सूचितम् । अथ राक्षस्यां निष्क्रान्तायां सीता समाश्व-

रक्खसीहिं वणप्पदेसे तह लावण्णवदी सुउमारगत्ता सीमंतिणी कहं विअ वत्तदि ।

आर्यपुत्र अद्योच्छ्वसितास्मि । अथवा इत्थं प्रतिभये राक्षसीभिर्वनप्रदेशे तथा लावण्यवती सुकुमारगात्रा सीमन्तिनी कथमिव वर्तते ।

( रामो लक्ष्मणमीक्षते )

लक्ष्मणः— ( कर्णे ) एवमिव ।

सीता— अज्जउत्त किं कुमारो मन्तेदि ।

आर्यपुत्र किं कुमारो मन्त्रयते ।

रामः— देवि

वक्त्रेण स्फुरिताधरेण शफरप्रस्पन्दिना चक्षुषा
मध्येन स्तननम्रितेन पृथुलेनारोहचक्रेण च ।
सव्रीडं चकितं पदे पदशतं न्यस्तं यया लीलया
सा जाता भयकारणं तत्र विधेः शक्त्या द्विषो रक्षसाम् ॥

---

त्याह— अद्येति ॥ अद्य उच्छ्वसितास्मि ॥ अथवेति ॥ समाश्वासो न कर्तव्य एव कुत इत्यत आह— राक्षसीभिरीदृशीभिरपि इत्थं अनेन प्रकारेण प्रतिभये वनप्रदेशे तथा लावण्यवती सुकुमारगात्री एकाकिनी कथमिव वर्तत इति ॥ रामो लक्ष्मणमीक्षत इति ॥ मया नियुक्ता त्वत्समीपं प्राप्ता सा किमकार्षीदितीक्षणाभिप्रायः । आत्मकृतं तस्या लक्ष्मणसमीपे प्रेषणमयुक्तं मन्यमानो वाचा न पर्यपृच्छत् । अथ लक्ष्मणेन तद्वृत्तान्ते निवेदिते किं कुमारो मन्त्रयत इति सीतया पृष्टो रामस्तद्वृत्तान्तं निवेदयति— वक्त्रेणेति ॥ यया पूर्वं मायाबलेन दर्शितया लीलया लीलाविलासादिमाधुर्यादिभिः शरीरारम्भैः स्फुरिताधरेण वक्त्रेण च शफरप्रस्पन्दिना चक्षुषा मीनवत् प्रस्पन्दितुं शीलमस्येति तथाविधेन चक्षुषा च । स्तननम्रितेन मध्येन च पृथुलेनारोहचक्रेण जघनमण्डलेन च सह वर्तमानया सव्रीलं चकितं पदे पदप्रमाणप्रदेशे पदशतं पदानां पदन्यासानां शतं न्यस्तं कृतमित्यर्थः । सैव विमुक्तमाया स्वरूपं प्राप्ता तव भयकारणं सञ्जाता ॥ विधेः शक्त्येति ॥ योऽयं मायाबलेनास्मच्चित्तविलोभनार्थो व्यापारः यच्च स्वरूपं प्राप्य सा लक्ष्मणं गृहीत्वा नभोमार्गमगमत् पुनर्लक्ष्मणेन तस्या वैरूप्यकरणं कृतं तदिदं सर्वं विधेः शक्त्या प्रयोजिकया प्रयुक्तमि—

**सीता**— अलिअं अलिअं एदं । अलीकमलीकमेतत् ।

**रामः**— ननु लक्ष्मणः कथयति ।

**सीता**— हं तस्सिं जणे मे विस्संभो आसी । अज्जउत्तेण साहु णिवारिदो ।

हं तस्मिन् जने मे विस्रम्भ आसीत् । आर्यपुत्रेण साधु निवारितः ।

**रामः**— वत्स लक्ष्मण कथं त्वया पूर्वमुपलक्षिता सा ।

---

ति साध्यमध्याहृत्य योजनीयम् । इतरथा राक्षस्या भयकारणत्वसञ्जननमात्रे विधिशक्तिर्हेतुस्स्यात् तच्चानुचितम् । कस्य हेतोर्विधिरेवमकरोत् अत आह— **रक्षसां द्विष इति** ॥ "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । अयमभिप्रायः । रावणादिराक्षसपीडितां त्रिलोकीं विलोक्यासहमानेन विधिना लङ्काधिवासिनीं निशाचरीं जनस्थानं प्रापय्यास्मानप्ययोध्यावासिनो निमित्तान्तरेण वनमानीयानेन प्रकारेणास्माभिस्तस्या वैरूप्यं कारयता रावणादिनिशाचराणामस्मद्गोचरं महद्वैरमापाद्यास्माभिः सर्वराक्षसकुलं समुन्मूलयितुमिच्छा कृता इत्यनेन वैरानुबन्धिना कर्मणानुमीयत इति । इह शैलायामिभिरित्यत्रोद्दिष्टस्यैतद्बीजस्य राक्षसवैरनिबन्धनादर्शनेन विच्छेदे प्रसक्ते तदविच्छेदकारणविनिष्पत्त्या बिन्दुर्नाम द्वितीयार्थप्रकृतिर्निबद्धा । यथोक्तं— "बीजं बिन्दुः पताका च प्रकरी कार्यमेव च । अर्थप्रकृतयः पञ्च कथादेहस्य हेतवः ॥ अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ।" इति । प्राप्त्याशा च कार्यस्य तृतीयावस्थानेन दर्शिता । यथोक्तं— "उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ।" इति । तदिदं परिहासवचनं मत्वा सीतया अलीकमलीकमित्यभिहितम् । अत एव ननु लक्ष्मणः कथयतीति परिहासवचनत्वं तस्य प्रतिक्षिप्यते । हमित्यनुतापकार्यभूतो वाग्रूपोऽनुतापः । तस्मिन् जने विस्रम्भ आसीत् यत्तत् कष्टमित्यर्थः । आर्यपुत्रेण स जनो निवारित इति यत्तत् साधु इति योजनीयम् । अथ पूर्वमेव लक्ष्मणमुखाच्छ्रुतो यस्तस्याः प्रत्याख्यानप्रकारः श्लाघनीयत्वेनाभीप्सितः स तावदचोद्येनालब्धावसरो भूत्वा मनस्यवतिष्ठ तमेव तावदवसरप्राप्तं श्लाघते— **कथमिति** ॥ त्वया सा कथं केन प्रकारेणाविश्वसनीयत्वेनोपलक्षिता विज्ञाता न केनचिदपि प्रकारेणाविश्वसनीयत्वं प्रतिभातीत्यर्थः । सेत्यनेन तस्या लावण्यादिगुणपरिपूर्णता दर्शिता । तस्या लावण्यादिगुणगणैरव्याक्षिप्तचित्तो भूत्वा यत्प्रत्याख्यानमकृथाः तदत्यन्तं समीचीनमिति प्रशंसापरत्वेन तद्वाक्यं व्याख्येयम् । न प्रश्नपरत्वेन । अत एवोत्तरं

लक्ष्मणः— ( सस्मितं ) सर्वत्र दाक्षिण्यात् दोषं न पश्यत्यार्यः ।
कथमौष्ण्यमग्नेश्छाद्यते ।

रामः— सत्यमेतत् ।

दाक्षिण्यमृद्वी जनता शठानां वशवर्तिनी ।
स्वयमुद्धर्तुकामानां लतेवोज्झितकण्टका ॥ १८ ॥

सा खलु स्त्रीसामान्यान्नावमन्तव्या । दुष्करं खलु त्वया कृतम् ।

( लक्ष्मणः अधोमुखस्तिष्ठति )

---

न दीयते। विदितदौरात्म्येनापि रामेण त्वयेत्यनेन तद्दौरात्म्यापरिज्ञानादेव साक्षात्प्रत्याख्यानमकृत्वा मया सा त्वत्समीपे प्रेषिता इति लक्ष्मणं प्रत्यात्मनोऽपराधाभावस्सूचितः । लक्ष्मणः पुनस्तमिममभिप्रायमजानानः सस्मितमाह— सर्वत्रेति ॥ दाक्षिण्यमत्र परच्छन्दानुवर्तित्वम् । सर्वत्रेत्यनेन सज्जनेषु दाक्षिण्यं गुण एव दुर्जनेषु तद्दोष एव भवेदिति दर्शितम् । दाक्षिण्यादेव तस्याः साक्षात्प्रत्याख्यानं न कृतम् । न तस्या दौरात्म्यापरिज्ञानादिति भावः । यत आर्यस्यैतत् दाक्षिण्यं स्वाभाविकमत एव विदितदौरात्म्यायाः तस्यास्साक्षात्प्रत्याख्यानाभावेन मत्समीपप्रेषणेन वा न कश्चिदपराध इत्यभिप्रायेणाह— कथमिति ॥ अथ तदुक्तमेव दुर्जनगोचरस्य दाक्षिण्यस्य दोषत्वमनुवादपूर्वकं साधारण्या वृत्त्या समर्थयते— सत्यमिति ॥ जनता जनसमूहः दाक्षिण्येन मृदुः जनसमूहः शठानां दुर्जनानां स्वयमेव वशवर्ती भवति । स्वयंशब्देन वशीकरणे प्रयत्नापेक्षां वारयति । उद्धर्तुकामानां पश्चादिबन्धनार्थं लतोद्धरणार्थमुद्यतानामुज्झितकण्टका निसर्गतः कण्टकरहिता यथा स्वयं वशवर्तिनी कण्टकोच्छेदनादिप्रयत्नेन विना सुग्रहा भवति तथेत्यर्थः । अविद्यमानेऽपि दाक्षिण्ये तस्याः प्रत्यादेशो दुष्कर एवेत्यभिप्रायेणाह— सा खल्विति ॥ खलुशब्देन प्रसिद्धिवाचिना तस्याः अन्यस्त्रीभ्यः सौन्दर्यादिभिर्महान्तं विशेषं प्रसिद्धत्वेन दर्शयति । स्त्रीसामान्यादित्यवमनने हेतुः न तन्निषेधे । एषा या काचन स्त्रीति स्त्रीसामान्यबुद्ध्या यदवमननं भवेत् तस्यानर्हा लोकोत्तरसौन्दर्यादिगुणैरत्यन्तं श्लाघनीयत्वात् । अतो यदेवंभूतायास्तस्याः प्रत्याख्यानं कृतं तदतिदुष्करमित्याह— दुष्करमिति ॥ अथ शूर्पणखावैरूप्यकरणमेव यथा प्रतिज्ञातस्य सर्वराक्षसवधस्य परमं द्वारं स्यात् तथा निरूप्यावधारयति— त्रिभुवनेति ॥ अस्या रावणः पूर्वजश्चेदिति ॥ अस्या

**सीता**— अज्जउत्त दाणिं वि रक्खसीं पेक्खामि विअ ।
आर्यपुत्र इदानीमपि राक्षसीं पश्यामीव ।

**रामः** —

त्रिभुवनरिपुरस्या रावणः पूर्वजश्चे-
दसुलभ इति नूनं विश्रमः कार्मुकस्य ।
रजनिचरनिबद्धं प्रायशो वैरमेत-
द्भवतु भुवनभूत्यै सर्वरक्षोवधेन ॥ १९ ॥

---

इत्यनेन वैरूप्यकरणं राक्षस्या दौरात्म्यं च परामृश्यते । यद्यस्या निग्रहो वा तर्जनभर्त्सनादिकं वा कृतं ततः कालवशेन कार्यान्तरव्याक्षेपेण वा तस्य विस्मरणमपि संभवेत् । वैरूप्यकरणं तु स्वभगिन्या रावणेन नित्यं द्रष्टुं शक्यते । अतः तद्दर्शनसमुत्थस्य वैरस्यानुवृत्तिरवश्यंभाविनीति भावः । एषा चैवंभूतदौरात्म्यादौदासीन्यमवलम्बते । यथास्मासु महान् वैरानुबन्धो रावणस्य भविष्यति तथा यतिष्यते इत्यपि दर्शितम् । पूर्वज इत्यनेन कनीयस्यां वात्सल्यातिशयो दर्शितः । तेन तद्विकारदर्शनेऽमृष्यमाणतरता द्योत्यते । त्रिभुवनरिपुरित्यनेन यो भुजदर्पडम्बरेणैवाकस्मात् त्रिलोकीनिवासिनां जनानां पीडां करोति स कथमात्मसोदरीवैरूप्यकरणं सोढुं शक्नोतीति दर्शितम् । चेच्छब्दोऽत्र लोकप्रसिद्धतत्पूर्वजत्वानुवादेन तत्फलभूतकार्मुकविश्रमासुलभत्वविवक्षया प्रयुक्तः । यथा "यद्यहं हरशिष्योऽस्मि कुर्वे निःक्षत्रियां महीं" इत्यादौ । तर्हि कार्मुकस्य विश्रमोऽसुलभ इति नूनमिति कार्मुकशब्देन धनुषः स्वव्यापारे सामर्थ्यातिशयो

---

१. एतदारभ्य अङ्कावसानपर्यन्तं यथामुद्रितं बहुषु कोशेषु विद्यते । कस्मिंश्चित्कोशे तु अधोनिर्दिष्टक्रमेण पाठो दृश्यते । व्याख्यापि अमुमेव पाठमवलम्बते—

**रामः**— त्रिभुवनरिपुरस्या इति श्लोकः ।

**सीता**— दाणिं वि रक्खसीं पेक्खामि विअ ।

**रामः**— वत्स लक्ष्मण, खड्गं निधेहि इत्यादिश्लोकः ।

**लक्ष्मणः**— यदाज्ञापयत्यार्यः ।

**सीता**— अज्जउत्त पेक्ख पेक्ख दिवसक्खअपाडलेहि किरणेहि इत्यादि

**रामः**— एष परिणतो दिवसः

रथचरणायुधस्येत्यादिपद्यम् ॥

निष्क्रान्ताः सर्वे ।

**सीता—** अज्जउत्त पेक्ख पेक्ख दिवसक्खअपाडलेहिं किरणेहिं उद्धरिअ रक्खसीए लोहिदकद्दमं पाअवसिहराइ लिंपदि विअ भअवं सुज्जो ।

आर्यपुत्र पश्य पश्य दिवसक्षयपाटलैः किरणैरुद्धृत्य राक्षस्या लोहितकर्दमं पादपशिखराणि लिम्पतीव भगवान् सूर्यः ।

---

दर्शितः । कर्मण उकञिति स्मरणात् । तेन कार्मुकस्यात्यन्तं समर्थस्यैतावन्तं स्वव्यापारानुरूपपरिपन्थिलाभाभावेनाकृतार्थस्याचिरेणैव तल्लम्भेन चरितार्थता भविष्यतीति द्योत्यते । कर्तृधर्मस्यापि विश्रमस्य करणभूते कार्मुके आरोपः तस्यैव सुकरत्वेन परिपन्थिनिग्रहस्य स्वातन्त्र्यं दर्शयितुं कृतः । तेनात्मनो बलवत्परिपन्थिनिग्रहे साध्यत्वबुद्धिलेशोऽपि नास्तीति द्योतितम् ॥ **विश्रमोऽसुलभ इति** ॥ अतः परं कानिचिद्दिनान्यस्मत्कार्मुकेणाविश्रान्तेन वर्तितव्यमित्यर्थः । इह त्रिभुवनरिपुरित्यादौ अनुरूपपरिपन्थिलाभेन सर्वातिशयो गम्यते । पुनरसुलभ इत्यत्र कार्मुकस्य प्रकृष्टप्रत्यर्थिप्रतियोगित्वाभिधानं तदनादरं सूचयत् रामस्य रणवीरस्य गर्वप्रकर्षमावेदयति । कथमेकस्य रावणस्य परिपन्थित्वे सति कार्मुकस्य विश्रमालाभः अत आह— **रजनीति** ॥ एतत् शूर्पणखाविकारहेतुकं वैरं प्रायशो रजनिचरनिवद्धं राक्षसजातिनिवद्धं यतः अतः कार्मुकस्य विश्रमालाभ इति । अथ बहुभिर्बलीयोभिः सहातिघोरस्य दीर्घतमस्य सङ्ग्रामस्य निबन्धनमपि सर्वराक्षसगतं दृढप्ररूढं वैरानुबन्धं पूर्वप्रतिज्ञातसर्वराक्षसवधानुकूलं मन्यमानो मनसाभ्यनुजानाति— **भवत्विति** ॥ अतिसर्गे लोट् । एतद्वैरमित्यस्यानुषङ्गः कर्तव्यः । अद्यप्रभृति शूर्पणखावैरूप्यकरणहेतुकं वैरं रावणादिरक्षस्सु सर्वेष्वेव दृढमुपजायताम् । उपजातं च तच्चिरमनुवर्ततां नाम नास्माकं काचित्क्षतिः । प्रत्युतात्यन्तमिष्टमेवैतदित्यभिप्रायः । कथं बहुजनवैरस्येष्टत्वमत आह— **सर्वेति** ॥ "अनन्तरेण सम्बद्धः स्यात्परस्याप्यनन्तर" इति न्यायेन पूर्ववाक्येऽनुषक्तस्य एतद्वैरमित्यस्यात्रानुषङ्गः कर्तव्यः । यत एतद्वैरं महान्तं सङ्ग्रामं द्वारीकृत्य जनितेन सर्वरक्षोवधेन हेतुना भुवनानां त्रिभुवनवासिनां जनानां भूत्यै अभ्युदयाय भविष्यतीत्यर्थात् सिध्यति अत एतद्वैरं भवतु नामेति योज्यम् । इह शूर्पणखावैरूप्यकरणहेतुकं सर्वराक्षसगतं भाविवैरमुत्प्रेक्षमाणस्य मनसो न किञ्चित्सत्त्वभङ्गोऽभूत् । एतदपि भवत्वितिशब्देन द्योतितम् । यथाह— "वीरः प्रतापविनयाध्यवसायसत्त्वमोहाविषादनयविस्मयविक्रमाद्यैः । उत्साहभूस्स च दयारणदानयोगात् त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः ॥" इति । अस्मिन् श्लोके निष्प्रतिबन्धं सर्वरक्षोवधस्य साध्यत्वप्रतीतेः प्रारब्धस्य कार्यस्य नियताप्तिर्नाम तुर्या-

रामः— एष परिणतो दिवसः । वत्स लक्ष्मण

खड्गं निधेहि शिथिलीकुरु कार्मुकज्या-
मङ्गैरपां विरजसामवगाहनार्द्रैः ।
अन्तर्नियम्य मरुतः परिवर्त्य मन्त्रान्
सायन्तनं नियममद्य वयं चरामः ॥ २० ॥

लक्ष्मणः— यदाज्ञापयत्यार्यः । ( तथा करोति )

---

वस्थापि दर्शिता । यथाह— "अपायाभावतः प्राप्तिर्नियताप्तिस्सुनिश्चिता ।" इति । आर्यपुत्र इदानीमपि राक्षसीं प्रेक्ष इवेति भयवासनानुवृत्तिर्दर्शिता । अथ रामस्सायं सन्ध्यामासन्नामालोक्य सौमित्रिसीताभ्यां सह तत्कालविहितं कर्म चिकीर्षुः लक्ष्मणं प्रति परिपन्थिविषयसन्नाहविमोचनायाह— खड्गमिति ॥ यदेतत् खड्गनिधानकार्मुकज्याशिथिलीकरणाभिधानं गोधाङ्गुलित्रकवचादिसन्नाहान्तरविमोचनस्याप्युपलक्षणम् । विरजसां विगतं रजो दोषः पांसवश्च याभ्यस्ताः विरजसः । पांसुराहित्येनापां स्वच्छता दर्शिता । एतत्स्वच्छता लाघवादिगुणान्तराणामप्युपलक्षणम् । निर्दोषत्वेनापां तीर्थत्वेन पावनत्वं दर्शितम् । स्पर्शमात्रेण सद्य एव शैत्यादिगुणसम्पन्नत्वेनातपाध्वश्रमादिसमुत्थसन्तापहारिणीनां तीर्थत्वेन राक्षसीदर्शनसंभाषणस्पर्शनादिजनिताशुद्धिनिरसनसमर्थानां गोदावरीसम्बन्धिनीनामपामवगाहनेन । "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । आर्द्रैरङ्गैः सहितास्सन्तः । वयं मरुतोऽन्तर्नियम्य । "ऊरुस्थोत्तानचरणसव्ये न्यस्येतरं करम् । उत्तानं किञ्चिदुन्नम्य मुखं विष्टभ्य चोरसा ॥ निमीलिताक्षस्सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् । तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥ सन्निरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः । द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥" इत्यादिना मुनिभिरुपदिष्टेन मार्गेण चतुर्दशभुवनान्यन्तर्भागे वशमुपनीय मन्त्रान् प्रणवव्याहृत्यादीन् परिवर्त्य सावर्तनं जप्त्वा सायन्तनं नियमं सायंकालेऽवश्यकर्तव्यत्वेन विहितं कर्म चरामः अनुतिष्ठाम इति । आर्यपुत्र प्रेक्षस्व प्रेक्षस्वेति द्विर्वचनं कौतुकातिशयं द्योतयति । भगवान्सूर्यः दिवसक्षयाद्धेतोः पाटलैरतिरक्तैः अत एव भूप्रदेशमुत्सृज्य मध्येगगनमुद्गतैः किरणैः करणभूतैः राक्षस्या रुधिरकर्दममुद्धृत्य पादपशिखराणि लिम्पतीव । क्रियोत्प्रेक्षेयम् । प्रकृतस्याप्रकृतत्वेन संभावनमुत्प्रेक्षा । सा च जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसेयत्वेन चतुर्धा भवतीति । अथ राममुखेन कविः सन्ध्यावर्णनमाश्रित्याङ्कं समापयति । एष दिवसः परिणतः अवसितप्राय इत्यर्थः । हे शशिमुखि सविता प्रतिनवानां बन्धुजीवकुसुमानां

रामः—- एष एषः

रथचरणायुधस्य चरणेन हतो रभसा-
नभस इव च्युतो नमुचिरस्रकणैः क्षरितैः ।
प्रतिनवबन्धुजीवकुसुमच्छविभिस्सविता
शशिमुखि दिङ्मुखानि किरणैररुणीकुरुते ॥ २१ ॥

( निष्क्रान्तास्सर्वे )

इति श्रीशक्तिभद्रविरचिते चूडामणिनाटके द्वितीयोऽङ्कः ॥

---

छविरिव छविर्येषां तैः अतिरक्तैः किरणैः दिशां मुखानि अरुणीकुरुते । अत्र मुखशब्देन प्रतिच्छासमानमात्मवल्लभमालोक्य कोपेनारुणीकृतवदना इवेत्युत्प्रेक्षा व्यज्यते । यथा पूर्वं देवासुरसङ्ग्रामे नमुचिर्नामातिवीरोऽसुरः रथचरणायुधस्य चक्रायुधस्य दैत्यारेः रभसात् क्रोधात् सुदर्शनेन शिरश्छित्वा चरणेन हतः प्रक्षिप्तो रभसाद्वेगात् नभसः च्युतः सन् पतनसमये परितः क्षरितैरस्रकणैः दिङ्मुखान्यरुणीचकार तथायमप्यरुणीकुरुत इति । उपमात्रालङ्कारः ।

इत्याश्चर्यचूडामणिव्याख्यायां द्वितीयोऽङ्कः ॥

# अथ तृतीयोऽङ्कः ॥

( ततः प्रविशति श्रमवानृषिकुमारः )

ऋषिः— तिष्ठतु चिराय दिवसकरान्वयो यं विभूषयता रामेण खरदूषणकर्णधारां यातुधानकेतुमतीं जनस्थानतो यमस्थान-

---

आश्चर्यचूडामणिनाटकेऽयमङ्को द्वितीयोऽपि यथामनीषम् ।
व्याकार्यथो चित्रकथासमेतमङ्कं तृतीयं विवृणोमि शक्त्या ॥

अथ कविना नीरसानुचितखरदूषणादिवधवस्तुजातं सूचयितुं विष्कम्भकः प्रथमं निबध्यते । मुनिकुमारवृद्धतापसाभ्यां मध्यमपात्राभ्यां प्रयोजितत्वादस्य विष्कम्भकस्य शुद्धत्वमवसेयम् । तदिदं सर्वं नाट्यवेदविद्भिरभिहितम्— "द्वेधा विभागः कर्तव्यः सर्वत्रापीह वस्तुनः । सूच्यमेव भवेत्किंचिद्दृश्यं श्राव्यमथापरम् । नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ॥ दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः । अर्थोपक्षेपकैस्सूच्यं पञ्चभिः प्रतिपादयेत् ॥ विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः । वृत्तवर्तिष्यमाणानां कथांशानां प्रदर्शकः ॥ सङ्क्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः । एकानेककृतः शुद्धस्सङ्कीर्णो नीचमध्यमैः ॥" इति । अथ कश्चिन्मुनिकुमारोऽभ्यस्तसमस्तविद्यतया पण्डिततमस्सन् परिच्छिन्नब्रह्मादिपिपीलिकान्तसंसारिजनस्वभावो विषयनिरपेक्षो भूत्वा तीर्थानि सेवमानो मध्येमार्गं सौमित्रिवचनात् रामेण कृतं खरदूषणयोस्तदधिष्ठितस्य बलस्य च वधमाज्ञाय पद्धतिपर्यटनपरिश्रान्तोऽप्यानन्दपर्याकुलो भूत्वा रघुवीरं मनसाभिनन्दन् तत्सम्बन्धितया तद्वंशस्यैवाशिषमाशास्ते— तिष्ठत्विति ॥ अयं दिवाकरान्वय एवमेवोदयमभ्युदयं प्राप्तः चिरकालं निरुपद्रवमवतिष्ठतामित्यर्थः । अमुमेव रामेण कृतं परममुपकारमभिप्रेत्य तदुत्पत्तिस्थानस्य दिवाकरान्वयस्याप्याशीर्वादः कृतः तमेव व्यक्तीकरोति— यमिति ॥ यं दिवाकरान्वयं विभूषयता विशेषेणालङ्कुर्वता । यथा रामेण दिवाकरान्वय उज्ज्वलोऽभूत् न तथान्येन केनापि पूर्वेण राज्ञेति भावः । तथाभूतेन रामेण सर्वा एव वनभूमयः न केवलं जनस्थानमेव मद्विधानामपि कौमारे वयसि स्थितानामपि स्वैरसञ्चारक्षमाः कृताः तीर्थयात्राव्यापृतस्य सर्वेष्वेव वनप्रदेशेषु स्वैरसञ्चारलाभात् । वनभूमय इत्यनेन सन्तोषातिशयो व्यज्यते । कथं स्वैरसञ्चारक्षमत्वं वनभूमीनामत आह— खरेति ॥ खरदूषणौ कर्णधारौ नाविकौ यस्यास्सा । सेनां प्रति नियन्तृत्वात् कर्णधारत्वारोपः ॥ यातुधानकेतुमतीमिति ॥ केतुशब्दो ध्वजे कूपके

वर्तिनीं कृतवता कृताः खलु मद्विधानामपि स्वैरसञ्चारक्षमा वनभूमयः। साम्प्रतं नूनं रामाश्रयाद्राक्षसजीवितरसज्ञा मृत्युजिह्वा लङ्कामपि लेढि। (किञ्चिद्गत्वा) तत्क नु खलु तीर्थयात्राश्रमं विगमयामि। (परिक्रम्यावलोक्य) अत्रासन्नेनाश्रमेण भवितव्यम्। तथा हि

दर्भैः सैकतमण्डलानि सरितः श्यामानि मन्त्रास्तृतै-
रभ्यासात्कलमाह शाखिनि शुकी वाक्यानि वैखानसैः।

---

च वर्तते। ध्वजेन नित्ययोगात् केतुमतीति सेनायास्संज्ञा। यथाह अमरसिंहः "ध्वजिनी वाहिनी सेना" इति। तथा कूपकेन नित्ययोगात् पोतस्यापि केतुमतीशब्दवाच्यत्वम्। स्मर्यते च नित्ययोगे मतुप्प्रत्ययः। "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुवादयः॥" इति। तथा च शब्दश्लेषोऽत्र 'यातुधानसेनायाः पोतत्वारोपनिबन्धनतया रूपकालङ्कारशेषतां प्रतिपद्यत इति ज्ञेयम्॥ **जनस्थानतो यमस्थानवर्तिनीं कृतवतेति**॥ यदि यातुधानसेना रामेण जनस्थानतोऽपसारिता वनान्तरं लङ्कापुरं वा गता स्यात् अतः पुनरागमनशङ्कया स्वैरसञ्चारो न लभ्येत। यतस्सा यमस्थानवर्तिनी कृता अतः पुनरागमनभयाभावेनाद्यप्रभृति सर्वत्र स्त्रीबालवृद्धानामपि स्वैरसञ्चारो भवतीत्यर्थः। ननु खरदूषणादिभ्यो बलवत्तमेषु दशग्रीवादिषु जीवत्सु कथं स्वैरसञ्चारलाभः अत आह—**सांप्रतमिति**॥ अयमर्थः। सर्वत्राप्रतिहतप्रवेशापि मृत्युजिह्वा एतावन्तं कालं राक्षसजीवितरसोत्सुकापि रावणादिभयादलब्धतत्प्रसरा तदर्थं कञ्चनाश्रयमपेक्षमाणा सांप्रतमिदानीं रामाश्रयात् रामाभिधानं लोकोत्तरगुणसम्पन्नमाश्रयं लब्ध्वा। 'ल्यब्लोपे पञ्चमी"। अथवा रामस्याश्रयात् आश्रयणात्। कर्तृकर्मणोः कृतीति कर्मणि षष्ठी॥ **राक्षसजीवितरसज्ञा**॥ राक्षसानां जीवितरसमनुभवन्ती। पूर्वं रावणाद्यधिष्ठितत्वेनाचिन्तनीयामपि लङ्कां लेढि यथा स्वाद्यं मध्वाद्ययत्नेनास्वादयति एवं विशिष्टाश्रयलाभादयत्नेन निष्प्रतिबन्धं विनाशयिष्यतीति। अनेन ग्रन्थेन कविना सर्वराक्षसवधोत्साहस्य बीजभूतस्य खरदूषणवधेनावान्तरप्रयोजनेन विच्छेदे प्रसक्ते तदविच्छेदाय कविना द्वितीयार्थप्रकृतिर्निबद्धेति ज्ञेयम्। यथाह— "स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा। अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्॥" इति। अथ तीर्थयात्रापरिश्रमापनयाय शीतलं प्रदेशमन्विष्य किञ्चिद्गच्छन्नेव सिकतागतदर्भास्तरणादिभिराश्रमासत्तिमनुमाय सन्तुष्टो भूत्वाह— **अत्रेति**॥ अत्र नदीतीरे

ऊर्ध्वा मातुरपास्य मां प्रति जटाचीराजिनप्रत्ययात्
नीवाराञ्जलिभिर्भृता मुनिसुतैरायान्ति बाला मृगाः॥ १॥

अत्र न शृणोमि स्वाध्यायम्। (ध्यायन्) न पश्यामि होमधूमम्। भवतु प्रविश्य ज्ञास्ये। (प्रविश्यावलोक्य) इदमाश्रमपदमचिरोत्सन्नमिव दृश्यते। तथा हि

विसृजति हुतगन्धं वेदिरास्तीर्णदर्भा
न जहति बलिभूमौ षट्पदास्सौहृदय्यम्।

---

आश्रमेणासन्नेन भवितव्यम्। कुत इत्यत आह— दर्भैरिति॥ सरितः सैकतमण्डलानि नद्यास्सिकतामयानां प्रदेशानां समूहाः मन्त्रास्तृतैः ब्रह्मयज्ञाद्यर्थं मन्त्रपूर्वकमास्तृतैः दर्भैश्श्यामानि। अनेन महर्षीणां पञ्चयज्ञानुष्ठानतात्पर्यं दर्शितम्। चिह्नान्तरमाह—शाखिनि महीरुहे स्थिता शुकी वैखानसैस्तृतीयाश्रमस्थैः मुनिभिस्सहाभ्यासात् नित्यमेवालुप्तस्वरवर्णपदक्रमादिविशिष्टाध्यापनाध्ययनश्रवणपूर्वकाभ्यासजनितादवधारणाद्धेतोः स्वयमेव वाक्यानि कलमाह उच्चारयति। कलशब्देन मुनीनामुच्चारणात् शुकीसमुच्चारणस्य स्वरवर्णाद्यलोपेन विशिष्टस्यैव सतो नादमाधुर्येणाधिक्यं दर्शितम्। अनेन विद्याभ्यासजनितविज्ञानाधिक्यमावेदितम्। अथापरेण लिङ्गेनाश्रमासत्तिमनुमिनोति। बाला मृगाः अत्यन्तं बालत्वेन स्वयं तृणादिभक्षणासमर्था हरिणादयो मातुरूधोऽपास्य स्तन्यपानसमय एव मुनिकुमारकृतोपलालनातिशयसमुद्भूतेन स्नेहेन स्रवत्क्षीरमप्यूधोभारमुत्सृज्य जटाचीराजिनप्रत्ययात् जटाचीराजिनैः कृतात् विश्वासात् मदङ्गस्थजटाचीराजिनादिदर्शनेनापरिचितचरेऽपि मयि परिचितचरमुनिकुमारबुद्ध्या सञ्जातात् विश्वासादित्यर्थः। सञ्जातौत्सुक्या भूत्वा मां प्रत्यायान्ति। अत्र हेतुः— मुनिसुतैर्नीवाराञ्जलिभिर्भृता इति॥ अनेन वाक्येन कुमाराणामपि दयालुत्वं दर्शयतान्येषां दयालुत्वातिशयो दर्शितः। एवं बहिरङ्गभूतैः चिह्नैराश्रमासत्तिमनुमाय तदनन्तरमन्तरङ्गभूतस्वाध्यायाध्ययनहोमधूमाद्यनुपलम्भेन डोलायमानमानसो भूत्वाह— अत्रेति॥ भवतुशब्दः करिष्यमाणकर्माध्यवसाये। यथाह— 'भवत्वान्तरनिर्णये' इति। अथ प्रविश्यावलोक्य मुनीनामदर्शनेन तत्कालवृत्तकर्मानुष्ठानचिह्नभूतहुतगन्धाद्युपलम्भेन च मुनिभिस्तत्कालकृतमाश्रमाणां परित्यागमनुमिनोति— इदमिति॥ अचिरोत्सन्नमचिरेण विनष्टं विनष्टा पुरीत्यादिवदाधेयविनाशस्याधारे उपचारेणैवमुक्तम्। विनाशचिह्नान्येव दर्शयति— विसृजतीति॥ इयं वेदी गार्हपत्याहवनीययोर्मध्ये उत्खातः आकीर्णदर्भः भूप्रदेशो वेदिः। यद्यपि हुतगन्धविसर्जने वेदिर्न साक्षा-

इदमपि तरुशाखाचक्रवाले विषक्तं
द्विगुणयति पिशङ्गं वल्कलं पल्लवानाम् ॥ २ ॥

अत्र हि कश्चिद्विद्यते चेदाह्वयामि । अहमतिथिः कोऽत्र भोः ।

( नेपथ्ये ) इत इतस्स्वागतमतिथये ।

ऋषिः— न शून्यमिव ।

( ततः प्रविशति यात्रासम्भारव्यापृतो वृद्धतापसः )

वृद्धः— इत इतः स्वागतमतिथये ।

ऋषिः— तपोधन भवन्मात्रावशेषं वह्वाभोगमाश्रममहं पश्यामि ।

---

त्कर्त्री तथाप्याहवनीयसामीप्याद्वेयाः तत्त्वारोपेणैवमभिधानं सङ्गच्छते । षट्पदाः बलिभूमौ तत्कालानुष्ठितभूतयज्ञायां भूमौ सौहृदय्यं सुहृदयत्वं हृदयसौख्यमिति यावत् । बल्यर्थचन्दनकुसुमादिपरिमलमध्वास्वादादिसंभूतमानन्दं न जहति । किन्त्वनुभवन्त्येवेत्यर्थः । तरुशाखाचक्रवाले विषक्तं वातादिभिरनार्द्रीभूततां संभावयितुं तरूणां शाखासमूहे विषक्तमवस्थितम् । अवस्थापनं विना तदसंभवात् तदाक्षिपति । एवंभूतमिदं वल्कलमपि कर्तृ पल्लवानां पिशङ्गं कर्म द्विगुणयति । गोरोचनासदृशो वर्णः पिशङ्ग इत्युच्यते । अत्र गुणमात्रपरश्चायं शब्दः । अत एव पटस्य शुक्ल इतिवत् पल्लवानां पिशङ्गमिति गुणिना सम्बन्धो दर्शितः । वल्कलगतस्य पिशङ्गिम्नः पल्लवेषु संक्रमणात् द्विगुणत्वम् । वल्कलमित्येकवचनं सामान्यैकत्वाभिप्रायेणेति ज्ञेयम् । इह वल्कलानां नूतनत्वेनानातिचिरशोषितत्वेन च संभूतः पिशङ्गिमातिशयः आश्रमस्य तत्कालपरित्यागावगमे लिङ्गं भवति ॥ अत्र कश्चिद्विद्यते चेत् आह्वयामीति ॥ आह्वानेन तज्ज्ञास्यामीति पर्यवसानम् । अथ दशग्रीवं मारीचाश्रमं प्राप्तमाकर्ण्य तद्भयान्मुनिषु निर्गतेषु कश्चित् तापसो वार्धक्यकृतयाशक्त्या विलम्बमानो यात्रार्थं दण्डासनकमण्डल्वादिसंभारोद्वहनव्यापृतः सहसा मुनिकुमारस्याह्वानमाकर्ण्याह— इत इत इति ॥ इहात्यन्तवृद्धेन संभ्रान्तमानसेनाप्यतिथिगोचरस्समुपचारो नोज्झित इत्येतदवगम्यमानं तत्रत्यानां ऋषीणामतिथिपूजातात्पर्यातिशयमावेदयति । अत्र दर्भैरित्यत्र जपयज्ञे तर्पणात्मके पितृयज्ञे च निष्ठा दर्शिता । सृजति न जहतीत्यादिवाक्यद्वये देवयज्ञे भूतयज्ञे च तात्पर्यं दर्शितम् । इदानीमतिथिपूजात्मके मनुष्ययज्ञे च श्रद्धा दर्शिता । एवं पञ्चयज्ञानुष्ठानपरत्वमधस्तनेन ग्रन्थेनावेदितं भवतीति । अथाश्रमस्याचिरोत्सन्नत्वे हेतुं जिज्ञासमानः

**वृद्धः**— अयं तावत्पौलस्त्यबन्धोर्मारीचस्याश्रमः ।

**ऋषिः**— श्रूयते स कौशिकसुतेभ्यो रामशरोच्छिष्ट इति । किं स एव ।

**वृद्धः**— अथ किम् । अस्ति रावणभगिनी शूर्पणखा नाम ।

**ऋषिः**— तिष्ठ, तपोवने रामशासनात्सञ्चरतो लक्ष्मणस्य मुखादेव श्रुतं शूर्पणखाविरूपकरणं खरदूषणवधश्च, ममापूर्वो मारीचवृत्तान्त एव ।

**वृद्धः**— ततः सक्रोधो रावणः मारीचस्याश्रममागतवान् ।

---

आह— **तपोधनेति** ॥ भवन्मात्रं भवानेवावशेषः अवशिष्टो यस्मिन् । अवशेषशब्देन पूर्वं सन्निहितानामेवेदानीं निमित्तान्तरादसन्निधानं दर्शितम् । तेन तन्निमित्तजिज्ञासा सूचिता । बह्वाभोगत्वं तस्य बहुमुनिजनसद्भावादूरं गमयति । इहाश्रमस्यैवंभावे किं निमित्तमिति प्रश्ने वाक्यस्य पर्यवसानम् । अथ तन्निमित्तं वक्तुं उपोद्घातरूपं कथान्तरं प्रस्तौति— **अयमिति** ॥ तावच्छब्देन प्राथम्यवाचिना पश्चादपि बहु वक्तव्यमस्तीति सूचितम् ॥ **पौलस्त्यबन्धोरिति** ॥ ततः सक्रोध इत्यादिना वक्ष्यमाणस्य रावणकर्तृकस्य मारीचाश्रमगमनस्य बीजत्वेनोक्तम् । अयमित्यनेनाश्रमस्यासन्नत्वेन तत्रत्यवृत्तान्तपरिज्ञानसौकर्यं दर्शितम् ॥ **श्रूयते इति** ॥ स मारीचः कौशिकसुतेभ्यः रामशरोच्छिष्टः श्रूयते इत्यन्वयः । कौशिकसुतेभ्य इत्यनेन समानवयस्कत्वेन तैस्सह स्वैरसंभाषणसंभावना दर्शिता । उच्छिष्टशब्देन यथा भोक्त्रा भुज्यमानस्यौदनादेरेकदेशं प्रस्तरादिदोषमिश्रतया उपेक्ष्यते तथा कबलीक्रियमाणसुबाह्वादिराक्षसेन रामशरेण मद्यथापलं पश्यतायमप्युपेक्षित इति दर्शितम् । श्रूयत इति वर्तमाननिर्देशः श्रवणकार्यस्य तद्वृत्तान्तावगमस्य कौतुकानुवृत्तिं दर्शयितुं कृत इति ॥ **किं स एवेति** ॥ किं स एव भवता मारीचः इत्युक्त इत्यर्थः । अथ वृद्धतापसस्तद्वचनादेव मारीचस्य रामभयात्तपश्चरणं तेन विदितं जानानः तत्कथनमुपेक्ष्य दशग्रीवस्य मारीचाश्रमप्राप्तिनिदानभूतं शूर्पणखावृत्तान्तं वक्तुमारभते— **अस्तीति** ॥ तिष्ठेत्यनेन गतिनिवृत्तिवाचिना वचनोपरतिर्लक्ष्यते । एतन्मा वोच इति यावत् । तपोवने रामशासनात् सञ्चरतो लक्ष्मणस्येत्यनेन कविना रामलक्ष्मणयोः सह प्रवेशाभावनिमित्तं दर्शितम् । अनेनैव लक्ष्मणेनाभिधास्यमानस्य चूडामण्यादिलाभावसरप्राप्तिरपि दर्शिता ॥ **ममापूर्व इति** ॥ योऽयं मारीचस्याश्रम इत्यनेन मारीचवृत्तान्तो वक्तुमुपक्रान्तः स एवापूर्वः । अविदितचरत्वादभिनव इत्यर्थः ॥

ऋषिः— ततस्ततः ।

वृद्धः— ततः "त्वं मृगरूपेण रामं विलोभ्य दूरीकुरुष्व तावदहं सीतां स्वीकरिष्यामि" इति बहुशस्तेन स निर्बद्धः ।

ऋषिः— ततस्ततः ।

वृद्धः— ततस्तदानीं रामगौरवं बहुधा व्याहृत्य मुहूर्तं तूष्णीं समपद्यत स मारीचः ।

ऋषिः— सदृशमनुष्ठानमस्य । ततस्ततः ।

वृद्धः— ततः सक्रोधो रावणः

रचयन् भ्रुकुटीः प्रहस्य कोशा-
दुदहार्षीदसिमुन्मयूखरेखम् ।
विषमीभवति स्म यस्य धारा
सममैरावतदन्तिदन्तकोशैः ॥ ३ ॥

---

ततः सक्रोध इति ॥ खरदूषणवधश्रवणानन्तरं अथवा आत्मभगिनीवैरूप्यकरणात् खरदूषणवधाच्च हेतोः सक्रोध इति ॥ तावदिति ॥ यावन्मायाबलपरिगृहीतविचित्रमृगरूपेण सीतासविधात् त्वया रामो दूरीकृतो भवति तावदित्यर्थः ॥ बहुश इति ॥ बहुशो निर्बन्धेन निवृत्ते कर्मणि तस्यात्यन्तमननुमतिर्गम्यते । तदेवाननुमननप्रकारमाह— रामगौरवमिति ॥ सदृशमिति ॥ यदिदमात्मभागिनेयेन निर्बन्धे कृतेऽपि परवञ्चनात्मकात् कर्मणो निवर्तनं कृतं तत्तपश्चरणात्मकस्यानुष्ठानस्यात्यन्तं सदृशमनुरूपमित्यर्थः ॥ तत इति ॥ ततोऽनन्तरं बहुधा व्याहृतरामगौरवश्रवणादात्मनियोगानादराच्च रावणः सक्रोधो भूत्वा प्रहस्य रामगौरवप्रतिपादनपरं वाक्यं तद्भीतिकृतं मन्यमान इव प्रकृष्टेन हासेनाधिक्षिप्य भ्रुकुटीरत्यन्तं रचयन् । भ्रुकुटीति भ्रुवोः क्रियाविशेषः । यथोक्तं भरतमुनिना—"भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता ।" इति । तथा तेनैवास्याः क्रोधानुभावत्वमपि दर्शितम् । "क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका । भ्रुकुटी कुटिला दृष्टिः क्रुद्धा क्रोधे विधीयते ॥" इति । कोशादुन्मयूखरेखं उद्गता मयूखरेखा यस्मात् तं चन्द्रहासाख्यमसिमुदहार्षीदुद्धृतवान् । यस्य चन्द्रहासस्य धारा एकैव ऐरावताख्यस्य वासवदन्तिनो दन्तकोशैश्चतुर्भिरपि समं विषमीभवति स्म विप्रतिपद्यते स्म । विषमीभावो मनोवाक्कर्मणां साम्याभावः प्रातिकूल्यमिति यावत् । योगिप्रतियोगिनोर्हि मनोवाक्कर्मणां प्रातिकूल्येन प्रवृत्तिर्वि-

ऋषिः— तत्र न विस्मयः । ततस्ततः ।

वृद्धः— ततस्सद्यः प्राणभयान्नु पूर्ववैरस्मरणान्नु स रावणविधेयतां प्रतिपन्नः ।

ऋषिः— ध्रुवमभिजनानुरूपमनुष्ठानम् । कुतः

असतां सहजो भावश्छन्नः केनापि हेतुना ।
संस्कार इव बीजानां फलेन सह जायते ॥ ४ ॥

---

प्रतिपत्तिः ॥ तत्र न विस्मय इति ॥ अनाहतात्मवचनस्य स्वमातुलस्य वधायोद्यतो रावण इति यत् तत्र न विस्मयलेशोऽपि । तस्यैतादृशस्य कर्मणः स्वभावसिद्धत्वादिति भावः ॥ सद्य इति ॥ यद्यपि रामगौरवं जानानेन तेन रामादप्यात्मविनाशो निश्चित एव तथापि तत्क्षणे प्राणान् रक्षितुं रावणस्य विधेयतामधीनतां प्रतिपन्न इत्यर्थः ॥ पूर्ववैरस्मरणान्न्विति ॥ पूर्ववैरानुस्मृतौ सत्यामपि पूर्वमसौ प्राणभयात् तपश्चरणव्याजेन तूष्णीं भूतोऽभूत् । इदानीं सर्वथा प्राणविनाशे निश्चिते भागिनेयप्रियं पूर्ववैरनिष्क्रयं चैकेन कर्मणा साधयितुमुद्यतोऽभूदिति भावः ॥ ध्रुवमिति ॥ अभिजनानुरूपं दुष्टजन्मनोऽनुरूपमेतदनुष्ठानमित्यर्थः । अथवाभिजनः कुलम् । राक्षसकुलस्यानुरूपमेतदनुष्ठानम् । यथामरसिंहः— "कुलेऽप्यभिजनो जन्मभूमौ" इति । अत एव ध्रुवं स्थिरम् । तपश्चरणात्मकधर्मानुष्ठानं तु रामभयाद्युपाधिकमेव । अतस्तस्माज्जन्मसिद्धत्वेन परवञ्चनाद्यधर्मानुष्ठानस्यैव बलवत्तरत्वमिति भावः । ननु न मारीचस्य जन्मसिद्धः परवञ्चनाद्याग्रहो रामवञ्चनात्मकेऽनुष्ठाने निमित्तं तस्य रामभयात्क्रियमाणेन तपसा विनाशितत्वात् । अतः प्राणभयमेवात्र हेतुरित्यभिप्रायेण हेत्वपेक्षां दर्शयति— कुत इति ॥ असतां जात्यैव दुष्टानां दानवराक्षसादीनां सहजो यो भावः परहिंसावञ्चनाद्यभिरुचिः स यदा केनापि हेतुना भयादिना छन्नः स्वकार्यभूतपरहिंसाद्यकरणात् तिरोभूतो भवति तदान्येषामयं भावो विनष्ट इति प्रतिभासो भवति । पुनस्तस्य हेतोरपगमे सति स्वकार्यं परहिंसादि कुर्वाणः फलेन सह जायते परमफलेन वञ्चनमरणादिना सहाभिव्यज्यते । फलाभिव्यक्तौ सत्यामेषां सहजो भावो न विनष्टः किन्तु छन्न एव एतावन्तं कालमवस्थित इत्यवगम्यत इत्यर्थः । अत्र जायत इत्यनेनाभिव्यक्तिर्लक्ष्यते । अत्र दृष्टान्तः । यथा बीजानां संस्कारः दृष्टरूपत्वान्निसर्गत एव छन्नोऽनभिव्यक्तस्सन् अङ्कुरादिकार्यं कुर्वाणः परमफलेन व्रीह्यादिना सहावगम्यते । अत्र केनापि हेतुनेति न दृष्टान्तो योजनीयः । एवं मारीचवृत्तान्तमभिधाय तपो-

ततस्ततः ।

वृद्धः— ततस्तस्मादितो रावणदूषितादुद्विग्ना निरगच्छाम्नियमिनः ।
दृश्यते ननु त्वयापि मे गमनत्वरा ।

ऋषिः— यद्येवं साधयतु भवान् । अहमितो गच्छामि ।

वृद्धः— बाढम् ।

( निष्क्रान्तौ )

॥ विष्कम्भकः ॥

( ततः प्रविशति रामः सीतया सह )

रामः— ( निमित्तं सूचयन् ) देवि अथमद्य

आक्रान्ताः किन्नु बालो भरत इति परैरुत्तराः कोसला मे
स्वर्गं शोकातिभारान्मम जनकसुते किन्नु याता जनन्यः ।

---

वनस्य रावणदूषितत्वं तपोधनानामसन्निधाने हेतुमाह— तत इति ॥ एवं चेत् भवान्कुतो नागादिति चोद्यानवकाशाय दृश्यत इति ॥ साधयतु भवानिति ॥ यतो भवतोऽतिथिगोचरसमुदाचारविधानस्य वा ममातिथ्यपरिग्रहस्य वा नायमवसरः । अतस्साधयतु शीघ्रं गच्छत्वित्यर्थः । अहमपि शीघ्रमन्यत्र गत्वाध्वश्रममपनयामीत्यर्थः । एवं कविः शुद्धविष्कम्भकेण वृत्तं खरदूषणवधं रावणस्य सीताहरणोद्यमं च वर्तिष्यमाणं तान्नयोगात् मारीचस्य मायाप्रयोगं च सूचयित्वाधुना अङ्कमारभते— ततः प्रविशतीति ॥ निमित्तं सूचयन्निति ॥ अनिष्टसूचकं वामबाहुस्फुरणादि निमित्तमभिनयन्नित्यर्थः । देवि जनकसुते वामाक्षीति सम्बुद्धित्रयेण कान्त्यभिजनलावण्यप्रकर्षैः सीतायाः प्रशंसा क्रियते । अनया प्रशंसया प्रणयातिशयो व्यज्यते । अयं च प्रणयातिशयो भाविनो विरहदुःखस्य पोषकतां प्रतिपत्स्यते । अद्येदानीं वामो बाहुः भूयो भूयः स्फुरति यतस्ततोऽस्माकं किञ्चिदनिष्टं अवश्यम्भावीति मन्यामहे । तत्र पितरि स्वर्गं गते मयि च दूरस्थे परैश्छिद्रान्वेषिभिः ॥ बालो भरत इति ॥ इतिशब्दो हेतौ । भरतस्य बालत्वात् । तं परिभूय मे उत्तराः कोसलाः आक्रान्ताः किन्नु । बालो भरत इत्यनेन पारतन्त्र्येण स्वच्छन्देन च एवंभूतानिष्टशङ्कायां भ्रातृस्नेहो राज्याभिलापश्च निमित्तत्वेन गम्यते । न चास्य वचनस्य हृते राज्य इत्यनेन विरोध इति वाच्यम् । तस्य सौमित्रेर्मातृगोचरसंरम्भनिरासमात्रपरत्वात् । इतरथा

रक्षोभिश्छन्नमन्यैः खरवधरभसाद्वर्तते किन्तु माया
वामो वामाक्षि बाहुः स्फुरति तव शिखाबन्धनस्यैकबन्धुः ॥

सीता— अज्जउत्त णं तवो एव्व संति अमङ्गळस्स ।
आर्यपुत्र ननु तप एव शान्तिरमङ्गलस्य ।

( ततः प्रविशति मारीचः )

मारीचः— ( सचिन्तं )

---

चतुर्दशवर्षानन्तरं राज्यप्राप्तिरपि न घटेत । अथ भरतस्य बालत्वेऽप्यशक्तिर्न शङ्कितुं शक्यते । अस्माकं च वनं गतानां चतुर्दशसंवत्सरेषु द्वित्रा एव संवत्सरा अवशिष्यन्ते । अत इदानीं भरतस्य बालत्वमप्यपगतप्रायमेव । अस्माकं च राज्यप्रवेशकालोऽचिरेण वर्तिष्यते । अतः परैरिदानीमुत्तरकोसलाक्रमणे चिन्तापि न क्रियेतेति मन्यमानो मातृस्नेहेनान्यदनिष्टमाशङ्कते— स्वर्गमिति ॥ मम जनन्य इत्यविशेषनिर्देशेन कैकेयीसुमित्रयोरपि कौसल्यायामिव भक्तिस्नेहादीनामाधिक्यं गम्यते । शोकातिभारात् भर्तृवियोगेनास्मद्विप्रवासेन च जनितस्य प्रतिक्षणं वर्धमानस्य दुःखस्यातिशयेन भरणात् स्वर्गं गताः किन्तु । अथैतावन्तं कालं दुःखं सोढ्वावतिष्ठमाना मम जनन्यः इदानीमवसितप्राये मम वनवाससमयेऽस्मद्दर्शनाशामवलम्ब्य जीवेयुरेवेति मत्वानिष्टान्तरमाशङ्कते—रक्षोभिरिति ॥ कर्तृनिर्देशः क्रियां विनानुपपद्यमानस्तामाक्षिपति । ततश्चात्र मायाविशेषणतया क्रियमाणेति पदं द्रष्टव्यम् । प्रत्यक्षतोऽस्मान्परिभवितुमसमर्थैरन्यैः रक्षोभिः खरवधरभसात् खरादिवधसञ्जातात्क्रोधात् छन्नं परोक्षीभूय क्रियमाणा माया वर्तते किन्तु । राक्षसमायाप्रभावप्रभवं यत्किञ्चिदनिष्टमस्माकमनेन सूच्यते किन्तु । तत्रापि तव शिखाबन्धनस्यैकबन्धुरित्यनेन मायाहेतुकस्य व्यसनस्य सीतागोचरत्वाशङ्का व्यज्यते । अत्र शिखाशब्देन केशपाशो लक्ष्यते । बन्धनशब्देन सान्द्रतयान्योन्यं दृढं संश्लिष्यावस्थितः समूहोऽभिधीयते । न तु नहनं श्लथिताशिरोरुहनिबन्धनं तव मूर्धजन्मनां उच्छ्वसत्कुसुमबन्धनं सुरभिकेशबन्धनमित्यादिष्विवास्मिन्नेव नाटके तथा प्रयोगदर्शनात् औचित्यातिरेकाच्च । मदीयवामाङ्कनिषादिन्याः तव शिखाबन्धनस्य केशकलापस्य सर्वदोद्वहनदानेनाश्रयभूतत्वात् एकबन्धुः प्रधानभूतो बन्धुः । दक्षिणबाहोस्संयमनालङ्करणादावेवोपकर्तृत्वम् । अस्य तूद्वहनेनाप्युपकर्तृत्वात् ततोऽधिकमिति भावः । इह शङ्का नाम व्यभिचारी दर्शितः । यथाह— "अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् । कम्पशोषादिवीक्षादिरत्र वर्णस्वरान्यता ॥" इति । आर्यपुत्र ननु तप एवामङ्गलस्य शान्तिः

बन्धुस्नेहो नु पापस्य जन्मनः प्रभुता नु मे ।
अपहस्तितसद्वृत्तं यन्मयेदमनुष्ठितम् ॥ ६ ॥

अथवा किं बहुना ।

रामाभिधानस्य परस्य पुंसः
शरव्यमापाद्य शरीरमेतत् ।
रक्षांसि सर्वाणि यमस्य लोकं
प्रविश्य पूर्वं प्रतिपालयामि ॥ ७ ॥

तत्क नु खलु रामाश्रमः । यत्र सपत्नीकं रामं विचित्रमृगरूपेण विलोभयामि । ( निष्क्रान्तः )

---

शान्तिकरमित्यर्थः । अथ मारीचोऽनिच्छन्नपि भवितव्यतावलात् रावणनियोगमङ्गीकृत्य रामं वञ्चयितुमुद्यतः सानुतापमाह -मया यदिदं रामवञ्चनात्मकं कर्मानुष्ठितमनुष्ठीयते । शान्तः पुष्ट इत्यादिवद्वर्तमाने निष्ठा । अपहस्तितसद्वृत्तमिति क्रियाविशेषणम् । पूर्वं मया नीचजनेन दुर्लभमपि यत्तपोऽनुष्ठानं नाम सद्वृत्तमङ्गीकृतं तदपहस्तितं हस्तादपभ्रष्टं यस्मिंस्तत्तथोक्तम् । तत् बन्धुस्नेहः किन्तु । बन्धुस्नेहस्य कारणभूतस्यानुष्ठाने कार्ये समारोपादेवमुच्यते । मे पापस्य जन्मनः पापजातिसम्बन्धित्वात् पापत्वं जन्मनः प्रभुता शक्तिः किन्तु । अत्रारोपादेवमुक्तम् । अथानुष्ठीयमानस्य कर्मणः श्रेयस्करत्वमवगम्य प्रसन्नो भूत्वाह— अथवा किं बहुनेति ॥ सद्वृत्तपरित्यागादिनिबन्धनानुतापेनानुष्ठिते कर्मणि कारणचिन्तया च किमित्येवं प्रथमप्रश्ननिषेधे । अथवाशब्दः पक्षान्तरपरिग्रहे । अध्यवसितस्य कर्मणः श्रेयोहेतुत्वमाह — रामेति ॥ अहमेतच्छरीरम् । शरीरशब्देन विनाशित्वेन तस्मिन्ननास्था दर्शिता । रामाभिधानस्य राम इति संज्ञामात्रेणाज्ञानामन्यभ्रान्तिं कुर्वाणस्य परस्य पुंसः श्रीनारायणस्य शरव्यमापाद्य वञ्चनात्मकस्यापि कर्मणः फलभूतेन तच्छरलक्षतापादनेन श्रेयःपर्यवसायित्वमिति भावः । पूर्वमेव यमस्य लोकमपरसम्बाधं प्रविश्यान्यानि रक्षांसि प्रतिपालयामि । इह शरीरादौ विरक्तिः दाशरथौ भक्त्यतिरेको रावणादिष्वबहुमानश्च क्रमेण व्यज्यते ॥ सपत्नीकं रामं विलोभयामीति ॥ सीताया अपि विलोभनेऽध्यवसायो दर्शितः । राममित्यनेन रावणनियोग एव विलोभने हेतुः नात्मनः प्रद्वेष इति दर्शितम् । अथ लक्ष्मणः खरदूषणवधानन्तरं रामनियोगान्मुनीननुगम्यार्यशासनं विज्ञाप्य तैरात्मने दत्तं कवचमवमुच्यायाभ्यां दत्तमङ्गुलीयकं

( ततः प्रविशति लक्ष्मणः कवचधरः )

लक्ष्मणः— "खरदूषणवधादुद्धृतकण्टकं जनस्थानमासीत् । अतो यथास्वं युष्माभिराश्रमपदानि सनाथीक्रियन्तां" इत्यार्यशासनात् विज्ञापितानां मुनिवृषभाणामनुग्रहाल्लब्धं कवचमकालेऽपि धारयामि । अपि च तैर्दत्तमार्याभ्यामलङ्करणीयम्

वहामि मायापिशुनं रिपूणां
शरीरयोगे सति धार्यमाणम् ।
आश्चर्यभूतं मणिमंशुमाला-
गूढं सरत्नं च कराङ्गुलीयम् ॥ ८ ॥

यावदार्यमुपसर्पामि । ( उपेत्य ) जयत्वार्यः ।

रामः— ( विलोक्य ) दिष्टया लब्धानुग्रहो लक्ष्मणः । लक्ष्मण किं दृष्टस्त्वया स वन्द्यो जनः ।

लक्ष्मणः— दृष्टः प्रत्येकं समूहतश्च । यथोक्तं विज्ञापितश्च ।

---

चूडामणिं चादाय प्रतिनिवर्तमानः हर्षातिशयेन तामवस्थां निरूपयति — खरेति ॥ उद्धृतकण्टकमिति श्लिष्टम् । यथामरसिंहः-"सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः "इति । युद्धसमय एव कवचधारणस्यौचित्यात् अकालेऽपीत्युक्तम् । अकालधारणे हेतुः— मुनिवृषभाणामनुग्रहाल्लब्धमिति ॥ अनेन तद्भक्तिवैवश्यमधारणेऽनादरप्रसङ्गश्चाकालेऽपि कवचधारणहेतुरिति दर्शितम् ॥ अपि चेति ॥ तैरार्याभ्यामार्यायै आर्याय च दत्तमाश्चर्यभूतं मणिं चूडामणिं सरत्नं कराङ्गुलीयं च वहामीत्यन्वयः । विशेषणान्युभयत्र साधारणानि । अंशुमालागूढं परितः प्रसृमरैः रश्मिसमूहैश्छन्नं अत एवालङ्करणीयमत्यन्तमलङ्करणयोग्यं न केवलमलङ्करणमेवानयोः प्रयोजनम् । परमं प्रयोजनान्तरमप्यस्तीत्याह— धार्यमाणं अलङ्क्रियमाणम् । आभ्यामलङ्कृताङ्गयोरार्ययोर्मायिनां रिपूणां शरीरेण योगे संस्पर्शे सति तेषां मायापिशुनं मायासूचकं मायेयमिति ज्ञानस्य हेतुभूतं तन्निवर्तकमिति यावत् । " पिशुनौ खलसूचकौ" इत्यमरः ॥ दृष्टः प्रत्येकं समूहतश्चेति ॥ प्रथमं प्रत्येकं दृष्टानां पुनस्संभूय मायोपशमनोपायभूतचूडामण्यादिनिष्पत्त्यर्थं चिन्तामा-

रामः— ( आसनादुत्थाय ) किमाज्ञापयन्ति परापरविदः ।

लक्ष्मणः— आर्य श्रूयताम् ।

"क्षतजकणिकापातात्सन्ध्याघनच्छवि रक्षसां
नृवर सलिलं गोदावर्या न नो नियमक्षमम् ।
विषमिततला देवी विश्वम्भरा च समन्ततो
धरणिधरसङ्काशैस्तेषां कलेवरसञ्चयैः ॥ ९ ॥

ततः कतिपयाहमत्रस्था एव वयं भद्रमुखमाशीर्भिर्वर्धयाम"
इति ।

रामः— अयमनिर्वन्धविषयो राशिः । ( उपविशति )

लक्ष्मणः— प्रसीदत्वार्यः । ( दर्शयत्याश्चर्यचूडामणिमद्भुताङ्गुलीयकं च )

---

वेदयति— परापरविद इति ॥ परमुत्कृष्टं परब्रह्म अपरं तदर्वाचीनं अवि-द्याख्यमज्ञानं तदुभयं विदन्तीति परापरविदः । आर्य इत्याज्ञापयन्तीति सम्ब-न्धः । आज्ञापनप्रकारमाह— क्षतजेति ॥ हे नृवर लोकोत्तरपराक्रमादिगुणस-म्पन्नतया सर्वेषामेव नृणां श्रेष्ठ यदिदं भवता लक्ष्मणमुखेन यथास्वमाश्रमपदे-ऽवस्थानं निवेदितं तदत्यन्तमुचितमेव किन्तु कतिपयान्यहान्यतीत्य तत्क-रिष्यामः । यतो गोदावर्याः सलिलमिदानीं नोऽस्माकं नियमक्षमं नियमशब्देन इतिकर्तव्यतादिभिः कालविशेषैर्मन्त्रविशेषैश्च नियतानि त्रिषवणस्नानब्रह्मयज्ञत-र्पणादीनि नियम्यन्त इत्यनया व्युत्पत्त्याभिधीयन्ते । तेषां न क्षमं अनुचित-मित्यर्थः । अत्र हेतुः रक्षसां क्षतजकणिकानां रुधिरबिन्दूनामापातादिति । रु-धिरविन्दुसंभिन्नत्वज्ञाने लिङ्गं सन्ध्याघनच्छवीति । हेत्वन्तरमाह— विषमि-तेति ॥ यतश्च देवी विश्वम्भरा धरणिधरसङ्काशैः पर्वतसमानैस्तेषां कलेवरसञ्च-यैः समन्ततो विषमिततला सञ्जातनिम्नोन्नतस्वरूपा । अनेनाशुद्धिः स्वैरसञ्चारा-क्षमत्वं च दर्शितम् । यत एवं तत्तस्मात् कतिपयाहं कतिपयान्यहानि अत्रस्था एव भद्रमुखं त्वामाशीर्भिर्वर्धयामः । अनन्यपरेणाप्यनेन वाक्येन रामप्रशंसापि तैः कृतेति द्रष्टव्यम् ॥ अयमनिर्वन्धविषयो राशिरिति ॥ अत्र राशिशब्दः समूहवाची प्रकरणबलात् मुनिसमूहे वर्तते । उत्तरत्रासाधारणसुखार्थी वर्ग इति वर्गशब्देन समूहवाचिना मुनिसमूहस्योपादानात् राशिशब्दस्यैवमर्थत्वं निश्चीय-यते । अयमभिप्रायः। यावत् गोदावर्याः तत्तीरप्रदेशानां वा शुद्धिर्भविष्यति ता-वदहमत्र स्थित्वा भवद्भिस्सहैव गमिष्यामीति निर्वन्धमकृत्वैव त्वं प्रत्यागा इ-

रामः— ( दृष्ट्वा सविस्मयम् ) आश्चर्यमाश्चर्यम् ।

सीता— अच्चेरं अच्चेरं ।　　आश्चर्यमाश्चर्यम् ।

रामः— किमाह फलं स वन्द्यो जनः ।

लक्ष्मणः— आर्य

मणिमंशुकेसरितमङ्गुलीयकं
　　कलधौतसिद्धमपि धारयन्ति ये ।
समवाप्य तानवशमाशु मायिनः
　　प्रकृतिं व्रजन्ति सहसा क्षपाचराः ॥ १० ॥

इति । प्रसीदत्वार्यः न महर्षिशासनमुपेक्षणीयम् ।

( पुनरुपनयति )

रामः— लक्ष्मण कवचस्य किमाह फलमसाधारणसुखार्थी वर्गः ।

लक्ष्मणः— शरेभ्यो मर्माणि रक्षतीति ।

रामः— यद्येवं, आनय प्रतिगृह्णामि सिद्धार्थानां प्रीतिलता-

---

ति यत् तदत्यन्तं समीचीनमेव । यतो मुनीनां समूहो निर्बन्धस्य विषयो न भवति । अथवा राशिशब्देन मेषादिकालैकदेशवाचिना तद्गतं कालसामान्यं लक्ष्यते । तथा चायं कालो निर्बन्धविषयो न पूर्वोक्तप्रकारेण गोदावरी-तीरप्रदेशानां निवासयोग्यत्वाभावादित्यर्थः सम्पत्स्यते ॥ **किमाह फलं स वन्द्यो जन इति** ॥ जटाचीरधारिणामस्माकमलङ्क्रियानपेक्षित्वात्त-न्मात्रफलत्वमनयोर्न संभवतीति अभिप्रेत्य फलान्तरप्रश्नः कृतः । तदुक्तं फलमाह— **मणिमिति** ॥ ये अंशव एव केसराः सञ्जाता अस्येति अंशुके-सरितम्, । "तदस्य सञ्जातं तारकादिभ्य इतच्" इति इतच् । एतदुभयो-र्विशेषणं, सरत्नं च कराङ्गुलीयकमित्युक्तत्वात् । तथाभूतं मणिं कलधौतसिद्धं हे-म्ना सिद्धिमुपगतं अङ्गुलीयं च धारयन्ति । मायिनो मायया रूपान्तरं प्रतिपन्नाः क्षपाचराः तान्समवाप्य संस्पृश्याशु तदैवावशं मायया प्रकृतिप्राप्तिनिरोधने स-त्यपि प्रकृतिं स्वरूपं व्रजन्ति इत्येतत्फलमाहेति । शेषमुन्नेयम् । असाधारणं नि-त्यं सुखमर्थयत इति असाधारणसुखार्थी ॥ **सिद्धार्थानां प्रीतिलताकुसु-ममिति** ॥ सिद्धः अर्थः परमपुरुषार्थो येषां ते सिद्धार्थाः । अङ्गुलीयादौ कुसुम-त्वारोपे कान्तिप्रकर्षोऽलङ्करणीयत्वं च समानो धर्मो निमित्तम् । तत्कारणत्वेन

कुसुमम् । ( आक्षय चूडामणिं सीतायाः शिखापाशे बद्ध्वा आत्मनः करा‌ङ्गुलिमङ्गुलीयेन योजयति )

सीता— ( ससंभ्रममवलोक्य ) अज्जउत्त किं एदं अपरं अच्चरिअं ।
आर्यपुत्र किमेतदपरमाश्चर्यम् ।

रामः— लक्ष्मण पश्य पश्य रूपपरिवर्तनं वनान्तरस्य ।

लक्ष्मणः— आर्य पश्यामि ।

कस्य किन्नु कुतस्त्यन्नु केनेदं दीप्यते वनम् ।
अनभ्रविद्युदापातपरीतैरिव पादपैः ॥ ११ ॥

( नेपथ्ये मुर्मुराशब्दः क्रियते । सर्वे ससंभ्रमं विलोकयन्ति )

---

पुनः प्रीतेर्लतात्वमारोपितम् । रूपकमत्रालङ्कारः । यथाह—"अभेदप्राधान्य आरोपः आरोपविषयानपह्नवे रूपकं ।" इति । अथ मारीचेन मायाप्रभावासादितविचित्रमृगरूपेण स्वतेजःपटलसमुद्योतिते रामाधिष्ठिते वनप्रदेशे सीता सहसा वनस्य वर्णभेदमवलोक्य ससंभ्रममाह— आर्यपुत्र आश्चर्यभूतचूडामण्यादेरपरमाश्चर्यं दृश्यते किमेतत् ॥ अथ रामो विलोक्य तदेव लक्ष्मणाय सकौतुकं दर्शयति— पश्य पश्येति ॥ आर्य पश्यामीति ॥ इह वर्तमाननिर्देशेन दर्शनसमय एव रामेण दर्शनेन प्रेरणा कृतेति दर्शितम् । दर्शनसमये दृश्यमानगोचरत्वेन समुदीयमानान् जिज्ञासाविशेषानाह— कस्येति ॥ प्रथमदर्शनसमय एवानिर्धारितवस्त्वाकारनिर्विकल्पकल्पमापातज्ञानं किन्विवत्यनेन दर्शितम् । अथ दृश्यमानस्य वर्णभेदं तेजस्सामान्येन कृतमवधार्य तद्विशेषं जिज्ञासते— केनेति ॥ केन तेजोविशेषेण कर्त्रा इदं वनं दीप्यते । अथ सम्बन्धिविशेषनिर्णयाधीनत्वात् तेजोविशेषज्ञानस्य तेजःप्रभावसम्बन्धिगोचरां जिज्ञासां करोति— कस्येति ॥ दावाग्निसौदामिनीदिव्यजनसन्निधानादीनामन्यतमस्य कतमस्येदं तेज इत्यर्थः । अथ निपुणं विलोक्य सम्बन्धिविशेषमपश्यंस्तदन्वेषणार्थं तेजःपटलादागमनापादानभूतं दिग्विशेषं जिज्ञासते— कुतस्त्यमिति ॥ वनं विशिनष्टि— पादपैरिति ॥ सहितमित्यध्याहार्यम् । कथंभूतैः अनभ्रविद्युदापातपरीतैरिव प्रभाप्रभावतोरनतिभेदात् तत्प्रभाया आपात एव विद्युदापात इत्युच्यते । तेन परीतैरनुलिप्तैरिव । उत्प्रेक्षात्रालङ्कारः । अथ तृणोत्कर्तनसमयसमुत्थमुर्मुराशब्दमाकर्ण्य तदनुसारेण सर्वे दत्तदृष्टयो विचित्ररूपं तं मृगमालोक्य विस्मयमुपागमन् । तत्रापि रामं सीतां चोद्दिश्य मारीचेन मायायाः प्रयुज्यमानत्वात् तयोस्तस्मिन्नत्यन्तमौत्सुक्यमभूत् ।

रामः—

पथि जलमुचामुत्सर्पिण्या रुचा गतिविभ्रमा-
दनिमिषपतेरातन्वानं शरासनमद्भुतम् ।
रजतचरणं रत्नग्रीवं हिरण्मयविग्रहं
तरुणि तरुणं वीक्षस्वारान्मृगं मृगलोचने ॥ १२ ॥

सीता— अज्जउत्त अब्भुददंसणबहुरसो खु वणणिवासो ।
आर्यपुत्र अद्भुतदर्शनबहुरसः खलु वननिवासः ।

रामः— देवि किमस्मिन्नस्त्यादरः ।

सीता— अज्जउत्त जस्स उज्जाणे अअं मिओ पडिवसदि तस्स किं अपराहि इद्धीहि ।
आर्यपुत्र यस्योद्यानेऽयं मृगः प्रतिवसति तस्य किमपराभिः ऋद्धिभिः ।

---

तत्र रामः सीतायै तं गुणवर्णनापूर्वकं दर्शयति—पथीति ॥ हे तरुणि परिपूर्णयौवने इदानीं तव तारुण्यं समुचितविषयानुभवेन सफलीकर्तुमवसरो जात इति भावः । सीतालोचनयोर्मृगलोचनसाधर्म्यमनुभूय सम्बोधयति— मृगलोचन इति ॥ आराद्दूरे स्थितं तरुणं यौवनोदयेन रमणीयदर्शनं काञ्चनमृगं वीक्षस्व । तया दृश्यमानेऽपि तस्मिन् पुनर्दर्शनविधानं तस्यात्यन्तदृश्यत्वेन दर्शने सादरत्वमनुवृत्तिं चोत्पादयितुं कृतं सामान्यबुद्धयास्य दर्शने नानादरः कर्तव्य इति भावः । कथंभूतं जलमुचां पथि अन्तरिक्षे उत्सर्पिण्या ऊर्ध्वं प्रसरन्त्या सितश्यामरक्तवर्णया रुचा कान्त्यानिमिषपतेरिन्द्रस्य शरासनमातन्वानमैन्द्रं धनुर्हि सितश्यामरक्तवर्णत्वेन प्रसिद्धम् अत एवाद्भुतम् । अथवाद्भुतमिति शरासनविशेषणम् । ऐन्द्रधनुर्विधानकरणभूतम् । शोभा यथा वर्णत्रयात्मिका भवति तथा दर्शयति— रजतेत्यादिना ॥ रजतमये चरणे यस्य तम् । अनेन शोभायाः धावल्यबीजमुक्तम् ॥ रत्नग्रीवम् ॥ रत्नशब्देन मरतकरत्नमभिप्रेतं मरतकमयीं ग्रीवामिति वक्ष्यमाणत्वात् मरतकमयी ग्रीवा यस्य तम् । अनेन कान्तेः श्यामतानिमित्तं दर्शितम् । हिरण्मयविग्रहमित्यनेन कान्तेः रक्तताहेतुर्दर्शितः । अथ सीतापि मायाप्रभावेन सञ्जातौत्सुक्या भूत्वाह—आर्यपुत्र यस्येति ॥ आर्यपुत्र यस्योद्यानेऽयं मृगः प्रतिवसति यतोऽस्य मृगरत्नस्य—

रामः— ममाप्येष एव मनोरथः।

सीता— अवि णाम अअं मिओ अज्जउत्तहत्थब्भासं गच्छे।

अपि नामायं मृगः आर्यपुत्रहस्ताभ्याशं गच्छेत्।

रामः— यदि सजीवो न गृह्येत ततः सावयवेनास्य चर्मणा वा रत्नातिशयभाजनं भविष्यामः।

लक्ष्मणः— आर्य अपि नामेयं राक्षसी माया न स्यात्।

रामः— अस्मिन्नुभयथापि यत्नः कर्तव्यः।

---

रण्ये निवासो न समुचितः अतः कस्यचिद्राज्ञो नगरात्स्वैरसञ्चारार्थं निर्यतेनानेन भवितव्यमित्यभिप्रायेणेदमुच्यते। तस्य किमपराभिः समृद्धिभिरिति बहुवचनेन भूयसीनामपि समृद्धीनामनेनैकेन तुल्यकक्षत्वं नास्तीति दर्शितम्॥ **ममापीति**॥ कस्यचित् राज्ञो नगरे वर्तमानो रत्नविशेषोऽयमिति यत्त्वया निरूपितं ममाप्येष एव मनोरथो वितर्क इति यावत्। अपि नामायं मृगः आर्यपुत्रहस्ताभ्याशं गच्छेत्। प्रार्थनायां लिङ्। हस्तप्राप्त्यत्वप्रार्थनया सीतायाः क्रीडार्थं सजीवस्य ग्रहणमभिप्रेतमिति दर्शितम्॥ **यदि सजीवो न गृह्येतेति**॥ सजीवस्यास्य ग्रहणे महान्तं यत्नं करिष्यामि तथापि यदि न लभ्येत तर्हि मद्बाणगृहीतस्य तस्य सावयवेन चर्मणा वा। वाशब्दः समुच्चये। रत्नातिशयभाजनं भविष्यामः। अनेन निर्बन्धेन मारीचस्याधिदेवताप्रतिपत्तिक्रमबलेन दाशरथेश्चित्ताकर्षस्यापि क्रमेण प्रकर्षो दर्शितः। अथ लक्ष्मणो मायाबलेन सञ्जातमृगभ्रान्तिरपि मारीचस्य तच्चित्तविलोभनमुद्दिश्याभिसन्धानाभावादव्याक्षिप्तचित्तस्सन् तत्तत्त्वं निरूपयति— **अपि नामेति**॥ इह नञा रहितमेकं वाक्यम्। पश्चान्नञः पृथगेव योजना। अपिनामशब्दः शङ्कायाम्। संभावनायां लिङ्। अयमर्थः। अपि नामेयं राक्षसी रक्षस्सम्बन्धिनी माया स्यात् दृश्यमानस्यास्य राक्षसमायात्वे सम्भावना विद्यते। तत्सद्भावस्तु न निश्चेतुं शक्यते संभावनायाः सद्भावेन व्याप्त्यभावात्। अतो दृश्यमानस्यास्य राक्षसमायात्वज्ञानं विपर्ययशङ्काकुलीकृतत्वेनैव संभावनागोचरस्तु ज्ञानं निश्चयात्मक इति विवेकः। संभावनामेव काकुसनाथेन नञा द्रढयति—**नेति**॥ असौ संभावना न किं विद्यते विद्यत एव अतोऽस्य राक्षसमायात्वं नात्यन्तमसङ्गतम्। ततश्चाविश्वसनीयत्वादस्मिन्नौत्सुक्यं न सुखोदर्कमिति भावः। एवं लक्ष्मणेन निवृत्तिमभिप्रेत्याशङ्कितस्य मायामृगत्वस्य रामः पुनरौत्सुक्यातिशयेन प्रवृत्तिहेतुत्वं समर्थयते— **अस्मिन्निति**॥ **अत्रेति**॥ अत्र वने यदि कश्चित् राक्षसो मायामृगरूपमवलम्ब्य

परमार्थमृगोऽयं चेत्सिद्ध्यत्यस्या मनोरथः।
परीक्ष्यो व्यक्तमस्माभिरत्र मायामृगो यदि ॥ १३॥

लक्ष्मणः— प्रसीदत्वार्यः ( प्रस्थातुमिच्छति )

रामः— तिष्ठ। ननु रक्षणं देव्यास्तवाधिकारः। अपि च।

अभिगम्य मुनीन्वने वने
विनिवृत्तस्य विदूरवर्तिनः।
श्रमवारि ललाटमण्डले
तव बध्नाति कुमार जालकम् ॥ १४ ॥

लक्ष्मणः— भवतु ननु यथोक्तानुष्ठानं गुरुजनानुवृत्तिः।

रामः— लक्ष्मण धनुस्तावदानय यावदयं न दूरीभवति।

लक्ष्मणः— यदाज्ञापयत्यार्यः। ( धनुरुपनयति )

रामः— ( धनुर्गृहीत्वा निष्क्रान्तः )

लक्ष्मणः— हन्त न स्वन्तोऽयमारम्भः। अयमयं मृगः

---

वर्तते तर्ह्ययं परीक्ष्यः व्यक्तं निश्चितमेतदित्यर्थः। अथ लक्ष्मणं मायामृगग्रहणार्थमिच्छन्तं निवारयन्नाह— तिष्ठेति ॥ इतरथानेन मुनिजनः पीड्येतेति भावः ॥ अभिगम्येति ॥ हे कुमार विदूरवर्तिनः इतोऽत्यन्तं विदूरे वर्तमानान् मुनीन्वने वने प्रत्येकमभिगम्य। अनेन मुनीनामन्योन्यं च विदूरवर्तित्वं दर्शितम्। विनिवृत्तस्येत्यनेन अन्तरा विश्रमाभावो दर्शितः। एवंभूतस्य तव ललाटमण्डले श्रमवारि कर्तृ इदानीं जालकं कोरकं बध्नाति। यथामरसिंहः— "कोरको जालकं क्लीबे कलिका कोरकोऽस्त्रियां" इति। यतो मार्गश्रमजाताः स्वेदबिन्दवः इदानीमपि कोरकाकारेण वर्तन्ते अतस्त्वामस्मिन्कर्मणि न क्लेशयामीत्यर्थः। अथ लक्ष्मणः आत्मनोपनीतं धनुरादाय मायामृगमनुगच्छन्तं राममालोक्य सविषादमाह— हन्तेति ॥ अयमारम्भ इति ॥ अयमारम्भो न स्वन्तः अशोभनपरिणाम इत्यर्थः। अथ मायामृगस्य विविधाश्चेष्टाः पश्यन् विस्मयविषादाविवशीकृतमानसो भूत्वाह— अयमयं मृग इति ॥ पुनः पुनर्मरतकमयीं ग्रीवां साचीकरोति साचीकृत्यानुगच्छन्तमार्यं पुनः पुनरीक्षत इत्यर्थः। पुनर्जिह्वाग्रेणाभिनवं तृणं स्पृशन्निव धावति। इह पूर्वार्धे दाशरथेश्चित्तविलो-

मरतकमयीं ग्रीवां साचीकरोति पुनः पुनः
तृणमभिनवं जिह्वाग्रेण स्पृशन्निव धावति ।
भ्रमति परितो वृक्षानुच्चैरधोऽपि च दृश्यते
नमयति धनुः कोपादार्ये तिरोभवति स्थले ॥ १५ ॥

हा हन्त चक्षुषोर्न गतिस्ततः परम् ।

सीता— हं णअणगोअरं अदिक्कन्दो अज्जउत्तो ।

हं नयनगोचरमतिक्रान्तः आर्यपुत्रः ॥

( ततः प्रविशति रावणो रथेन शूर्पणखया सूतेन च )

रावणः—

मयि जीवति मानुषादवाप्ता
विपदं मे सहजा शुचं जहातु ।

---

अनाय मारीचेन मुग्धमनोहरस्तत्तन्मृगस्वभावो दर्शित इति व्यज्यते । उत्तरवाक्यगतेन कोपादित्यनेन पूर्वं ग्रहणार्थं महान्प्रयत्नः कृत इति गम्यते । ततश्चायमर्थस्सम्पद्यते । आर्ये ग्रहणार्थं प्रयतमाने वृक्षान्परितो भ्रमति । "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि "इति द्वितीया ॥ उच्चैरधोऽपि च दृश्यत इति ॥ अधस्स्थितस्यास्य ग्रहणार्थं प्रयतमाने आर्ये उच्चैर्दृश्यत इत्यर्थः । अथ तद्ग्रहणार्थं प्रयत्नवैफल्यजनितात्कोपादार्ये तन्निग्रहार्थं धनुर्नमयति । शरं सन्धायाकर्णमाकृष्टवति स्थले तिरोभवति तत्क्षणे न दृश्यत इति यावत् । अनेन मारीचस्येमं दूरमानीयैव शरीरं शरव्यतां नेष्यामीत्यभिप्रायो व्यज्यते । अनेन लक्ष्मणस्य कथं सर्वङ्कषपराक्रमस्यार्यस्य मृगमात्रं हस्तग्राह्यत्वं शरव्यतां वा नोपायासीदिति चिन्ता विस्मयश्च व्यज्यते । तिरोभवनेन मृगत्वासंभावनाबुद्ध्या विषादश्च व्यज्यते । अथ मायामृगेणात्यन्तं दूरीकृतमार्यमपश्यन् सशोकमाह— हा हन्तेति ॥ तथैव सीतापि शोकसमाकुलमानसा भूत्वाह— हमिति ॥ अथ दशग्रीवः सीतागुणगणाकर्णनजनितेनानुरागेणात्मभगिनीवैरूप्यकरणजनितं क्रोधमवमानं चोल्लङ्घ्य विजृम्भमाणेन विवशीकृतमानसो दाशरथिं परशुरामजयाद्यपदानश्रवणेन दुर्जयं मन्यमानो मायाप्रयोगेण तं वञ्चयित्वा जानकीमात्मसात्कर्तुं कृतनिश्चयोऽनङ्गीकृतसङ्ग्रामसन्नाहो भगिनीसूतमात्रसहायो रथेन मातुलाश्रमं प्राप्य मायाप्रयोगनिपुणं तं सीतासमीपात् रामं दूरीकर्तुं नियुज्य रामतपोवनं प्रति नभसा गच्छन् आत्मस्वामिनोऽयथार्थ्वृत्तमनिच्छता सूतेनासम्यक्चोद्यमानत्वादश्वा-

अपमृद्य पतिं हरामि सीतां
तुरगान् सूत जवेन चोदय त्वम् ॥ १६ ॥

**सूतः**— यदाज्ञापयत्यायुष्मान्। ( रथं चोदयति )

**शूर्पणखा**— अज्ज मा मा संरंभक्कमेण। कदत्थिदमहेन्दविक्कमस्स अज्जस्स कहं सो माणुसो विसओ भवे। जइ उव्वेएण सा जीविअं ण परित्तजदि तह सीदं हत्थे करिस्सामो। णं सा तस्स पाणा।

आर्य मा मा संरम्भक्रमेण। कदर्थितमहेन्द्रविक्रमस्यार्यस्य कथं स मानुषो विषयो भवेत्। यथोद्वेगेन सा जीवितं न

---

नां मन्थरगमनमालक्ष्य सीतादर्शने तनीयांसमपि कालविलम्बमसहमानः आत्मगतं स्मरचापलं निगूह्यावमानमेव सीताहरणहेतुकत्वेनारोप्य सूतं सनिर्वेदं रथचोदनाय नियुङ्क्ते— मयीति ॥ हे सूत गतस्त्वमत्यन्तं मूढ इव मन्दमेव तुरगांश्चोदयसि। अतस्त्वं मदीयं नूतनमवमानविशेषं जानन्नपि फलतो न जानास्येव। अतस्त्वां तस्य गौरवं बोधयामि— एषा मे सहजा साक्षात्सहोदरी ॥ न तु राक्षसजातीयोऽन्यः कश्चित्पारिवारजनो वा सोदरो वा अहीनपराक्रमे सुरासुरविजयिनि मयि जीवत्येव मानुषात् न तु सुरासुरगणामन्यतमस्मात् कर्णनासच्छेदरूपां विपदमवाप्ता। ईदृश्या विपदोऽपि निग्रह एव वरमिति भावः। अत एषा सद्यः प्रतिक्रियादर्शनात् एवंभूतविपत्प्राप्तिहेतुकां शुचं दुःखं जहातु। का पुनः प्रतिक्रिया ययास्याः शुचः परित्यागो भवेत् अत आह— अपमृद्येति ॥ अहं राममपमृद्य युद्धे निहत्य सीतां हरामि। यदि सीतासमीपे रामेण सह युद्धं क्रियेत ततस्सा बालभयङ्करयुद्धदर्शनादेव प्राणान्परित्यजेदिति मत्वा मया रामो दूरीकृतः न त्वसामर्थ्यादिति सूतं भगिनीं च बोधयितुमेवमुच्यते। ननु कथं रामं दुर्जयं मन्यमानस्यापमृद्येति प्रतिज्ञा घटते एषा मम भगिनी प्रायेणानपगतरामगोचरानुरागैव प्रायेण वर्तते। अत एषा स्वयमेव तद्वधं निषेत्स्यतीति मन्यमानस्येदं वचनमित्यविरोधः। यत एवंभूतमवमानं क्षणमप्यप्रतिकुर्वन् न सोढुं शक्नोमि अतस्त्वं तुरगान् जवेन चोदयेति योजनीयम्। अथ शूर्पणखा प्रणयातिशयेन शक्याशक्यविचारविधुरा सीतारहितं तं रामं वशीकर्तुमध्यवस्यन्ती निमित्तान्तरेण तद्वधं निषेधति— मा मा इति ॥ संरम्भक्रमः संरम्भस्य क्रमणं प्राप्तिः संरम्भस्य कुतो न कर्त-

परित्यजति तथा सीतां हस्ते करिष्यामः । ननु सा तस्य प्राणाः ।

सूतः— ( आत्मगतम् ) हताः स्त्रियः पापे कर्मणि पण्डितानतिशेरते ।

रावणः— ( मुहूर्तं ध्यात्वा ) युक्तमभिहितमनया । सा सीता नाम

---

व्यत्वमत आह— कदर्थितेति ॥ कदर्थितो निन्दितो महेन्द्रो येन सः कदर्थितमहेन्द्रः । तादृशो विक्रमो यस्य सः तथोक्तः । तस्यार्यस्य कथं स मानुषो विषयो भवेत् । अर्थाद्विक्रमस्य विषय इति सिध्यति । असमानविषयो हि विक्रमोऽवमानमेव पुष्णाति न मानमिति भावः । न केवलं रामवधेनावमान एव अपि तु इष्टवियोगोऽपीत्यभिप्रायेणाह— जहेति ॥ यथा सा उद्वेगेन दुःखातिशयजनितेन जीवनविषयेण विरागेण जीवितं न परित्यजति तथा तेन प्रकारेण राममहत्वैवेत्यभिप्रायः । रामहननादन्यदपि यद्वियोगकारणं संभाव्यते तदपि परिहर्तव्यमिति दर्शयितुं तथेति सामान्येनोक्तम् । अत एव रावणो मायारामो भूत्वा सीतामपहरिष्यतीति हस्ते करिष्याम इति । "नित्यं हस्ते पाणावुपयमने" इति गतिसंज्ञया हस्तेशब्दस्य धातोः प्राक्प्रयोगः । रामस्य हननात् सीताहरणमेव तत्कृतस्यापराधस्य साधीयसी प्रतिक्रियेत्याह— ननु सा तस्य प्राणा इति ॥ एवंभूतेषु न्यक्त्वेन विक्रमायोग्येषु जीवन्मृतत्वापादनमेव समुचितः प्रतीकार इति भावः । अथ सूतस्तस्या दुरभिप्रायं रावणादधिकं वञ्चनापाटवं च तद्वचनादालक्ष्य सनिर्वेदं स्त्रिय एव सामान्येनोपालभते— हता इति ॥ यतस्स्त्रियः पापे कर्मणि पण्डितान् पापकर्मानुष्ठानप्रदर्शने पटून् पुरुषानतिशेरते । पापकर्मानुष्ठानप्रकारदर्शनाधिक्यात् ताननतिशय्य वर्तन्त इत्यर्थः । अतो हेतोरत्यन्तं दुष्टा एव ॥ मुहूर्तं ध्यात्वेति ॥ शूर्पणखया तथेत्यनेन सामान्यतो रामहननादन्यस्यापि सीताया उद्वेगकारणस्य यो निरासः कृतः तद्विषयं ध्यानं रामहननाकरणस्य तद्वचनात्पूर्वमेव निश्चितत्वादिति ज्ञेयम् । अथैवमेव स्वरूपप्रकाशनेन मया बलात्कारेण गृह्यमाणा सीता परिचयाभावान्महतोद्वेगेन प्राणान्परित्यक्ष्यत्येव । अतः स्वरूपमाच्छाद्यैतां हरिष्यामीति निश्चित्य तद्वचनमभिनन्दति— युक्तमिति ॥ अनया यद्रामेण सह युद्धमवमानावहं तद्वधस्सीताया जीवितपरित्यागहेतुरिति चाभिहितं तद्युक्तमिति पराभिप्रायानुसारेणोच्यते स्वमते तस्य सिद्धत्वेनावक्तव्यत्वात् । रामवधादन्यदप्युद्वेगनिमित्तं वर्जनीयमिति यदभिहितं तद्युक्तमित्येतत् स्वमतानुसारेणोच्यत इति ज्ञेयम् । एतदेव विवृणोति—

युधि सरभसं हत्वा रामं बलान्मयि गृह्णति
स्वयमनुचिता भर्तुः शोकादसून्न किमुज्झति।
अपि च मनुजं हन्तुं रामं स्पृशन्ति किमायुधं
त्रिदशविजयश्लाघापात्रीकृता मम बाहवः॥ १७॥

सूतः— आयुष्मन्

तनुभिरसर्वेपथुभिरश्रुवर्षिभि-
र्नयनैर्मनोभिरनवस्थितैरमी।

---

युधीति॥ युधि सरभसं सक्रोधं रामं हत्वा एवमेव स्वरूपं प्रकाश्य मयि बलात्कारेण सीतां गृह्णति सति। सीता नाम सौन्दर्यादिगुणैस्सीतेति सर्वलोकप्रसिद्धा। अनेन प्रणयातिशयेन तत्पीडनेऽनिच्छा सूचिता॥ सा भर्तुः शोकात्॥ हृतं भर्तारं विषयीकृत्योत्पन्नाच्छोकात्। ल्यब्लोपे पञ्चमी वक्तव्या। अर्थाददृष्टपूर्वमदाकारदर्शनबलात्करणादिजनितभयशोकादिभिश्च स्वयमेवासून् किमुज्झति। उज्झत्येव। अत्र हेतुरनुचितेति। असञ्जातमत्परिचया इत्यर्थः। उक्तप्रकारं नर्जयित्वान्यथा गृह्यमाणा सञ्जातपरिचया सा मद्वशे वर्तिष्यत इति भावः। यत एवं गृहीता सा प्राणान्परित्यजति अतो रामहननं बलाद् ग्रहणं च न कर्तव्यमिति वाक्यपर्यवसानम्। तत्रापि रामहननिषेधः परमतानुसारेण। स्वमते तस्य प्रसङ्गाभावात् बलाद्ग्रहणस्य प्रबलत्वात् स्वमतेनापि निषेध इति विवेकः। अथ शूर्पणखया पश्चादुक्तस्य सीताहरणप्रकारस्य प्रथममनुवाद्य सीताहरण एव तात्पर्यमवगमयति। रामवधस्यावमानावहत्वं स्पष्टीकरोति— अपि चेति॥ मे बाहव इति॥ आत्मनः कर्तृत्वनिरासेन करणभूतेषु बाहुषु कर्तृताभिधानं रामहननप्रसङ्गे बाहव एवात्मानासहिष्णुतया स्वातन्त्र्येण तद्वधं निषेधयन्ति मम तन्निषेधप्रसङ्गोऽपि न भवति यथामात्यादिभिः समुचिते कर्मणि कृते राज्ञो गौरवमित्यात्मनो गौरवं द्योतयितुं कृतम्॥ मनुजं राममिति॥ मनुजं राममिति पराक्रमशालिनमपि मनुष्यं प्रतियोगित्वेन न परिगृह्णन्ति। किं पुनर्वनेचरसमानवृत्तिमसमानवृत्तिं राज्यभ्रष्टं राममिति भावः। हन्तुमायुधमेव न स्पृशन्ति। दूरे च हननप्रसङ्गः। अत्र हेतुः— त्रिदशविजयश्लाघापात्रीकृतेति॥ अथ सूतः स्वामिनियोगाद्वोढमानानां वाहनानामश्रुपातादीनुत्पातत्वेनागमप्रसिद्धानिष्टसूचकानालोक्य प्रग्रहान्संयम्य सीताहरणात्स्वामिनं निवर्तयितुं निवेदयति— तनुभिरिति। "रथी सूतेन चायुष्मान्" इति लक्षणानुसारेणायुष्मच्छब्देनामन्त्रणं कृतम्। ते अमी रथवाजिनो रथे नियुक्ताः अश्वाः हेतुना विना तनुभि-

अतिशायिनोऽपि हरितां स्खलन्ति ते
रथवाजिनो नभसि हेतुना विना ॥ १८ ॥

रावणः— सूत यातव्या रामपर्णशाला न कैलासः ।

सूतः— आयुष्मन्नधिकारनिरपराद्धोऽहं अतः परमायुष्मानेव प्रमाणम् । एष मुञ्चामि ( आत्मगतं ) प्रथमं साध्वाचारं पश्चात्प्रग्रहम् । ( चोदयति । सर्वे रथवेगं निरूपयन्ति )
( प्रकाशं ) आयुष्मन् पश्यतु रथवेगम् ।

तोयोद्गारि कदम्बकं जलमुचामायाममापद्यते
घण्टाः स्तम्भितशृङ्खलाश्चपलतामुज्झन्ति मूकैर्मुखैः ।
कर्णान्ते जपतीव चामरमिदं संस्तम्भितं वायुना
तूर्णं त्वामुपसर्पतीव पुरतो यातव्यमिच्छावशात् ॥

---

स्सवेपथुभिः सकम्पैरवयवैरश्रुवर्षिभिर्नयनैरनवस्थितैर्मनोभिश्चोपलक्षिता भूत्वा स्खलन्ति । नन्वत्रायुष्मतापि तनुकम्पाश्रुपातादिनिमित्तभयदुःखादिहेतव उपलक्ष्यन्त इति भावः । तनुकम्पादयो दृश्यन्त इति अमी इत्यनेन दर्शिताः । नभसीत्यनेन स्खलननिमित्तस्य निम्नोन्नतत्वादेरभावो दर्शितः । दूरदेशगमनसंभूतपरिश्रमादिहेतुकत्वं स्खलनादीनां निवारयति— हरितामिति ॥ हरितां सूर्याश्वानां अविरतं सञ्चरतामतिशायिनः अश्वगुणैस्तानतिक्रम्य वर्तमाना इत्यर्थः । इह स्खलनादीनां हेतुशून्यत्वाभिधानमुत्पातज्ञापनार्थं कृतमिति ॥ अधिकारनिरपराद्ध इति ॥ उत्पातज्ञापनमात्रं ममाधिकारः । कृतं च तत् इत्यधिकारे निरपराद्धोऽहं विज्ञापनात् परं यत् प्रवर्तनं निवर्तनं वा तत्रायुष्मानेव प्रमाणं नियामकः नाहमित्यर्थः ॥ साध्वाचारमिति ॥ पापकर्मानुष्ठाने सहायाकरणं नाम साध्वाचारः तं प्रथमं मुञ्चामि । पश्चात्प्रग्रहं मुञ्चामीत्यनुषङ्गः । रथवेगं वर्णयति— तोयेति ॥ पयोगर्भाणां जलमुचां कदम्बकं रथसङ्घट्टनेन तोयोद्गारि भूत्वा सद्य एव रथवेगसमीरणानुविधानादायामं दैर्घ्यमिवापद्यते प्राप्नोति । तथाश्वानां कण्ठालङ्कारभूता घण्टाः रथवेगेन स्तम्भितशृङ्खलाः स्तम्भिता आधारभूताः शृङ्खला यासां ताः अत एव मूकैरुपरतस्वनैर्मुखैर्धुताश्चपलतां कम्पमुज्झन्ति । रथवेगातिशयजनितविस्मयानन्दास्तिमिता इव निश्शब्दमवतिष्ठन्त इति चेतनत्वद्योतकैर्मुखादिशब्दैर्द्योतितम् । वायुना संस्तम्भितमिदं चामरमश्वानां कर्णान्ते किमपि रहस्यं जपतीव मन्त्रयत इव अमात्य इव राज्ञः कर्णान्ते इति कर्णान्ते जपतीत्यनेन द्योतितम् । तथा पुरतोऽग्रतो यातव्यं

**शूर्पणखा**— सच्चं एव्व सूदो मंतेदि । अज्ज आअदम्ह राम-तपोवणं ।

सत्यमेव सूतो मन्त्रयते । आर्ये आगतास्स्मो रामतपोवनम् ।

**रावणः**— क च ते व्यसनमूलस्य रामस्य प्राणसमा ।

**शूर्पणखा**— णं एसा सा । नन्वेषा सा । ( अङ्गुल्या निर्दिशति )

**रावणः**— ( सीतां विलोक्य सविस्मयं ) इयं सा त्रैलोक्यसुन्दरी सीता नाम । अहो चित्रमहो चित्रम् ।

इन्द्राणीमहमप्सरोभिरनयं कारागृहे गण्यतां
संहारो जयता दिशो दश मया स्त्रीणां कृतः पुष्पके ।

---

प्राप्यप्रदेशः कर्ता इच्छावशात् भवता यः प्रदेशः अतिदूरे वर्तमानः कथंचिन्नयनगोचरस्सन् प्राप्यत्वेनेष्यते इच्छया समकालमेव तस्य भवतासादितत्वात् न तत्र गम्यत इति निश्चीयते । इच्छानन्तरमेव व्यापाराणां संभवात् । अतो मन्यामहे प्राप्यदेश एव भयात्तूर्णं मामुद्दिश्यागमनारम्भात्पूर्वमहमेव तत्र गच्छामीति मत्वा त्वरिततरं त्वामुपसर्पतीव । उभयत्रापि क्रियोत्प्रेक्षालङ्कारः । अप्रकृतगतगुणक्रियाभिसम्बन्धादप्रकृतत्वेन प्रकृतस्याभिमान उत्प्रेक्षेति । क च ते व्यसनमूलं राम इति पर्यनुयोगाकरणात् सीताहरण एव तात्पर्यं तद्दर्शने कालविलम्बासहिष्णुत्वं च दर्शितम् । ते व्यसनमूलस्येत्यनेन सीताहरणस्य तद्व्यसनोपशमनार्थत्वं बोधयति । प्राणसमेत्यनेन तस्यां हृतायां तत्प्राणा एव हृता भवन्तीति व्यज्यते । अथ स तया दर्शितां तामवलोक्य कान्तिलावण्यसौकुमार्याद्यनुभवसमुत्थाभ्यां विस्मयानन्दाभ्यां पातिव्रत्यप्रभावत उदितेन च साध्वसेन विवशीकृतः तां प्रत्यभिजानाति—इयमिति ॥ सेयमित्यनेन श्रवणदर्शनयोर्विसंवादाभावो दर्शितः ॥ त्रैलोक्यसुन्दरीति ॥ त्रैलोक्यसुन्दरी इयमेव नान्येत्यर्थः । त्रैलोक्यसुन्दरीत्येतदेव व्यतिरेकमुखेनोपपादयति— इन्द्राणीमिति ॥ अहमप्सरोभिस्सह इन्द्राणीं कारागृहे गण्यतां दृश्यतामनयम् । गणनमत्र ज्ञानं विवक्षितं न सङ्ख्यानम् । तेन तद्विशेषो दर्शनं लक्ष्यते । संभूयावस्थान एव हि सहदर्शनं लभ्यते क्रमेण दर्शनाच्च सहदर्शन एव तद्गतानां गुणविशेषाणां तारतम्यं स्फुटीभवति इति मत्वैवमुच्यते । तथा दश दिशो जयता मया दशेत्यनेनाधोभुवनस्यापि ग्रहणं कृतम् । तत्र तत्र मनोहरदर्शनानां स्त्रीणां पुष्पके संहारः संभूय हरणं आहरणमिति

कैलासोद्धरणेऽपि वेपथुमतीमद्राक्षमद्रेस्सुतां
दृष्टं तासु न रूपमीदृशमहो चक्षुश्चिरात्सार्थकम् ॥ २० ॥
( सङ्कल्पपर्याकुलो भूत्वा ) सम्प्रति हि

पानाद्रूपरसायनस्य बहुधा सन्तर्पयन्ती मनो
जाता नेत्रपरम्परा फलवती धीरेतरेयं मम ।
अस्याः पल्लवकोमलां तनुमिमामालिङ्ग्य कृत्स्नामहं
निर्वेक्ष्यामि कदा नु विंशतिममून् वीरव्रणाङ्कान् भुजान् ॥

शूर्पणखा— ( आत्मगतं ) फळिदो मे कामो ।

फलितो मे कामः ।

---

यावत् । कृतः । अथान्यैरत्यन्तदुष्करदर्शनामपि अद्रेस्सुतां जगदीश्वरीं कैलासोद्धरणसमयेऽद्राक्षम् । वेपथुमतीमित्यनेन दर्शनस्य स्फुटतोच्यते । यत ईदृशं रूपं तासु त्रैलोक्यनिवासिनीषु न दृष्टम् अत इयमेव त्रैलोक्यसुन्दरी । ईदृशमित्यन्तेन वाक्येन विस्मयहेतूपवर्णनात् तदनन्तरमहो इति विस्मयानुभावो दर्शितः । चक्षुश्चिरात्सार्थकमित्यनेन परमानन्दानुभवो व्यज्यते । चक्षुरित्यत्रैकत्वमुद्देश्यगतत्वादविवक्षितम् । चक्षुरित्युद्दिश्य सार्थकत्वस्य विधेयत्वादुद्देश्यत्वं स्पष्टमेव ॥ चिरादिति ॥ जन्मतः प्रभृत्येवेदृग्रूपादर्शनादुक्तम् । सार्थकत्वेऽपि दृष्टं तासु न रूपमीदृशमित्येतदेव हेतुः ॥ सङ्कल्पेति ॥ अभिलाषानन्तरं कामिनां सङ्कल्पो भवति । यथाह "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।" इति । चक्षुश्चिरादित्यत्रोक्तमेवार्थं सङ्कल्पविशेषत्वेन सोपस्कारमाह— पानादिति ॥ ममेयं नेत्रपरम्परा । परम्पराशब्देन नेत्रबहुत्वस्यापि साफल्यं सूचितम् । रूपरसायनस्य रूपं सौन्दर्यं तदेव रसायनम् । रूपस्य रसायनत्वारोपः पानौचित्यार्थं कृतः । बहुधा पानात् प्रकारवचनस्यापि धाप्रत्ययस्य लक्षणयावृत्त्यर्थत्वं द्रष्टव्यम् । बहुकृत्वः पानान्मनः सन्तर्पयन्ती । हेतौ शता । मनस्तृप्तिहेतुत्वात् फलवती जाता । सङ्कल्पप्रकारमेव दर्शयति— अस्या इति ॥ विंशतिमित्यनेन युगपत्कृत्स्नालिङ्गनसौकर्यं दर्शितम् । वीरव्रणाङ्कानित्यनेन वीरकामिन्यः स्त्रिय इति न्यायेन सीताया आलिङ्गनं प्रत्यानुकूल्यं द्योत्यते ॥ निर्वेक्ष्यामि सुखयिष्यामीत्यर्थः । एवं रावणः सञ्जातस्मरचापलो भूत्वा सीताहरणे कालविलम्बमसहमानो रक्षितृजिज्ञासयान्यतो दत्तदृष्टिस्सन्नाहवन्तं सौमित्रिं दृष्ट्वा महतीं शङ्कामवाप्य भगिनीं परिपृच्छति—अयमिति झटिति सामान्येन कृतः प्रश्नः । पुनर्विशेषनि-

रावणः—( लक्ष्मणं विलोक्य ) अयमपरः कः ।

कवचिततनुः पृष्ठावापी दृढज्यशरासनो
निभृतमभितस्तिष्ठन् सीतामयं कतमो युवा ।

शूर्पणखा—( कर्णे ) एव्वं विअ । एवमिव ।

रावणः—

हहह शमयाञ्चक्रे रामः शरैः किल ताटका-
मसिफलमयं प्राप्तस्त्वां मत्यहो बलिनो नराः ॥

( नेपथ्ये मर्मराशब्दः क्रियते )

( नेपथ्ये ) अहो जवविशेषः ।

सीता—अज्ज वि दाव अज्जउत्तेण अणुगच्छीअदि सो मिओ ।
अद्यापि तावदार्यपुत्रेण अनुगम्यते स मृगः ।

रावणः—कस्यायं स्वरः ।

---

धारणार्थं अयं कतम इति । रामो वा लक्ष्मणो वाऽन्यः कश्चन तदीयः सहचरो वेति भावः । सन्नाहवत्त्वं दर्शयति—कवचितेत्यादि ॥ कवचिता सञ्जातकवचा तनुरस्यास्तीति कवचिततनुः । आवपन्त्यस्मिन् शरा इत्यावाप इषुधिः । पृष्ठावापः अस्यास्तीति पृष्ठावापी । पृष्ठ एवावापः न तु समीपे कुत्रचिदिति पृष्ठशब्देन सन्नाहो दर्शितः । आरोपितत्वात् दृढा ज्या यस्य तत् तथाभूतं शरासनं यस्य स तथोक्तः । सीतामभितः समीपे तिष्ठन् निभृतमित्यनेन रक्षणे सावधानत्वं दर्शितम् । अथ तया अयं लक्ष्मण इत्यावेदिते महतीमसूयां प्राप्य सापहासमधिक्षिपति । हहहेत्यपहासः । इहासूया भर्त्सने हेतुः । यथोक्तं—"परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा । दोषोक्त्यवज्ञाभ्रुकुटीमन्युक्रोधेङ्गितानि च ॥" इति । लक्ष्मणकृतकर्मणो रामकृतकर्मानुरूप्यं दर्शयन् प्रथमं रामकृतस्य कर्मणोऽभिधानम् । अस्य ज्यायान् रामः प्रथमं धनुर्ग्रहणं सफलीकर्तुं बहुभिश्शरैरेकाकिनीं वृद्धामासन्नमरणां स्त्रियं ताटकां शमयांचक्रे किल । अयं पुनर्ज्यायांसमनुसर्तुं त्वां प्रत्यासिफलं प्राप्तः ॥ अहो बलिनो नरा इति ॥ इह दौर्बल्यहेतोः स्त्रीगोचरपराक्रमस्य पूर्वमभिधानादुपहासकाकात्यन्तं दौर्बल्यं व्यज्यते । अथ रामो हस्तप्राप्यतामप्राप्तस्य मायामृगस्य वेगातिशयेन विस्मितः प्राह—अहो इति ॥ अथ सूतस्तया दर्शितं रामं स्वामिना सह विलोक्य तदनुभा-

शूर्पणखा— अज्ज तस्स रामस्स । आर्य तस्य रामस्य ।

रावणः— ( परावृत्यावलोक्य ) अयं तपस्वी रामः । ( इति मोहमुपगतः )

सूतः— ( आत्मगतम् ) सत्यं मारीचवचः । रामो नाम

न पुमान् पुण्डरीकाक्षो न च मुग्धेन्दुशेखरः ।
आविर्भूतमयोध्यायामेकं रक्षोघ्नमौषधम् ॥ २३ ॥

इति ।

रावणः— ( सूतं विलोक्य ) सूत भीत इव त्वमाकारेण ।

सूतः— आयुष्मन् सत्यं भीत एवाहम् । संप्रति वयं मनुष्याः रामो राक्षस इव ।

शूर्पणखा-- अज्ज इअं से आइदि आहरणेण जोळदा कहं विअ सोहदि ।

आर्य इयमस्या आकृतिः आभरणेन ज्वलता कथमिव शोभते ।

---

चविशेषेण महत्साध्वसं बहुमानं चोपगम्याह— सत्यमिति ॥ मारीचस्य वचनप्रकारं दर्शयति— रामो नामेति ॥ रामो नाम देवो नारायणो महेश्वरो वाऽवतीर्ण इति सर्वे वदन्ति । अहं त्वन्यथा मन्ये रामो न पुण्डरीकाक्ष आविर्भूतः मुग्धेन्दुशेखरश्च न । अयोध्यायामेकं मुख्यं केनाप्यनिवार्यवीर्यं रक्षोघ्नमौषधमेवाविर्भूतम् । इह पारमार्थिकस्यापि देवत्वस्य निषेधेन रामस्य रक्षोघ्नौषधत्वसमर्थनं राक्षसहनने सन्देहाभावमाविर्भावस्य तदेकप्रयोजनत्वं चावेदयितुं कृतम् । संप्रति वयमिति बहुवचनेन न केवलं मम भयं जायते, किन्तु भवतोऽपीत्यभिप्रायो व्यज्यते ॥ रामो राक्षस इवेति ॥ राक्षसान्दृष्ट्वा मनुष्याणां भयं दृष्टम् । अधुना तद्विपरीतम् । अतोऽस्मदपेक्षया रामस्य राक्षसत्वं तदपेक्षयास्माकं मनुष्यत्वमित्यर्थः । अथ शूर्पणखा रामस्य गम्भीरमहिमानं पश्यतो दशग्रीवस्य साध्वसमनुभावैरालक्ष्य सीताहरणान्निवृत्तिमाशङ्कमाना रामावलोकनात्तन्निवर्तयितुं सीतागतमनुरागं चोद्बोधयितुं सीतागतान्गुणाननुस्मारयति— इयमिति ॥ अस्या इयमाकृतिराभरणेन विनाप्यत्यन्तं शोभमाना पुनराभरणैर्योजिता कथमिव शोभते । अलङ्कृताया अस्याश्शोभा न परिच्छेत्तुं शक्यत इत्यर्थः । अथ दशग्रीवः पुनरपि सीतां विलोक्य कामविवशो भूत्वाह— किमिति ॥

रावणः— किमाभरणैरस्याः। पश्य

यस्य नैसर्गिकी शोभा तन्न संस्कारमर्हति।
कः कलां शशिनो मार्ष्टि कौस्तुभः केन रज्यते ॥ २४ ॥

सूतः— आयुष्मन् किञ्चिद्वक्तुकामोऽस्मि।

रावणः— कथय कस्ते परिहारः।

सूतः—

इमां गम्भीरचारित्रां पश्यामि पतिदेवताम्।

रावणः— कथं त्वमवगच्छसि।

सूतः—

यदनेन वने धीरा रमते बन्धुनिःस्पृहा ॥ २५ ॥

रावणः— मन्दात्मन् ननु स्त्रीणां विशेषानुपलभ्य सन्तोषिणी

---

रज्यत इति ॥ रक्तं क्रियत इत्यर्थः ॥ किञ्चिद्वक्तुकामोऽस्मीति ॥ स्वामिनं प्रति हितमप्यस्याप्रियं सहसा न वक्तव्यमिति प्रथमं विवक्षा दर्शिता। कस्ते परिहारः त्वया यद्विवक्षितं तत्कथनार्थं किं परिहरणीयम्। न ह्यन्यः कश्चिदत्र सन्निधत्ते। अतिरहस्यमपि मम भगिन्या श्रोतव्यमेवेति भावः ॥ इमामिति ॥ इमां पतिदेवतां पश्यामि। पतिरेव देवता यस्यास्सा पतिदेवता। देवताशब्देन न केवलमस्याः पतिगोचरानुराग एव स्नेहविश्वासबहुमानात्मिका भक्तिरपि महती तद्गोचरा विद्यत इति दर्शितम्। अत एव गम्भीरमपरिच्छेद्यमनन्यपतिव्रतासाधारणं चारित्रं यस्यास्सा। अनेन विषयान्तरनैरपेक्ष्यं दर्शितम्। अत एवंभूतैषा भवता बलात् गृह्यमाणापारेण प्रियवियोगदुःखेन दशमीमवस्थामेव प्रतिपत्स्यते। न तु त्वद्दर्शने वर्तिष्यते तथा चैहिकपारत्रिकविरोधात् अस्यामभिनिवेशो न शुभोदर्क इति भावः। अथ कथमिति पृष्टो हेतुमाह— यदिति ॥ बन्धुनिःस्पृहेत्यनेन स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यज इति न्यायेनात्यन्तस्पृहणीयेष्वपि स्पृहाभावस्तदितरेष्वत्यन्तमनास्थां दर्शयितुमभिहितम्। वन इत्यनेन प्राणेश्वरसन्निधाने नास्या दुःखहेतवोऽपि शीतवातातपादय एवेति दर्शितम्। धीरेत्यनेनास्या बलाद्गृहीतायाः चित्तावर्जनमतिरम्यैरपि विभवैः कर्तुं न शक्यत इति द्योत्यते। अथ दशग्रीवस्तद्वचनसूचितं सीताहरणस्य निष्प्रयोजनत्वं निराकरोति— मन्दात्मन्निति ॥ अल्पबुद्धे तत्कालदृष्टमेकं प्रमा-

बुद्धिः । पश्य

मरतकतटे मन्दाकिन्या मदङ्कनिषादिनी
कनकनलिनोद्गन्धीन् स्वर्गानिलान् प्रतिगृह्णती ।
भयपरवशे दत्तापाङ्गा महेन्द्रपरिग्रहे
मनुजमवधूयैषा कामं मया सह रंस्यते ॥ २६ ॥

सीता— ( निमित्तं सूचयन्ती ) कुमार आसण्णं विअ असोहणं भावि दक्खिणा दाणिं मे अक्खी मन्तेदि ।

कुमार आसन्नमिव अशोभनं भावि दक्षिणमिदानीं मे आक्षि मन्त्रयते ।

लक्ष्मणः— आर्ये

---

णीकृत्य तत्तज्जातिगतस्वभावं न जानासीति भावः । स्त्रीणां बुद्धिविशेषान् पूर्वमनुभूतेभ्यो भावेभ्योऽत्यन्तं विशिष्टान् भावानुपलभ्यानुभूय तत्क्षण एव सन्तोषिणी ननु । प्रसिद्धौ ननुः । पतिव्रतास्वप्यहल्यारेणुकादिषु अस्य प्रसिद्धत्वात् । अत्र णिनिप्रत्ययः स्त्रीबुद्धेः तत्स्वभावतामवगमयति ॥ पश्येति ॥ यत एवं स्त्रीस्वभावः अतोऽस्या अवधानमवधारयेत्यर्थः । इदानीं राज्यभ्रष्टस्य वनं प्राप्तस्यात्यन्तमलिनस्य रामस्याङ्के निषण्णैषा मया स्वर्गं नीता सती त्रिलोकीशं अनर्घाभरणानुलेपादिसमुज्ज्वलाङ्गं वीराग्रेसरं मामुपलभ्य मदङ्कनिषादिनी भविष्यति । न तु तदा मदङ्कात् कदाचिदप्यवरोहणमाकाङ्क्षतीति । णिनिप्रत्ययेनाङ्कस्थितिस्स्वभावता दर्शिता । अनेनालम्बनविभावस्य महिमा दर्शितः । उद्दीपनविभावानां वैशिष्ट्यमाह— मन्दाकिन्या इत्यादि ॥ अनेन मन्दाकिन्यास्तत्तीरप्रदेशस्य च भूगताभ्यो नदीभ्यस्तत्तीरप्रदेशाच्चानर्घरत्नमयस्थलीगतत्वेन कर्दमादिसमुत्थकालुष्याभावात् मरतकमयत्वेन च विशेषो दर्शितः । कनकनलिनोद्गन्धीन् स्वर्गानिलानित्यनेन नलिनानां कनकमयत्वं तत्सम्पर्कात् सन्तानशाखिसंसर्गाच्च समीरणानां परिमलातिशयाच्च वनसमीरेभ्यो विशेषो दर्शितः । एवं मनुष्यवर्गलोकदुर्लभान् पदार्थाननुभूय मनुजमवधूय । मनुजमित्यनेन क्षत्रियत्वनिमित्तराज्यभोगाद्यभावो दर्शितः । अवधूयेत्यनेन रामगतानुरागपरित्यागो लक्ष्यते ॥ कामं मया सह रंस्यते ॥ काममित्यनेन रमणस्य रामविरहदुःखामिश्रं तत्तद्रमणीयपदार्थसम्पत्त्या पर्याप्तत्वं दर्शितम् । भयपरवश इत्यादिना सीतायाः निजप्रतापसाक्षात्करणेनात्मनि बहुमानाधिक्यं द्योतितम् । अथ सौमित्रिः सीतया आसण्णं विअ

दायादसाधारणवस्तुवन्ध्यं
वनान्तमस्माकमुपाश्रितानाम् ।
अशोभनं नाम किमव्यवस्था
यत्र श्रियस्तत्र ननु द्विषन्तः ॥ २७ ॥

सीता— कुमार इसिपदिणीणं वदणादो सुदं मए अत्थि विस्सुदो विंसदिभुओ तुम्हेहिं हदाणं खरदूसणाणं बादेत्ति ।

कुमार ऋषिपत्नीनां वदनात् श्रुतं मयास्ति विश्रुतो विंशतिभुजो युवाभ्यां हतयोः खरदूषणयोर्भ्रातेति ।

रावणः— दिष्ट्याहमनया श्रुतपूर्वः ।

लक्ष्मणः— आर्ये अलमस्मादुद्वेगेन ।

---

इत्यादिनाभिहितं दक्षिणाक्षिस्पन्दनहेतुकमशोभनं निरस्यन्नाह— आर्ये इति ॥ दायादानां साधारणं यद्वस्तु राज्यधनादि तेन वन्ध्यं रहितम् ॥ वनान्तं वनमध्यमुपाश्रितानामस्माकं किमशोभनं नाम किमप्यशोभनं न भविष्यति । यत्रैकस्मिन्द्रव्ये बहूनामभिलाषो भवति तत्रैवाशोभनम् । इह तु बहुजनाभिलाषास्पदस्य वस्तुनोऽभावात् कथमशोभनसंभव इत्यर्थः । यद्यपि दायादेभ्योऽन्येषामपि एकद्रव्याभिलाषो विपन्निमित्तमेव तथाप्यन्यकृताया विपदः आत्मशक्त्यैव सुपरिहरत्वात् दायादसाधारणत्वमेव वस्तुनो विपद्धेतुत्वेनोक्तम् । अनेन पूर्वं रामवचनेन प्रशमितप्रायोऽपि वासनारूपेण स्थितः कैकेयीगतेर्ष्याविशेषः इदानीमशोभनशब्दश्रवणेन समुद्बुद्ध इति गम्यते । उक्तमेव विशेषं वैधर्म्यमाश्रित्य प्रसिद्धरूपेण सामान्येन समर्थयते— अव्यवस्था इति ॥ व्यवस्थाशब्देन मर्यादा स्थैर्यं चाभिधीयते । श्रियो हि सत्येव पितरि ज्येष्ठे वा पुत्रमनुजं वाभिगच्छन्ति अतो निर्मर्यादाः । चञ्चलत्वं श्रियाः प्रसिद्धमेव । अत एवंभूताः श्रियो यत्र भवन्ति तत्र द्विषन्तोऽपि स्युः । ननुः प्रसिद्धौ । एवं सौमित्रिणा एकद्रव्याभिलाषहेतुकेऽर्थे निराकृते सति सीता प्रबलवैरहेतुकं व्यसनमुत्प्रेक्षते ॥ इसीति ॥ ऋषिपत्नीनां वचनान्मया श्रुतम् ॥ युष्माभिर्हतयोः खरदूषणयोर्भ्रातेति ॥ अनेन वैरहेतुर्दर्शितः । विश्रुतः त्रिलोकीविजयफलैर्बलपराक्रमादिभिः प्रसिद्धः । अनेन प्रतिक्रियासामर्थ्यं दर्शितम् । अहमेवंभूतात् रावणात् भयमाशङ्के इति वाक्यसमाप्तिः । अथ रावणः आत्मनः सीतया श्रुतत्वादिविशेषबलात् गुणपरिपूर्णत्वेन श्रवणं तदनुरागहेतुं मन्यमानः हर्षातिशयमालम्ब्याह— दिष्ट्येति ॥ अलमस्मादुद्वेगेन भयेनेत्यर्थः ।

रावणः— किं नु खलु वक्ष्यति ।

लक्ष्मणः — न बाहवः प्रमाणं पौरुषस्य । पश्य

येन सोऽयमपि रावणो जितः
तं सहस्रभुजमर्जुनं मुनिः ।
होमसाधनविधानकर्मणा
व्यच्छिनत्परशुनेव शाखिनम् ॥ २८ ॥

रावणः— स्मर मनुष्य तवेदं वचनम् ।

( नेपथ्ये ) हा लक्ष्मण ।

---

भयाकरणे हेतुमाह— नेति ॥ पौरुषस्य पराक्रमशक्तेर्बाहवः । इह बहुत्वं विवक्षितम् । बाहूनां बहुत्वमित्यर्थः । न प्रमाणं नियामकम् । यो यस्मात् बाहुभिरधिकः स तस्मात् पौरुषोत्कृष्ट इति नियमो नास्तीत्यभिप्रायः । एतदेवोपपादयति— पश्येत्यादिना ॥ येन पुरन्दरादयोऽपि जिताः सोऽयं विंशतिभुजः रावणः येन कार्तवीर्येण जितः मुनिर्भार्गवः द्विभुजः सैन्यादिनिरपेक्षः एक एव सहस्रभुजं तं कार्तवीर्यं भ्रातृपुत्रामित्रामात्यचतुरङ्गवाहिनीपरिवृतं बाहुसहस्रधृतानेकशस्त्रकदम्बकं होमसाधनविधानकर्मणा होमसाधनं समिदादि तस्य विधानं मन्त्रपूर्वकं छेदनादिसंस्कारकरणं तदेव कर्म व्यापारो यस्य तेनैव परशुना व्यच्छिनत् । अनेन युद्धक्षममायुधान्तरमपि नोपात्तम् । किं पुनः सैन्यादि । अतस्तद्विजये पौरुषमेव केवलं कारणमिति द्योतितम् ॥ शाखिनमिवेति ॥ इनिप्रत्ययो भूम्नि वर्तमानः शाखानां बहुत्वमवगमयति । तेन भुजसहस्रस्थाने शाखासहस्रयोगो द्योत्यते । यथा शाखिनः शाखाः प्रथमतो विच्छिनत्ति तथेत्यर्थः । अनेन शाखिनः च्छेद इव निश्शङ्कत्वं कार्तवीर्यच्छेदने रामस्य द्योतितम् । सोऽयं परशुरामः पुनरार्येणायत्नेन विजित इत्येतत्सीतया विदितमिति मत्वा नाभिहितम् । अतो न रावणाद्भेतव्यम् । इह लक्ष्मणस्य स्थिरत्वं नाम धीरोदात्तगुणो दर्शितः । अथ रावणो लक्ष्मणस्यात्मावमानगर्भं वचनमाकर्ण्य सरोषमाह— स्मरेति ॥ मनुष्येत्यनेन मनुष्यत्वावान्तरभेदक्षत्रियत्वजातिनिबन्धनस्य प्रतापादेः क्षात्रधर्मस्य राज्यभ्रंशादिसिद्धोऽभावो दर्शितः ॥ तदेव वचनं स्मरेति ॥ अयमभिप्रायः । अस्माभिरविवेकात् बलवत्तमो रावणोऽधिक्षिप्त इति अनुस्मृत्यास्माभिर्विधास्यमानाद्व्यसनादात्मानं रक्षितुं महान्यत्नः क्रियताम् । तथाप्यस्मदधिक्षेपफलं दर्शयिष्यामीति । अथ जानकी रामेण निहन्यमानस्य मायाबलेन रामरूपं प्राप्तस्य मारीचस्य लक्ष्मणं सीतासविधात्

**सीता**— हं अज्जउत्तस्स विअ सरो ।

हमार्यपुत्रस्येव स्वरः ।

**लक्ष्मणः**— आर्ये किमार्तस्वरमार्यः करोति ।

**सीता**— तुवं किं तक्केसि । त्वं किं तर्कयसि ।

**लक्ष्मणः**— मायेति ।

**रावणः**— अहो धृष्टः खल्वेषः ।

**सीता**— बालिश तदो वि रक्खिदव्वो ।

बालिश ततोऽपि रक्षितव्यः ।

**लक्ष्मणः**— कथं रक्ष्यो रक्षति ।

( नेपथ्ये ) किं विलम्बसे ।

**सीता**— खला भादुणो आपण्णस्स अक्कन्दिदं उवेक्खमाणं तुमं कहं भअवदी पुहुवी सहेदि ।

खल भ्रातुरापन्नस्याक्रन्दितमुपेक्षमाणं त्वां कथं भगवती पृथ्वी सहते ।

**लक्ष्मणः**— आर्ये किं त्वया तथैवेति निश्चितम् ।

---

दूरीकर्तुं हा लक्ष्मणेति विलापवचनमाकर्ण्य सविषादमाह— **हमिति** ॥ आर्तो दुःखविवशः तस्य स्वरः आर्तस्वरः ॥ **धृष्ट इति** ॥ अव्याकुलसत्त्वबलसम्पन्न इत्यर्थः ॥ **कथं रक्ष्यो रक्षतीति** ॥ अयमभिप्रायः यदिदं भवत्यार्यस्यान्यतो भयमाशङ्कितं तदार्यस्य प्रभावापरिज्ञानादेव । यदि वार्यस्यान्यतो भयं भवेन्नाम तथापि नाहं रक्षितुं शक्नोमि । यदार्येण दुस्साधं कर्म तदिन्द्रादयोऽपि साधयितुं न शक्नुवन्ति । किं पुनरहम् । तस्मान्मम न रक्षितृत्वमिति । अथ जानकी पुनरपि किं विलम्बसे इति परिदेवनमाकर्ण्य सरोषं परुषतरमाह— **खलेति** ॥ खल कठोरहृदय भगवती पृथिवी आपन्नस्य परमं व्यसनं गतस्य भ्रातुराक्रन्दितमेव कर्म श्रूयमाणमप्युपेक्षमाणं स्तोकमपि विकारमनापन्नं त्वां कथं सहते । हृदयकाठिन्येन लक्ष्मणस्य गरीयस्त्वमभिप्रेत्य असोढव्यत्वमुक्तम् । यथाह— "दीनगोचरदयापरिहीनं यस्य मानसमतीव कठोरम् । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥" इति । अथ पुनरपि हा हतोऽस्मीति वालापमाकर्ण्य विशीर्णहृदया मर्मस्पृग्भिर्वाग्वज्रैः सौमित्रिमधिक्षिपति—

( नेपथ्ये ) किं न शृणोषि लक्ष्मण ।

**सीता**— सुणाहि लक्खण किं ण तुराअसि । हद्धि अणन्तरगामिणी इत्थिआणं लच्छी । ण हु अहं । एक्कं तं एव्व ।

शृणु लक्ष्मण किं न त्वरसे । अनन्तरगामिनी स्त्रीणां लक्ष्मीः । न खल्वहम् । एकं तमेव ।

**लक्ष्मणः**— ( कर्णौ पिधाय ) शान्तं पापं शान्तं पापम् ।

अपि मां विजल्पसि गभीरधियां
प्रथमा सती यदविचार्य चला ।
तदुपस्थिता तव विपन्नियतं
परिवर्तते प्रकृतिरापदि हि ॥ २९ ॥

**रावणः**— मूढ त्वं न जानीषे संपदुपस्थिता वनवासपरिक्लिष्टायाः ।

( नेपथ्ये ) हा हतोऽस्मि ।

**सीता**— मुक्ख सुणोहि लक्खण अहं तव पुरदो मरिस्सं । पच्चा

---

लक्ष्मण किं चिरायसे तवार्यपुत्ररक्षणं प्रत्यनास्थायां राज्यश्रीलिप्सा च मत्परिजिघृक्षा च कारणं मन्ये । तत्रैकमेव लभ्यते यतः स्त्रीणां मध्ये लक्ष्मीरेवानन्तरगामिनी न खल्वहम् । अहं तमेकमेवानुगच्छामीत्यर्थात्सिध्यति ॥ अपि मामिति ॥ आर्ये इति सम्बोधनं परुषवचनश्रवणजनितान्निर्वेदान्न कृतम् । मूढे इत्यादिसम्बोधनं तु ज्येष्ठभार्यायामवद्यार्हमिति अतः परं सर्वत्र लक्ष्मणग्रन्थे सम्बोधनाभाव इति ज्ञेयम् । एतावन्तं कालं गभीरधियां प्रथमा सती गभीरा सत्त्वविनयधैर्यादिभिरपरिच्छेद्या धीर्बुद्धिवृत्तिः यासां तासामरुन्धत्यनसूयादीनां प्रथमा सत्त्वादिधीगुणैस्ताभ्योऽधिका भवन्ती । सतीति वर्तमाननिर्देशेन सत्त्वादिगुणानां निरन्तरानुवृत्त्या नैसर्गिकत्वं दर्शितम् । तथाभूता त्वमिदानीं चलास्थिरचित्ता भूत्वाविचार्य परशुरामजयादिभिरनुभूतमप्यार्यस्य पराक्रममननुस्मृत्य क्षुद्रेभ्यो भयमाशङ्क्य मामपि जन्मनः प्रभृति अद्य यावत् गुरुशुश्रूषाबद्धदीक्षमपि मामेवं विजल्पसि अधिक्षिपसि यत्तत् ततो हेतोस्तव काचिद्विपदुपस्थिता नियतं निश्चितम् । अत्र हेतुमाह— आपद्यासन्नायां प्रकृतिः स्वभावः परिवर्तते अन्यथा भवति हि । हिशब्दो हेतौ । अथ दशग्रीवः सीतां प्रति सफलं मातुलस्य मायाप्रयोगमभिनन्दन्नपि सौमित्रिं तदनायत्तचित्तमाज्ञाय तं प्रति सनिर्वेदो भूत्वा तेनापि मामित्यादिप्रसाधितमर्थं निराकरो-

णिरासो दाणिं भादुणो सआसं गमिस्ससि ।

मूर्ख शृणु लक्ष्मण अहं तव पुरतो मरिष्ये । पश्चान्नि-
राश इदानीं भ्रातुः सकाशं गमिष्यसि ।

लक्ष्मणः—

अविवेकमनावेक्ष्यमदाक्षिण्यमनूर्जितम् ।
धिगहं जन्म नारीणां यन्मामेवं प्रभाषसे ॥ ३० ॥

सीता— तुवं दाव साहु होहि ।    त्वं तावत् साधुर्भव

लक्ष्मणः—

मायाविधेयवपुषां नववैरभाजां
विश्रामवेश्मनि वने रजनीचराणाम् ।

---

ति— मूढेति ॥ इहाभिमुख्यकरणश्रवणफलशून्ययोः सम्बोधनवचनयोरुपादा-
नं रावणस्य लक्ष्मणगोचरनिर्वेदेर्ष्यादिकृतं चापलातिशयमभिव्यनक्ति । अथ
सौमित्रिस्तव पुरतो मरिष्ये पश्चान्मां प्रति निराशो भूत्वा इदानीमेव भ्रा-
तृसकाशं गमिष्यसीति वाग्वज्रेणाभिहतः सनिर्वेदमाह— अविवेकमिति ॥
यतस्त्वं मामेवं विवेकादिशून्यं प्रभाषसे अत्यर्थमपलपसि ततो नारीणां जन्म
जातिं धिक् । जन्मशब्देनैकार्थसमवायात् स्त्रीत्वजातिर्लक्ष्यते । स्त्रीविशेषे जा-
नक्यामनुभूतमर्थमविवेकादि स्त्रीजातिनिष्ठत्वेन समर्थयते अविवेकमित्यादिविशे-
षणचतुष्टयेन । पूर्वदृष्टव्याप्यलिङ्गवशेनेदं युज्यते इदं न युज्यत इति युक्तायुक्तवि-
भागज्ञानं विवेकं यतस्त्वं भार्गवजयादिभिरनुभूतमार्यस्य पराक्रमं न प्रत्येषि अतः
स्त्रीणां जातिरेव विवेकविधुरेति भावः । करिष्यमाणस्य कर्मणः आगामिनीं परि-
णतिमवधारयितुं या पूर्वमेव चिन्ता तदवेक्षणम् । अत्यर्थमवेक्षणयोग्यमावेक्ष्यम् ।
यतस्त्वं मद्विसर्जननिमित्तमात्मनो भाविनीं महतीं विपदं न किञ्चिद्विभावयसि
अतः स्त्रीणां जातिरेवावेक्षणशून्येति भावः । दाक्षिण्यं परच्छन्दानुवर्तित्वं यत
आर्येणात्मरक्षार्थं नियुक्तस्य मम हितोपदेशात्मकं तत्त्वावबोधकं च वचनमना-
दृत्य स्वाच्छन्द्येनात्मसमीपान्मां विसर्जयितुं साहसं कर्म चिकीर्षसि अतः स्त्री-
सामान्यमेव दाक्षिण्यहीनमिति भावः । ऊर्जितं सत्त्वबलं तेन रहितमनूर्जि-
तम् । अनेन चापलगुणो दर्शितः । यथाह— "चित्तस्याविकृतिस्सत्त्वं विकृतेः
कारणे सति ।" इति ॥ त्वं तावत्साधुर्भवेति ॥ अत्रासाधुत्वं विपरीतलक्ष-
णया प्रतीयते । यथा— "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता
परम् । विदधदीदृशमेव सदा सखे सुखितमास्स्व ततश्शरदां शतम् ॥" इत्यत्र ।

आज्ञां गुरोरगणयन्नविवेकलोलां
एकाकिनीं कथमहं भवतीं त्यजेयम् ॥ ३१ ॥

सीता— समाही रक्खदि इत्थिआअणं ण बाणा ।
समाधी रक्षति स्त्रीजनं न बाणाः ।

लक्ष्मणः— देवा ज्ञास्यन्ति देवाः साक्षिणः ।

सीता— होदव्वम् । भवितव्यम् ।

लक्ष्मणः— ( प्रणम्य ) नमस्तुभ्यम् । ( निष्क्रान्तः )

शूर्पणखा— अज्ज पेक्ख पेक्ख । आर्ये पश्य पश्य ।

---

अथ सौमित्रिः परुषवचनश्रवणसमुद्भूतेन निर्वेदेन गमनं प्रति डोलायमानस्वान्तो भूत्वाह— मार्येति ॥ अहमेवं भवत्या परित्यक्तोऽपि कथं भवतीं वने त्यजामि । त्वत्सकाशान्मम प्रयाणं तव परित्याग एव संभवतीति त्यजामीत्यनेन दर्शितम् । अन्तःपुरेऽपि पतिव्रतायाः पत्या बान्धवादिभिर्वा सहैवावस्थितिः समुचिता । तत्र मनुष्यसञ्चारशून्ये वने परित्यागः कथमौचित्यपदवीमधिरोहतीति वन इत्यनेन दर्शितम् । न केवलमिदं वनं मनुष्यसञ्चारशून्यं अपि तु क्रूरतराणां राक्षसानां निवासनं चेत्याह— रजनीचराणां विश्रामवेश्मनीति ॥ विशेषेण पुनरिदानीं खरवधादिसमुद्भूतेन वैरेण छिद्रान्वेषिणो वर्तन्त इत्याह— नववैरभाजामिति ॥ मायाया विधेयमधीनं वपुर्येषां ते मायाविधेयवपुषः । अनेनास्मत्सन्निधानेऽपि तेषां मायाप्रयोगो दुष्परिहर एव किं पुनरसन्निधान इति दर्शितम् ॥ अविवेकलोलामिति ॥ यतः पूर्वमविवेकात् दृष्टमात्रे मृगे विस्रम्भमुपगम्य स्वभर्ता प्रत्यादिष्टः इदानीं तु श्रुतमात्रं विलापवचः प्रमाणीकृत्यात्मरक्षणार्थं नियुक्तं मामपि परित्यजसि अतो महानविवेकः चापलं चेति भावः । एवं सीताया अवश्यरक्षणीयत्वमुपपाद्यात्मनो रक्षितृत्वस्यावश्यकत्वं दर्शयति— आज्ञामिति ॥ समाधी रक्षति स्त्रियो न बाणा इति ॥ समाधिशब्देन चित्तस्य स्थैर्यं लक्ष्यते । स्त्रीशब्देन पतिव्रता विवक्ष्यन्ते । पतिव्रतानां रक्षणं पातिव्रत्यरक्षणमेव न चैतद्बाणसाध्यमित्यर्थः ॥ देवा ज्ञास्यन्तीति ॥ गुर्वाज्ञामुल्लङ्घ्यास्याः परित्यागे मनागपि ममापराधो न भवति अस्या निर्बन्धेन क्रियमाणत्वादित्येतदत्रासन्निधानाद्देवा ज्ञास्यन्तीत्यर्थः ॥ देवास्साक्षिण इति ॥ परित्यक्ताया अस्या वृत्तान्ते देवास्साक्षिणो भवन्त्वित्यर्थः ॥ होदव्वमिति ॥ मद्वृत्तान्ते दैवैरेव साक्षिभिर्भवितव्यं अन्येषां साक्षित्वानर्हत्वात् । यतो देवा दिव्येन चक्षुषा मानसीमपि

सीता— अवि णाम अज्जउत्तेण लक्खणो सङ्गमिस्सदि ।

अपि नामार्यपुत्रेण लक्ष्मणः संगंस्यते ।

( नेपथ्ये ) सीते त्वमपि मामुपेक्षसे ।

सीता— हं अधण्णा खु अहं अज्जउत्तं सरेण अण्णेसामि ।

( प्रतिप्रते )

हं अधन्या खल्वहं आर्यपुत्रं स्वरेण अन्वेषयामि ।

शूर्पणखा— अज्ज पेक्ख पेक्ख अवणीदअंतं रअणं सअं एव्व गच्छंतं ।

आर्य पश्य पश्य अपनीतयन्तृकं रत्नं स्वयमेव गच्छेत् ।

रावणः— नायमुपेक्षाकालः । रामरूपेणैनामर्धपथे प्रतिबध्नामि ।

शूर्पणखा— सुट्ठु अज्जो भणादि । अहं वि दाव रामं सीदारूवेण णिवुत्तिपहे विलंबइस्सम् ।

सुष्ठु आर्यो भणति । अहमपि तावद्रामं सीतारूपेण

---

प्रवृत्तिं जानन्ति इतरेषां च तदवगमासामर्थ्यात् । अनेन मानसस्यापि पातिव्रत्यस्य स्थैर्यं दर्शितम् । इह सीतयाभिहितं समाधे रक्षितृत्वं देवानां साक्षित्वं च सप्तमेऽङ्के सौमित्रिणा सत्यत्वेनानुभूय संरक्षितो ममेत्यत्र प्रशंसिष्यते ॥ अपि नाम लक्ष्मणः आर्यपुत्रेण सङ्गंस्यत इति ॥ अपिनामशब्दो दैवप्रार्थनायाम् । अथ मारीचस्य हा सीतेत्यादिमायापरिदेवनमाकर्ण्य रामसमीपं गन्तुमिच्छति— हमित्यादिना ॥ हमिति शोकसमुत्थो वाग्रूपोऽनुभावः ॥ स्वरेणेति ॥ यस्यां दिशि स्वरः श्रूयते तया दिशा गत्वान्विच्छामीत्यर्थः । अथ शूर्पणखा आगच्छन्त्यास्सीताया हरणे पातिव्रत्यप्रभावान्मन्दायमानं दशग्रीवमालोक्य तत्र प्रेरयति— पश्य पश्येति ॥ अपनीतयन्तृकं अपनीतो यन्ता रक्षको यस्मात् । अनेन तस्या हरणे प्रतिबन्धाभावो दर्शितः । रत्नमित्यनेन तस्या अवश्यहरणीयत्वमावेदितम् । स्वयमेवेत्यनेन न केवलं रक्षितुरेवासन्निधानं अपि तु सहायस्यापीति दर्शयति—गच्छादित्यनेन ॥ कालातिपाते सत्येषा रामसमीपमेव गच्छेत् । अत इदानीमेवैषा हरणीयेति दर्शयति— अर्धपथ इति ॥ पथोऽर्ध इति विग्रहः । षष्ठीतत्पुरुषसमासः । "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तोऽप्रत्ययः । "राजदन्तादिषु परं" इति अर्धशब्दस्य पूर्वनिपातः । अथ निशाचरी रामरूपेण भ्रातुः सीताहरणोद्यममभिनन्द्य स्वयमपि तत्र साहाय्यकं कर्तुमुद्यता तत्प्रकारं निवेदयति— सुष्ठु इत्यादिना ॥ निवृत्तिः प्रत्यागमनं

निवृत्तिपथे विलम्बयिष्ये ।

**रावणः**— बाढम् ।

**शूर्पणखा**— इदो परं किं मए कत्तव्वं । ( निष्क्रान्ता )

इतः परं किं मया कर्तव्यम् ।

**सूतः**— आयुष्मन् किं मयेदानीं कर्तव्यम् ।

**रावणः**— ( कर्णे ) एवमिव ।

**सूतः**— यदाज्ञापयत्यायुष्मान् । ( आत्मगतं ) अहो बलवान् भर्तृ-पिण्डः । इदमपि मया कर्तव्यमासीत् ।

( रावणो रथादवतीर्य रामरूपेण सीतायाः पुरतस्तिष्ठति )

**सीता**— हं अज्जउत्तो । जेदु अज्जउत्तो ।

हं आर्यपुत्रः । जयत्वार्यपुत्रः ।

**रावणः**— देवि इत इतः ।

मायाबलेन बलिनां क्षणदाचराणां
जिह्वातले करतलोदरि वर्तमानाम् ।
त्वां लक्ष्मणः कथमुपेक्षितवान्कथं त्व-
मित्थं गतासि मृदुना चरणद्वयेन ॥ ३२ ॥

---

तदर्थः पन्थाः निवृत्तिपथः ॥ इदो परमिति ॥ एवंभूते महति कार्ये भ्रातुः साहाय्यकरणादन्यत् किं मया कर्तव्यं न किमपीत्यर्थः । अथ सूतः आत्मना किमिदानीं मया कर्तव्यमिति पृष्टेन दशग्रीवेण मायाबलेन सौमित्रिरूपमवलम्ब्य रथाधिरूढो भूत्वा जानक्या अभ्यर्णमासाद्य प्रकाशं तद्विस्रम्भजननार्थमेवमुपवर्णयेत्याज्ञप्तः सनिर्वेदमाह— इदमपीति ॥ इदं कुलस्त्रीवञ्चनात्मकं कर्मापि मया कर्तव्यमासीत् न केवलं सारथ्यमेवेत्यपिशब्दः समुच्चयार्थः । अथवा अपिशब्दो गर्हायाम् ॥ आसीदिति ॥ भूतमात्रे लङ् । अनद्यतनत्वं न विवक्षितव्यम् । अथ मायाप्रभावेन राघवरूपमवलम्ब्य रक्षोनाथः सीतायाः पुरतस्तिष्ठन् देवि इत इत इत्युक्त्वा तस्या आभिमुख्यं सम्पाद्य रामरूपेण वचनेन विस्रम्भमापादयति— देवीति ॥ करतलोदरि मया त्वद्रक्षणार्थं नियुक्तो लक्ष्मणस्त्वां कथं केन हेतुना उपेक्षितवान् । उपेक्षणानर्हत्वं दर्शयति— क्षणदाचराणां जिह्वातले वर्तमानामिति ॥ क्षणदाचरकृतस्य हरणनिग्रहादे-

सीता— हं अधण्णाए मए उपालद्धो कुमारो किं ति मन्तेदि ।

हं अधन्यया मयोपालब्धः कुमारः किमिति मन्त्रयते ।

रावणः— नूनं विप्रलब्धासि मायामृगस्वरेण ।

सीता— अज्जउत्त कहिं सो माआमिओ ।

आर्यपुत्र कुत्र स मायामृगः ।

रावणः— पथि विप्रतिपन्नः स्वयमेवागमिष्यति ।

---

रयत्नसाध्यत्वं प्रतिबन्धाभावं च दर्शयितुं तस्या जिह्वातले वर्तमानत्वमारोपितम् । यथा जिह्वातले वर्तमानमयत्नेन निष्प्रतिबन्धमास्वाद्यं भवति तथेत्यर्थः । क्षणदाचरसद्भावस्य योग्यानुपलम्भविरोधं परिहरति— मायाबलेनेति ॥ अनेनैव हरणादेरयत्नसाध्यत्वहेतुरपि दर्शितः । एवं लक्ष्मणेनोपेक्षितायास्तव पर्णशालायामवस्थानमेव समुचितम् । तदकृत्वा त्वमपि कथं केन हेतुना इत्थमेकाकिनी निर्भयं वनमध्यं गतासि । मृदुना चरणद्वयेनेत्यनेन दशग्रीवस्य प्रणयविवशस्यास्या अतिकोमलमिदं चरणद्वयं कान्तारपर्यटनखेदमनुभवितुं न समुचितं अत इदानीमेवैनां रथमारोप्यास्मात् वनसञ्चारक्लेशान्मोचयामीति बुद्धिरावेद्यते । रजनीचराणां जिह्वातले वर्तमानाभिति दशग्रीवस्याभिप्रायेण सत्यतयैवोच्यते । अथ सीता स्वयमेव लक्ष्मणोपालम्भमुद्दिश्यानुतापमवलम्बमाना विमृशति— हमिति ॥ हमिति विषादजनितो वाग्भूरोऽनुतापः । अथ दाशरथ्योरागमनभयात् सीताहरणे त्वरमाणो रक्षोनाथः प्रतिवचनदानात्पूर्वमेव सीतागमने कारणं तदानीं विमृश्य विदितमिव भावयन्नाह— नूनमिति ॥ मायामृगस्वरेण कर्त्रा विप्रलब्धा वञ्चिता असि । करणभूतस्यापि स्वरस्य कर्तृत्वाभिधानं वञ्चने सौकर्यं द्योतयति । अथ कौतुकेन मायामृगस्योदन्तं पृच्छति— कहिं सो इति ॥ अथ दशग्रीवो यत्किञ्चिदभिधाय विस्रम्भं जनयति— पथीति ॥ स मृगो येनागाद्रामस्तमन्वगाच्च स वनप्रदेशः पथिशब्देन गमनाधारतयोपादीयते न तु क्षुण्णो मार्गः । तस्मिन्वनप्रदेश एव । अनुगमनसमय एवेति यावत् । स मृगो विप्रतिपन्नः अभिमतं ग्रहणं प्रति प्रातिकूल्याचरणमत्र विप्रतिपत्तिः तच्च तिरोधानमेव तिरोहितवान् न गृहीत इत्यर्थः । तिरोधानमात्रमत्राग्रहणे मायामृगत्वेनावगमे च हेतुः । तिरोधानान्मायामृगत्वमवगम्य प्रतिनिवृत्तोऽस्मीति अर्थाल्लभ्यते । ननु मायामृगश्चेत् स हन्तव्य एव तत् कुतस्तस्योपेक्षणं कृतमत आह— स्वयमेवागमिष्यतीति ॥ असौ यदा स्वयमेवागमिष्यति तदा तद्वधं करिष्यामि इदानीं तु तिरोहितस्य तस्य युष्मत्सन्निधावागमनमाशङ्क्य समु-

( नेपथ्ये ) अयमयमागच्छामि ।

**सीता—** हं अज्जउत्तस्स विअ सरो ।

हं आर्यपुत्रस्येव स्वरः ।

**रावणः—** मन्ये पूर्वमपि स्वरसादृश्येन वञ्चितासि ।

**सीता—** णं तेण कुमारो वि मए उपालद्धो ।

ननु तेन कुमारोऽपि मयोपालब्धः ।

( रावणः सूतं वीक्षते सूतोऽपि लक्ष्मणरूपेण रथमसन्दिग्धं गृहीत्वा रावणमुपसर्पति )

**सूतः—** प्रसीदत्वार्यः । रथमारोहत्वार्यः सपत्नीकः ।

**रावणः—** लक्ष्मण किमिदम् ।

**सूतः—** आर्य समाधिचक्षुषा भरतस्य परचक्रभयमुपनतं दृष्ट्वा तूर्णं युष्माभिरभिगन्तव्यमिति तपसा रथं निर्माय मह्यं दत्वा वनान्तरेष्वन्तर्हितस्तपस्विजनः ।

---

पेक्ष्य तूर्णं प्रतिनिवृत्तोऽस्मीति भावः । अथ रावणो रामेण मारीचस्य मायापरिदेवनहेतुकं सौमित्रिसीतयोः शोकातिशयमुत्प्रेक्ष्य तदुपशमनार्थमयमयमागच्छामीति समुदीरितं वचनमाकर्ण्य सञ्जातं सीतायास्संशयं विषादं चोपशमयन्नाह— **मन्ये इत्यादिना** ॥ अथ सीता विस्रम्भमुपगता त्वां लक्ष्मणः कथमुपेक्षितवानित्यस्य चोद्यस्यावसरप्राप्तमुत्तरमाह— **णमिति** ॥ अत्र रक्षोनाथेन निरीक्षणमात्रेण नियुक्तस्सूतः सौमित्रिरूपमवलम्ब्य रथमारुह्य निश्शङ्कं रावणमुपगम्यात्मना नियोक्ष्यमाणे कर्मणि अननुमतिमाशङ्कमान इव प्रथमं प्रसादं प्रार्थयते— **प्रसीदत्विति** ॥ अथ सूतेन रथारोहणे निवेदिते तत्कारणमजानान इव पृच्छति— **लक्ष्मणेति** ॥ उत्तरमाह— **आर्येत्यादिना** ॥ समाधिशब्देन योगोऽभिधीयते । योगाभ्यासजनितसंस्कारसहकृतेन चक्षुषेत्यर्थः । योगिनो हि योगाभ्यासवशात् दिव्येन चक्षुषा देशकालादिविप्रकृष्टमपि जानन्तीति काणादा आहुः । भरतस्य परचक्रभयमुत्पन्नं दृष्ट्वा न तूत्पद्यमानम् । अनेन हेतुना तूर्णमभिगन्तव्यमित्युच्यते । तूर्णमभिगमने उपायोऽपि तैरेवानुगृहीत इत्याह— **तपसा रथं निर्माय मह्यं दत्वेति** ॥ कुत्र स तपस्विजनो वर्तत इति चोद्यस्य प्रसङ्गं निरुणद्धि— **वनान्तरेष्वन्तर्हित इति** ॥ इदानीमितो वनात् वनान्तराणि प्राप्तः स मुनिजनोऽस्मन्नयन-

सीता— (आत्मगतं) जुज्जइ । णं पुव्वं वि से हत्थे दिण्णं परं अच्चरिअचूडामणी अब्भुदङ्गुलीअअं अ ।

युज्यते । ननु पूर्वमप्यस्य हस्ते दत्ते आश्चर्यचूडामणिः अद्भुताङ्गुलीयकं च ।

रावणः— देवि कस्तवाभिप्रायः ।

सीता— णं मए वि इच्छिदव्वो भरदस्स वसणणासो वन्दणं गुरुअणस्स अ ।

ननु मयाप्येष्टव्यो भरतस्य व्यसननाशो वन्दनं गुरुजनस्य च ।

रावणः— लक्ष्मण प्रथमं देवीमारोहय रथम् ।

सूतः— यदाज्ञापयत्यार्यः । (रथमारोहयति)

सीता— दिट्ठिआ रक्खसवंचणादो मोइदा भविअ गच्छामो ।
(सहर्षमारोहति)

दिष्ट्या राक्षसवञ्चनान्मोचिता भूत्वा गच्छामः ।

रावणः— प्रसन्ना देवी लक्ष्मण तूर्णं चोदयाश्वान् ।

सूतः— यदाज्ञापयत्यार्यः ।

रावणः— (आत्मगतं) राम इति

मयि बुद्ध्याप्यसन्दिग्धामिमां न स्प्रष्टुमुत्सहे ।
अहो तत्पूर्वदृष्टानां कष्टः स्त्रीणां समागमः ॥ २२ ॥

---

पथमतिक्रान्त इत्यर्थः । अथ जानकी पूर्वमाक्रान्ताः किन्न्विदत्यत्र शङ्कितमेव भरतस्य परचक्रभयमाकर्ण्य प्रत्ययिताश्चर्यचूडामणिनिर्माणदानादिदृष्टान्तेन मुनीनां रथनिर्माणक्षमं तपःप्रभावं स्वानुग्रहोन्मुखत्वं च युक्तं मन्यते— जुज्जइ इत्यादिना ॥ कस्तवाभिप्राय इति ॥ किं तव मतमित्यर्थः ॥ णं मए वीत्यादिः स्पष्टो ग्रन्थः । अथ दशग्रीवः सीतायां रथमारोपितायां त्वरिततरं रथं चोदयितुं नियुङ्क्ते— तूर्णमिति ॥ अथ नभोमार्गेण रथे तूर्णं चोदिते सीतां निष्प्रतिबन्धमात्मवशमुपगतामवलोक्य महन्मदनचापलमुपगम्य परिरम्भसमुत्सुकोऽपि पातिव्रत्यप्रभावजनितेन साध्वसेन स्तब्धव्यापारो भूत्वात्मनस्तामवस्थामुद्दिश्य विस्मयमानः स्वयमेव विमृशति— राम इत्यादिना ॥

( ततः प्रविशति रामः सीतारूपधारिण्या शूर्पणखया सह )

रामः— देवि स खलु जाल्मो राक्षसो ममेषुपतनानन्तरमेव मे रूपं गृहीत्वा पतितः । ततस्तमुपेक्ष्य तव वृत्तान्तपरिज्ञानार्थं तूर्णं निवृत्तोऽस्मि ।

शूर्पणखा— ( आत्मगतं ) अघं दे देवित्तणम् । अघं ते देवीत्वम् ।

आकाशे रथस्था सीता— चिराअ खु णो पिअसहीं वणत्थलीं विसज्जिअ गन्तव्वं ।

चिराय खलु नः प्रियसखीं वनस्थलीं विसृज्य गन्तव्यम् ।

---

राम इतीत्यस्य श्लोकगतेन बुद्धयेत्यनेनान्वयः । अहमिदानीं राम इति मयि मद्गोचरया बुद्धया हेतुना सन्दिग्धामनुत्पन्नान्यशङ्कालेशामपि इमां मत्पुरतो वर्तमानां प्रतिबन्धाभावेन सुखस्पर्शामपि न स्प्रष्टुमुत्सहे । स्पर्शनार्थमुत्साह एव तावत् कर्तुं न शक्यते । दूरे स्पर्शनमिति भावः । अहो इत्युत्साहानुत्पत्तिहेतुकमाश्चर्यमिति पूर्वार्धेन सम्बन्धः । अथ स्वयमेव निरूप्यात्तापरिचितिं हेतुत्वेनावधारयति— तत्पूर्वेति ॥ तदेव पूर्वमाद्यं यथा भवति तथा दृष्टानामित्यर्थः । तच्छब्देन वक्ष्यमाणतया बुद्धिस्थं दर्शनं परामृश्यते । प्रथमदृष्टानां स्त्रीणां समागमः कष्टः अतिप्रयत्नसाध्यत्वात् दुःखावह इत्यर्थः । अथ रामः सीतारूपधारिणीं निशाचरीमवलोक्य विस्रम्भमुपगम्याह— देवीति ॥ स खलु जाल्मो राक्षस इत्येकं वाक्यम् । यः कनकमृगरूपेणास्माभिः पूर्वं दृष्टः स कश्चिज्जाल्मो दुष्टो राक्षस एवेत्यर्थः । अत्र हेतुमाह— ममेत्यादिना ॥ अत्र स इति द्रष्टव्यम् । तस्य सहसा मद्रूपधारणात् केनाचिद्राक्षसेनानेन भवितव्यमित्यनुमितमित्यर्थः ॥ तव वृत्तान्तपरिज्ञानार्थमिति ॥ तव मायाकृतं भयमाशङ्क्येति यावत् । अथ राक्षसी देवीति सम्बुद्ध्यात्मकृतस्य मायाप्रयोगस्य वञ्चनात्मकं फलमनुभूय स्वयमेव सहर्षमाह— अघमिति ॥ देवित्तणमिति ॥ यदिदमसीतायां मयि सीताबुद्धया देवीति देवीत्वं भ्रान्त्या प्रकटितमिति शेषमूह्यम् । तत्तेऽघं महद्दुष्कृतं यत एवंविधयां वञ्चनया शत्रुभिरपहसनीयां बन्धुभिश्चातिशोचनीयां दशामुपगतोऽसीति भावः । अथ निशाचर्याः शङ्कासाध्वसादिहेतुकान् स्वेदोद्गमवैवर्ण्यादीननुभावानालक्ष्यान्यथासंभावयन्नाह— देवीति ॥ कविमतेनेदं सत्यतयैवोच्यते ॥ मम कृत इति ॥ वृथार्थपुत्रो मया व्यापारित इत्यनुशयेनेति यावत् । अथ निशाचरी भ्रान्तहासं अर्थद्वयानुरूपमुत्तरमाह— सच्चमिति ॥ त्वद्वञ्चनार्थमेव रूपान्तरं प्रतिपन्नमिति भावः । अथ सीता स्वयमाह— चिराय खलु नः प्रियसखीं वनस्थलीं विसृज्य गन्तव्यमिति ॥ इह वनस्थल्याः प्रियसखीत्वारा-

**रावणः**— देवि कृतमनेन । ननु द्रक्ष्यसि नन्दनातिशायिनीं नगरोद्यानश्रियमेव ।

**सीता**— ( अधो विलोक्य ) तह । हं अज्जउत्तो
तथा । हं आर्यपुत्रः ।

**रामः**— आकाशे सीताया इव स्वरः । ( इत्युद्वीक्षते )

**शूर्पणखा**— अज्जउत्त पेक्ख पेक्ख तव पडिकिदिं इत्थिअं अ ममाइदिं आदरिसे विअ पेक्खामि ।
आर्यपुत्र पश्य पश्य तव प्रतिकृतिं स्त्रियं च ममाकृतिं आदर्श इव पश्यामि ।

**रामः**— सत्यं सीता परपुरुषगोचरे न तिष्ठति । ध्रुवमियं वञ्चनासीता मायारामपार्श्वे । यथा सोऽहं न भवामि तथा सीतापि न भवति ।

---

पेण प्रियसखीसङ्गमविगमयोर्यथा हर्षशोकौ भवतस्तथा वनस्थल्या अपि सङ्गमविरहयोरिति दर्शितम् । अथ रावणो वनस्थलीवियोगजं दुःखं उपशमयन्नाह— कृतमिति ॥ अत्राप्यर्थद्वयं स्पष्टमेव । अथ रथे नभोमार्गमधिरूढे वनस्थलीदर्शनकौतूहलवशादधोदत्तदृष्टिर्जानकी सहसात्मदयितमवलोक्य महतीं शङ्कामुपेत्याह— हं अज्जउत्तो इति ॥ अथ राक्षसी रामं सीतास्वरानुसारेणाकाशे दत्तदृष्टिमवलोक्य सीतामात्रदर्शने रामस्यात्मगोचरा मायासीताशङ्कोदीयादिति मत्वा मायाराममपि सह दर्शयति— अज्जउत्तेति ॥ पश्य पश्य तव प्रतिकृतिमिति ॥ प्रथमं मायारामं दर्शितवत्यात्मगोचरशङ्कोदयस्यावकाशो निरुध्यते ॥ स्त्रियं च ममाकृतिमादर्श इव प्रेक्ष इति ॥ अत्राकृतिशब्देन प्रतिकृतिरेवाभिप्रेयते । अथ दाशरथिरुभयोस्सहावलोकनेनासञ्जातशङ्कालेशो भूत्वाह— सत्यमिति ॥ परपुरुषगोचर इति ॥ गोचरशब्देन गोचरीकरणयोग्यः पुरोवर्तिदेशो लक्ष्यते । परेषां पुरुषाणां पुरत इति यावत् ॥ न तिष्ठति ॥ अवस्थानमेव न करोति किं पुनः स्वैरासिकादीति भावः । यत एवमतो ध्रुवमियं वञ्चनासीता वञ्चनार्थं प्रदर्शिता मायासीता मायारामपार्श्वे तिष्ठतीति ध्रुवं निश्चितमित्यर्थः । ननु मायारामसन्निधौ सीतायाः परपुरुषबुद्ध्यभावात् स्वैरासिका युज्यते । सत्यं भवितव्यताबलात्तदानीं रामस्यैवंभूता बुद्धिर्न सञ्जातेति भ्रमः ॥ अथ भवितव्यताबलादेव दृष्टान्ताभासं प्रमाणीकृत्य मायासीतात्वं निश्चिनोति —

सीता— हं अधण्णा अहं अज्जउत्तं परमत्थं ण जाणामि ।

हं अधन्याहं आर्यपुत्रं परमार्थं न जानामि ।

रावणः— मुग्धे मुनीनामतिसन्धानार्थं मम रूपेण राक्षसाः सञ्चरन्ति ।

सीता— सच्चं एव्व एदं । कुदो अज्जउत्तस्स इत्थिआसम्बन्धो । जह सा अहं ण होमि तह अज्जउत्तो वि सो ण होइ ।

सत्यमेवैतत् । कुत आर्यपुत्रस्य स्त्रीसम्बन्धः । यथा साहं न भवामि तथार्यपुत्रोऽपि स न भवति ।

रावणः— प्रसन्ना देवी लक्ष्मण तूर्णं चोदयाश्वान् ।

सूतः— यदाज्ञापयत्यार्यः ।

( निष्क्रान्तो रावणः सीतां गृहीत्वा सूतेन च )

शूर्पणखा— ( विषादं रूपयति । स्वगतं ) को णु खु मे गमणस्स उपाओ । को नु खलु मे गमनस्योपायः ।

---

यथेति ॥ हमिति ॥ यत आर्यपुत्रं परमार्थं न जानामि । अनिश्चितपरमार्थयैव सत्या मयान्यतरेण सह गम्यते च अतोऽहमत्यन्तमधन्येत्यर्थः । अथ दशग्रीवः सीतां शङ्काकुलमानसामालक्ष्य भूप्रदेशगतां मायासीतां दर्शयित्वा शङ्कां निवर्तयति— मुग्धे इत्यादिना ॥ मुग्धे अनिशितप्रज्ञे राक्षसाः प्रायेण मुनीनामतिसन्धानार्थं वञ्चनार्थं मम रूपेण मायाबलादङ्गीकृतेन त्वद्रूपेण चेति द्रष्टव्यम् ॥ सञ्चरन्ति स्वैरं चरन्ति । अथ जानकी भवितव्यताबलात् विस्रम्भमुपगम्याह— सच्चमिति ॥ सत्यमेतद् ॥ कुत आर्यपुत्रस्य स्त्रीसम्बन्धः अन्यस्त्रीसम्बन्ध इति यावत् ॥ यथा साहं न भवामि तथार्यपुत्रोऽपि स न भवति ॥ यद्यप्यत्र सत्यरामस्य मायासीतासन्निधानं युज्यत एव तथापि विधिबलात् एतत् सीताबुद्धिपथं नाधिरूढमिति मन्तव्यम् ॥ प्रसन्ना देवी तूर्णं चोदयाश्वानिति ॥ एवमेवांभयोर्दम्पत्योरन्योन्यदर्शनानुवृत्तौ सत्यां भूयोऽपि शङ्कोन्मेषो भविष्यत्येव । अत उभयोरुभावपि परोक्षीकर्तव्याविस्यभिप्रायेण तूर्णमित्युच्यते ॥ विषादं रूपयति अभिनयति । निःश्वासाश्रुपातादिभिरनुभावैरन्तर्गतं विषादं व्यक्तीकरोतीत्यर्थः । निजभ्रातृवियोगात् प्रबलपरिपन्थिसन्निधानादनन्तरकरणीयापरिज्ञानाच्च विषाद इति द्रष्टव्यम् । अथ राघवो विषादनिमित्तमनुयुङ्क्ते— देवीत्यादिना ॥ हं देवि धीरे निसर्गतो

रामः— देवि

किं निःश्वासैर्ग्लपयसि जपापाटलं दन्तवासो
नेत्राभ्यां किं सृजसि कुचयोरस्रबिन्दूनजस्रम् ।
विक्षिप्ताङ्गी विलपसि कथं तिष्ठसि ध्यानमूका
धीरे धैर्यं तव सह मया निर्गतं निर्गतेन ॥ ३४ ॥

शूर्पणखा— अज्जउत्त तव वेसणस्स अहं वीजं संवुत्तात्ति पेक्खामि ।

अर्यपुत्र तव व्यसनस्याहं बीजं संवृत्तेति पश्यामि ।

रामः— मा मैवं, कं न वशीकरोति स मायामृगः । किं नु खलु नाद्यापि निवृत्तो लक्ष्मणः ।

शूर्पणखा— अहं वि तं एव्व तक्केमि ।

---

धैर्यगुणसम्पन्ने त्वं जपापाटलं जपाकुसुमवदतिशोणं दन्तवासः अधरं निःश्वासैः अन्तर्गतसन्तापहेतुकत्वेन प्रमाणाधिकैरूष्मायमाणैः निःश्वासमारुतैः ग्लपयसि ग्लानिं प्रापयसि ॥ किं कस्य हेतोः । जपापाटलमित्यनेन जपाकुसुमवदेव ग्लान्या शोचनीयत्वमधरस्य दर्शितम् । तथा नेत्राभ्यां कुचयोरस्रबिन्दूनजस्रं सृजसि किम् ॥ तथा विक्षिप्ताङ्गी विवशकरचरणाद्यवयवा भूत्वा विलपसि परिदेवनं करोषि । अत्र किमित्यनुषङ्गः कर्तव्यः । अन्तराध्यानेन चिन्तया मूका स्तिमितोर्ध्वनयना तिष्ठसि । अथ राघवेण पृष्टाया निशाचर्या अन्तरा कथमदत्तशङ्काप्रसरमुत्तरं दास्यामीति चिन्तया व्याकुलत्वं दर्शितम् । मया मृगग्रहणार्थं निर्गतेन सह तव धैर्यं निर्गतं कथमित्यत्रानुषज्यते । मन्निर्गमनानन्तरं तव धैर्यभ्रंशे किं कारणमित्यर्थः ॥ आर्यपुत्र तव व्यसनस्य मायामृगग्रहणार्थव्यापारहेतुकस्यायासस्य ॥ अहं बीजं संवृत्तेति ॥ विषाद इति वाक्यपर्यवसानम् । इह सीतावियोगहेतुकस्य व्यसनस्याहं बीजं संवृत्तेत्यर्थान्तरमभिप्रेतम् ॥ मा मैवमिति ॥ न केवलं तव निर्बन्ध एवात्र कारणं किन्तु ममौत्सुक्यमपीति भावः । ननु युक्तं स्त्रीत्वकृतेन चापलेन मम तद्विषयमौत्सुक्यं भवादृशां तु तदयुक्तमेव अत आह— कमिति ॥ सः मायामृगः । तच्छब्देनानुभूतो मायाकृतवैचित्र्यप्रकार औत्सुक्यहेतुत्वेन परामृष्टः ॥ कं न वशीकरोति ॥ अत्यन्तं धीरमपि वशीकरोत्येवेत्यर्थः । अथ राक्षसी किं न्वित्यादिना लक्ष्मणा—

अहमपि तदेव तर्कयामि ।

रामः— तस्य रूपपरिवर्तनेन कुमारं विप्रलब्धमिव पश्यामि ।
देवि किं शक्नोषि मामनुगन्तुं यावदहं लक्ष्मणमन्विच्छामि ।

शूर्पणखा— कहं वि अहं अणुगमिस्सं । भीदं ह्मि रक्ख-
सवंचणादो ।
कथमप्यहमनुगमिष्यामि । भीतास्मि राक्षसवञ्चनात् ।

रामः— देवि इत इतः । ( उभौ परिक्रामतः )

( नेपथ्ये )

सकामा भव कैकेयि कौसल्ये न गतिस्तव ।
यन्निशाचरबाणेन सुतस्ते मर्मणि क्षतः ॥ ३५ ॥

रामः— हन्त तदेव संवृत्तम् ।

( पुनर्नेपथ्ये )

सत्यवादिनि धर्मिष्ठे पुत्रि सागरवाससः ।
अमङ्गलानां नारीणां कथं त्वं देवि गण्यसे ॥ ३६ ॥

---

नागमनकारणचिन्तापरं राघवमालक्ष्याह— अहमपीति ॥ अहमपि तदेव लक्ष्मणानागमनकारणमेव चिन्तयामि ।अनेन ध्यानमूका किं तिष्ठसीत्यस्योत्तरं दत्तमिति ज्ञेयम् । अथ रामः स्वयमेव विलम्बनिमित्तमुत्प्रेक्षते—तस्येति ॥ तस्य रूपस्य परिवर्तनेनान्यथाकरणेन मदीयरूपावलम्बनेन कुमारं विप्रलब्धं वञ्चितमिव पश्यामि मन्ये । अतः पश्यामि गत्वा द्रक्ष्यामि । देवि किं शक्नोषि मामनुगन्तुमिति प्रश्नरूपस्यापि वाक्यस्य मामनुगच्छेति नियोगे तात्पर्यम् । प्रियंवदत्वादेव प्रश्नरूपत्वमाश्रितम् । अत एव यावदन्विच्छामीति प्रतिवचनदानात् पूर्वमेवान्वेषणाध्यवसायः कृतः । कथमप्यनुगमिष्यामि भीतास्मि राक्षसवञ्चनादित्यनेनानुगमनमनिष्टमिति गम्यते । अथ सौमित्रिस्सहसा मायाबलावलम्बितं राघवं सम्बोध्य विलपति— सकामेति ॥ एतावन्तं कालं समवायानन्तरमार्यस्य राज्यप्राप्तिशङ्कया भवत्याः कामो न परिपूर्णः । इदानीं तु सकामा परिपूर्णकामा भवेत्यर्थः । अथ कौसल्यायाः गत्यन्तराभावमालोच्य करुणाविवशस्तां सम्बोध्य विलपति— कौसल्ये इति ॥ हन्तेति ॥ यदेवास्माभिर्निरूपितं तदेव संवृत्तमिति ॥ अथ सीताया अपारे शोकसागरे निमज्जनमालोच्य शोकाकुलमानसस्तां सम्बो-

रामः— यावन्दयमात्मपरित्यागं न करोति तावदेनमुपसर्पामि।

( ततः प्रविशति बाणोद्धरणव्यापृतो लक्ष्मणः रामरूपप्रच्छन्नो मारीचश्च )

लक्ष्मणः— ( सकरुणं ) आर्य गुरुविधेय त्वदायत्तं मे जीवितं हरसि।

रामः— ( स्मितं कृत्वा ) लक्ष्मण

मुञ्च मायागतं दुःखं पश्य मां तव पूर्वजम्।

लक्ष्मणः— ( विलोक्य सक्रोधं ) आः राक्षस

पूर्वजं चापि मे हत्वा मामप्यभिगतोऽसि किम्॥ ३७॥

तिष्ठ तिष्ठ क्व यास्यसि ( खड्गमुत्कोशयति )

रामः— ( उपेत्य ) लक्ष्मण पश्य पश्य। ( इत्युङ्गुलीयं दर्शयति )

---

ध्य विलपति— सत्येति॥ हे देवि सत्यवादिनीति॥ आर्यपुत्रस्य स्वर इव श्रूयते इति यद्भवत्याभिहितं तत्सत्यमेव तदा मन्दभाग्येन मया मायाबुद्धया आर्यरक्षण उपेक्षा कृतेत्यनुतापोऽनेन व्यज्यते। अमङ्गलानां नारीणां मध्ये त्वं कथं गण्यसे भवत्या वैधव्यप्राप्तौ न कश्चिदपि हेतुर्दृश्यते॥ आत्मकृतेन वा पूर्वैः पितृपितामहादिभिः कृतेन वा दोषेण जनानाममङ्गलं भवति। तत्र पूर्वकृतदोषाभावं दर्शयति— सागरवाससः पुत्रीति॥ यतो भवती सागरवाससो भगवत्या वसुमत्याः पुत्री अतः पूर्वकृतदोषानुप्रवेशः शङ्कितुमपि न शक्यते। आत्मकृतदोषाभावं दर्शयति— धर्मिष्ठे इति। न ह्यरुन्धत्यादीनामपि तादृशी भर्तृशुश्रूषादिकुलस्त्रीधर्मनिष्ठा यादृशी भवत्या इति भावः॥ आर्य गुरुविधेयेति॥ स्वधर्मस्य प्रजापरिपालनादेः परित्यागेन गुर्वधीनतया कृतस्य वनवासस्य फलमेतदिति भावः। अथवा गुरुतरं विधेयं कर्तव्यं पुत्रोत्पादनादि यस्य स गुरुविधेयः। ऋणत्रयमनपाकृत्येदानीं तव गमनमनुचितमित्यभिप्रायः॥ त्वदायत्तं मे जीवितं हरसीति॥ इह शोकातिशयेन स्वयमेव यज्जीवितस्य निर्गमनं तत्रार्यस्य प्रयोजकत्वमारोप्य प्रलापः क्रियते। इदानीं त्वं मे जीवितं हरसीति यत् तदत्यन्तमुचितमित्यर्थात्सिध्यति। यतो मे जीवितं त्वदायत्तं त्वदधीनमतस्त्वयि जीवत्येव मया जीवितव्यं नान्यथेति भावः। अथ रामो लक्ष्मणस्य भ्रममपनुदन्नाह— लक्ष्मण मुञ्चेति॥ मायाशब्देन मायाशरीरं लक्ष्यते। मायाशरीरहेतुकं दुःखमिति यावत्। अथ लक्ष्मणो राक्षसबुद्धया सरोषमाह— राक्षस पूर्वजमिति॥ अथ रामेण सस्मितं द-

लक्ष्मणः— ( विलोक्य सलज्जमात्मगतं ) नेदं राक्षसा जानन्ति ।

( अधोमुखस्तिष्ठति )

रामः— लक्ष्मण पश्य फलमङ्गुलीयकस्य ।

( मारीचं पादेनोद्धृत्य विक्षिपति । मारीचः स्वरूपमेव गृह्णाति )

लक्ष्मणः— आर्य पश्यामि ।

प्रकृतिं प्रपद्य सहजां तवोद्धृत-
श्चरणेन तामरसपाटलत्विषा ।
नभसो जवेन सह संभृतैर्घनैः
पतति क्षितौ पतनचूर्णिताचलः ॥ ३८ ॥

शूर्पणखा— ( सशोकमात्मगतम् ) हं मणुस्सा खु बळवन्तो ।
हा हदो गुरु मारीओ । ( रोदिति )
हं मनुष्याः खलु बलवन्तः । हा हतो गुरुर्मारीचः ।

लक्ष्मणः— अस्य दर्शनादेव नः प्रत्ययकारणमासीत् अङ्गुलीयकं

---

र्शितमङ्गुलीयकं दृष्ट्वा विस्रब्धस्सानन्दो भूत्वा सलज्जमाह— नेदमिति ॥ यत इदमङ्गुलीयकं राक्षसा न जानन्ति अतोऽस्य मायामयत्वं न घटत इति वाक्यपर्यवसानम् । अथ तपोधनैरभिहितमङ्गुलीयकस्य फलमनुभवितुं मारीचस्य मायामुपशमयितुं चार्येण चरणेनोत्क्षिप्तं तद्देहमवलोक्य सविस्मयमाह— आर्य पश्यामीत्यादिना ॥ तव तामरसपाटलत्विषा चरणेनोद्धृतः । तामरसपाटलत्विषेत्यनेन तामरससमानशोभेन तद्वदतिकोमलेन चरणेन गुरुतरकठिनरक्षोदेहोद्धरणं पश्यतः सौमित्रेर्विस्मयावेशो द्योत्यते । तवेत्यनेन लोकोत्तरपराक्रमस्य तव चरणेन नतु हस्तेन । अनेनोद्धरणे प्रयत्नलाघवं दर्शितम् । उद्धृतः न तु कम्पितो निरस्तो वा । अनेन प्रयत्नसाधनयोरल्पत्वेऽप्यूर्ध्वदेशप्राप्तिलक्षणस्य कार्यस्य महतो दर्शनेन विस्मयातिशयो द्योत्यते । राक्षसदेह इति विशेष्यमध्याहार्यम् । उद्धरणसमकालमेव सहजां प्रकृतिं राक्षसरूपं प्रतिपद्य जवेन मेघमार्गं प्राप्य तत्कालसंभृतैर्घनैर्मेघैः सह जवेन नभसो नभोमार्गात् पतनचूर्णिताचलः पतनेन चूर्णीकृतः पर्वतो येन सः तथा भूत्वा क्षितौ पततीति । प्रत्ययकारणमासीदित्यत्र भूतमात्रे लङ् । अनद्यतनत्वं न विवक्षितम् । अथ राघवस्य बलवत्तमत्वं मायोपशमनसामर्थ्यं चालोच्य भयविषादादिविवशा मातुलदेहविलोकनेन शोकाकुला च भूत्वा

राक्षससंशये रूपव्यक्तिहेतुरिति।

**शूर्पणखा**— को णु खु मे गमणस्स उपाओ। ( विषादं रूपयति )

को नु खलु मे गमनस्योपायः।

**रामः**— देवि किमद्यापि शोकं न मुञ्चसि।

( इति अश्रुसंमार्जनं करोति। शूर्पणखायाः स्वरूपमेवासीत् )

**शूर्पणखा**— हं अवसिदं म्हि। हं अवसितास्मि।

**रामः**— लक्ष्मण किमिदम्।

**लक्ष्मणः**— आर्य इदमिदमस्याः

नीलोत्पलाकृतिमपास्य रथाङ्गरूप-
मापद्यते नयनयुग्ममियं तनुश्च।
आलूननासिकतया विवृतान्तमूलै-
र्दन्तैः सरिद्विमथितेव सितैर्मृणालैः॥ ३९॥

आस्त्वया कृतमिदं व्यसनम्। ( खड्गमुत्कोशयति )

---

गमनोपायं चिन्तयति— को णु खु इति॥ अथ लक्ष्मणो राघवेण कृताश्रुमार्जनाया राक्षस्याः स्वरूपप्राप्तिप्रकारमवलोक्याह— आर्य इदमिदमिति॥ द्विर्वचनं विस्मयावेशं द्योतयति। अस्या इदं भवता प्रमृज्यमानं नयनयुग्मं नीलोत्पलाकृतिं नीलोत्पलवन्मनोहरमाकारमपास्य रथाङ्गस्य रथावयवस्य चक्रस्य रूपमन्धकूपवन्निम्नवृत्तविपुलरूपमाकारमापद्यते प्राप्नोति। नयनयुगमस्याश्रुमार्जनक्षणे साक्षात्स्पृश्यमानत्वात् प्रथमं प्रकृतिभावप्राप्तिदर्शनात्पूर्वं तदभिधानं कृतम्। न केवलं नयनयुगममेव अस्या इयं तनुश्च विमथिता सरिदिव दृश्यते। यथा पूर्वं निर्मलजला नदी मत्तमतङ्गजेन कलुषीक्रियमाणान्यथा भवति तथेत्यर्थः। अपि च यथा विमथिता सरित् इतस्ततो मतङ्गजेन विक्षिप्तैर्मृणालैरुपलक्षिता तथेयमप्यालूननासिकतया। आमूलं लूना नासिका यस्यास्सा तथोक्ता तस्या भावः आलूननासिकता ततो हेतोः विवृतान्तमूलैः विवृतः अन्तोऽग्रं मूलं च येषां तैः। दंष्ट्राभिरुपलक्षिता दृश्यत इत्यर्थः। एवं प्रकृतिमापन्नां तां शूर्पणखां विज्ञाय कुपितो भूत्वाह— आ इति॥ "आस्तु स्यात्कोपपीडयोः" इत्यमरसिंहः। मारीचदुर्व्यापारहेतुकस्यापि व्यसनस्य शूर्पणखैव प्रयोजिकेति मत्वा त्वया कृतमित्युक्तम्। अथ राघवः सर्वस्यास्य मायाप्रयोगस्य सीताविनाशपर्यवसायित्वमाशङ्कमानोऽपि अतिधीरो भूत्वा सौमित्रिभयाच्छर-

शूर्पणखा—( सभयं ) अज्ज सरणं सरणं। ( रामस्य पादयोः पतति )

आर्य शरणं शरणम्।

रामः—( लक्ष्मणं वारयित्वा ) शूर्पणखे कथय परमार्थम्।

अभयं ते दत्तम्।

शूर्पणखा—( आकारसंवरणं कृत्वा कर्णे ) अज्ज एव्वं विअ।

आर्य एवमिव।

रामः—शूर्पणखे तव निष्क्रयार्थं भ्रातुरन्तिकं मम सन्देशमुपनय।

शूर्पणखा—आणवेदु दाणिं साणुक्कोसो भट्टा।

आज्ञापयत्विदानीं सानुक्रोशो भट्टा।

---

णागतां राक्षसीमवलोक्य लक्ष्मणं वारयित्वास्यास्सकाशादेव सर्वं जानामीति निश्चित्य परिपृच्छति— शूर्पणखे इति ॥ परमार्थं कथयेति ॥ मारीचस्य मायामृगत्वावलम्बने तस्यां च दशायां मद्रूपधारणे तव सीतारूपपरिग्रहे च यत्परमार्थभूतं निमित्तं तत्कथय। शासनरूपो विधिर्लोडर्थः। अनेनाकथनेऽपरमार्थकथने च महान्दण्डस्सूचितः। अथ शास्यमानां तामत्यन्तं भयपरवशामालक्ष्याभयदानेन तस्या भयमुपशमयन् वाक्प्रवृत्तेरवकाशमुत्पादयति— अभयमिति ॥ दत्तमित्यनेनास्मासु प्रतिकूलेषु त्रिलोक्यामन्यः कोऽपि तवाभयं दातुं न प्रभवतीति दानात्पूर्वमभयस्यालाभो दर्शितः। अथ राघवो राक्षस्याभिहितं सीताहरणप्रकारमाकर्ण्य तीव्रतमशोककोपावमानविषादानुतापाद्यभिभूतोऽपि सहजैरोजस्सत्त्वगाम्भीर्यधैर्यविनयादिगुणगणैः शोकादीन्निगृह्य विमृश्य करिष्यमाणस्य कर्मणः परिणतिमवधार्य रावणं प्रति तद्विज्ञापनार्थं शूर्पणखामभ्यर्थयते — शूर्पणखे इति ॥ तव भ्रातुरन्तिकं श्रवणगोचरं मम सन्देशमुपनय प्रापय। किमर्थमुपनयामीत्यत आह— निष्क्रयार्थं ऋणविमोचनं निष्क्रयः यतो भवत्यसद्वोचरमपराधविधानात्मकं ऋणं धत्ते अतस्तस्मादात्मानं विमोचयितुमस्मदुक्तं कर्मावश्यमनुष्ठेयमिति। तथा दण्डार्हायाः भवत्या अस्मत्समीपाद्विमुक्तिरेव न दुर्लभा इति भावः। केचित्पुनः लक्ष्मणात्परिरक्षणेनोपकृतवन्तं मां प्रति प्रत्युपकारानुष्ठानात्मकं यदृणं तद्विमोचनार्थमिति व्याचक्षते। अथ निशाचरी गमनोपायदर्शनेन सहर्षमाह—आणवेदु इति ॥ इदानीमेवाज्ञापयतु। इदानीमित्यनेन गमने त्वरा द्योत्यते ॥ सानुक्रोश इति ॥ अन्यस्य क्रोशं पश्यतोऽनन्तरमेव साधुतया तद्भावापत्तिरनुक्रोशस्तेन सहितः। सकरुण इति यावत् ॥ भट्टेति ॥ नीचैर्जनैरुत्तमो जनो नाटके भट्टेत्यभिधातव्यः। अथ

रामः— शृणु

नयनविषये मायासीतां विदर्श्य विलोभनं
मम धृतवता मिथ्या रूपं विधाय च लक्ष्मणम्।
त्वरितगतिना सद्यः सीता त्वया न तु वञ्चिता
नियतविधवाचारा दाराश्चिरं तव वञ्चिताः ॥ ४० ॥

इति।

---

राघवः शृण्विति श्रवणे सादरत्वमाज्ञाप्य सन्दिशति— नयनेति ॥ मम नयनविषये विलोभनं मायासीतां च विदर्श्य मम रूपं धृतवता मिथ्याभूतं लक्ष्मणं च विधाय सद्यस्त्वरितगतिना त्वया सीता न वञ्चिता। तव दारा एव चिरं वञ्चिता इत्यन्वयः। इह विलोभनशब्दो विलोभयतीति व्युत्पत्त्या कर्तृवचनः अत्र प्रकरणबलात् मायामृगे पर्यवस्यति। ततश्च नयनविषये मायामृगं मायासीतां च विदर्श्येत्ययमर्थो लभ्यते। इह पाठक्रमः पूर्वकृतकर्मानुसारेण बोध्यते। सद्यस्त्वरितगतिनेत्यनेन भीरुधर्मं चापलं प्रकटयता त्वया त्रिलोकीविजयजनिता कीर्तिरपहस्तितेति दर्शयति। इह सामान्यतो वञ्चनामुद्दिश्य तस्याः सीताकर्मकत्वं वास्तवं न तु वञ्चितेत्यनेन निषिध्य तस्याः दशग्रीवदारकर्मकत्वं तव दारा वञ्चिता इत्यनेनारोप्य विधीयते। सीतावञ्चनात्मकस्य कारणस्य दारवञ्चनात्मककार्यं प्रति अव्यभिचारित्वावगतिराशुकारित्वावगमश्चारोपफलम्। तथा चायमर्थः सम्पद्यते। अस्मद्वञ्चनापूर्वकं कृतामिमां सीतावञ्चनामात्मवञ्चनापूर्वकं कृतां दारवञ्चनामेव मन्यस्व। अचिरेणैव सीतावञ्चनाहेतुकायास्त्वद्दारवञ्चनाया अवश्यंभावित्वात्। तस्मादियं न सीतावञ्चना। दारवञ्चनास्वरूपं स्फुटीकरोति— नियतविधवाचारा इति ॥ अचिरभाविना त्वद्वधेन नियतः अवश्यंभावी विधवानामाचारो यासां ताः तथोक्ताः। विधवाचारशब्दसामर्थ्यादेव त्वया पुत्रमित्रादिभिस्सह आत्मापि वञ्चित इति गम्यते। इहान्तः सतामपि शोकादीनां राक्षस्यानुपलक्षितत्वात् धीरोदात्तगुणो गाम्भीर्यमहिमा दर्शितः। यथाह— "गाम्भीर्यं यत्प्रभावेन विकारो नोपलक्ष्यते" इति। महान्तमपराधं कृतवत्या राक्षस्या दण्डनाकरणात् क्षमावत्त्वं चावेदितमिति गम्भीराभिधायकत्वेनाविकत्थनत्वं च गम्यते। तथा सीता त्वयेत्यादिना ग्रन्थेनोत्साहस्थायिप्रभवस्य वीररसस्यानुभावा मतिगर्वधृतिप्रहर्षाश्च प्रकाश्यन्ते। इतिशब्दस्य सन्देशमित्यनेन सम्बन्धः। अथ लक्ष्मणोऽपि किञ्चिदूनस्तु तद्गुणैरिति न्यायेन रामदेशीयत्वात् तत्स्वभावमनुविदधत् सन्दिशति— शूर्पणखे इत्यादिना ॥ इदमपि मद्वचो

**लक्ष्मणः**— शूर्पणखे इदमपि मद्वचो ब्रूहि

अपि बन्धुषु नार्थिता वरं
किमुताराातिषु तां दधाम्यहम् ।
युधि रावण मे सबान्धवो
मुनये देहि मुहूर्तदर्शनम् ॥ ४१ ॥

---

ब्रूहीत्यत्र तव निष्क्रयार्थमित्यनुषज्यते । तत्र युद्धं याचमानः सौमित्रिः प्रथमं याचनायाः निकृष्टतमत्वं प्रतिपादयति— **अपीति** ॥ इह जनानां इतरे जनास्त्रेधा भवन्ति बन्धवः उदासीनाः शत्रवश्चेति । तत्र ये यस्याभीष्टं प्राणैरपि सम्पादयितुं सर्वदैवोत्सहन्ते ते तस्य बन्धवः । ततश्च बन्धुषु बन्धून्विषयीकृत्य क्रियमाणा अर्थिता याचकता यद्यपि तेषामत्यन्तमिष्टैव स्यात् न च विफला भवति तथापि अर्थिता न वरमुत्कृष्टं अत्यन्तनिकृष्टैव । याचना हि स्वरूपत एव याचकस्य दैन्यमावहन्ती न केनचिदप्युपाधिना उत्कृष्टा भवतीत्यर्थः । ये यस्यानिष्टं सम्पादयितुं सर्वदैव वाञ्छन्ति ते तस्यारातयः । किमुताराातिषु क्रियमाणार्थिता । तस्या निकृष्टतमत्वमवाच्यमेवेत्यर्थः । अहमिदानीं तामरातिगोचरामत्यन्तनिकृष्टामर्थितां विदधामि । सर्वत्र हि याचनायाः उभयं कारणं याच्यमाने वस्तुनि अभिलाषातिशयः याचनां विना कारणान्तरेण तस्यालाभश्च । इह च याच्यमानं वस्तु युद्धमेव । अतस्तदभिलाषातिशयं द्योतयन्ती याचना नायकस्य वीरत्वमेव पुष्णाति । तथा यदि शत्रुभूतस्य रावणस्यापि युद्धमभीष्टं भवेत् ततो याचनां विना सुलभमेवेति याचनयैव रावणस्य युद्धं प्रत्यानुकूल्याभावश्च द्योत्यते । अथाभ्यर्थयते— **युधीति** ॥ हे रावण यतस्त्वमस्मद्भयाच्चोरवृत्तिमवलम्ब्य सीतामपहृत्य क्वचित्तिरोभूतो वर्तसे अतस्तत्रागत्यास्माभिराहूतोऽपि युद्धार्थमात्मानं न प्रकाशयसीति मन्यामहे । अत एतावन्मात्रमभ्यर्थ्यते— युधि युद्धं निमित्तीकृत्य युद्धार्थमिति यावत् । स बान्धवः भ्रातृपुत्रामात्यबन्धुबान्धवसैन्यादिपरिवृतो भूत्वा ॥ **मुनये** मुनिशब्दस्त्रिषवणस्नानादिमुनिधर्मयोगात् लक्ष्मणे गौणः । अनेन एतावन्तं कालं त्रिषवणस्नानफलमूलाहारादीन्मुनिधर्मान्कुर्वाणेऽनभ्यस्तयुद्धे मयि युद्धं याचमाने बाल्यात्प्रभृत्यभ्यस्तयुद्धस्य त्रिलोकीविजयिनस्तव तददानमत्यन्तमनुचितमिति द्योत्यते । मे इत्येकवचनेन सबान्धवेन रावणेन सह युद्धे सहायान्तरापेक्षा वार्यते । मुहूर्तमित्यनेन सबान्धवस्य तस्य वधे कालदैर्घ्यं निरस्यते । दर्शनमित्यनेनादर्शनमेव त्वद्वधे प्रतिबन्धः दृष्टस्य तव जीवनं दुर्लभमेवेति द्योत्यते । भ्रातुर्मे कलहः उत्सवोऽत्यन्तं प्रीतिकर इत्यर्थः । अतो न याचितव्यमेवेति भावः ।

शूर्पणखा— भादुणो मे कलहो उच्छवो।

भ्रातुर्मे कलहः उत्सवः।

लक्ष्मणः— आः अपेहि।

शूर्पणखा— एसा खं उव्वदिदंह्मि। (निष्क्रान्ता)

एषा खमुत्पतितास्मि।

रामः— लक्ष्मण वञ्चिता वयम्।

कनकहरिणः क्वेयं भूमिः क्व चेत्यविचारयन्
अपि निशितधी रामो रामावचः प्रतिपन्नवान्।
इति कृतधियामासं हास्यः कृतं कृतचिन्तया
प्रभवति कुतोऽनर्थः प्रज्ञा न चेदपथोन्मुखी॥ ४२॥

---

अथ शूर्पणखायां गतायां सहजानोजस्सत्त्वधैर्यविनयगाम्भीर्यादीन् गुणानुल्लङ्घ्य विजृम्भमाणैः शोकावमानानुतापविषादादिभिरभिभूतो भूत्वाह— लक्ष्मण वञ्चिता वयमिति॥ अथात्मना मायामृगलोभेन कृतं सीतापरित्यागमनुस्मृत्य तन्निमित्तस्यायशसो दुष्परिहरत्वमालोच्य महान्तमनुतापमुपगम्य सविषादमाह— कनकेत्यादिना॥ अहं कृतधियामिति हास्यः आसम्॥ कृता अर्थनीत्यादि शास्त्रार्थावधारणसंस्कृता धीर्येषां ते कृतधियः। बहुवचनेन तेषां स्वैरव्यवहारार्थं संभूयावस्थानं यदा भवति तदेति दर्शयति। तत्र स्निग्धानां कृतधियामेतच्छ्रवणे व्यसनमेव समुदीयादित्यर्थादुदासीनानामिति गम्यते। इति हास्यो भविष्यामीति वक्तव्ये यदिदं भविष्यति हास्यत्वे लङा भूतत्वमारोपितं तदतीते वस्तुनीव निस्सन्दिग्धत्वमप्रतीकार्यत्वं च द्योतयति। अनेन सीताहरणकृतमयशः इदानीमेव दशग्रीवं हत्वा सीतायाः प्रत्याहरणेन प्रमार्ष्टुं शक्त एवास्मि। इदं त्वस्मदपनयहेतुकं हास्यतारूपमयशोऽद्यप्रभृति निष्प्रतिबन्धमाकल्पं जागर्त्येवेत्यनुतापातिशयो व्यज्यते। हास्यताप्रकारमेव दर्शयति— रामो निशितधीरपि कनकहरिणः क्व इयं भूमिः क्व चेत्यविचारयन्नेव रामावचः प्रतिपन्नवानिति॥ निशिता युक्तायुक्तविचारपटीयसी धीर्यस्य सः निशितधीः। अपिशब्दो विरोधे। कनकमयानां मृगाणां हेमाद्रिकूटादौ दिव्यप्रदेश एव संभवात् मनुष्यसञ्चारक्षमे प्रदेशे कुत्रापि न ते सन्निदधते। अतो न परमार्थमृगेणानेन भवितव्यम्। विशेषतः पुनरियं भूमिः मायाविभिर्निशाचरैरधिष्ठिता। अतः केनचिन्मायारूपेण राक्षसेन भवितव्यमितीदृशं स्थूलधियामपि सम्भविनं विचारमकुर्वन्नेव। अश्राद्धभोजी ब्राह्मण इतिवदविचार-

लक्ष्मणः— आर्य अविलम्बितमिदानीं यत्नः कर्तव्यः।

रामः— बाढं गच्छाग्रतः।

लक्ष्मणः— यदाज्ञापयत्यार्यः। इत इतः।

(निष्क्रान्तौ)

इति शक्तिभद्रविरचिते चूडामणिनाटके तृतीयोऽङ्कः॥

---

यन्नित्यत्र प्रसज्यप्रतिषेधे नञ्। इतिशब्दस्य प्रकृत्यर्थेन विचारेण संबन्धः नञः प्रत्ययार्थेन करणेन। तथा चेति विचारमकुर्वन्नित्ययमर्थो लभ्यते। समासेऽप्यस्यार्थस्य प्रतीयमानत्वात्सामर्थ्यमस्त्येव। विग्रहवाक्यार्थाभिधानशक्तिर्हि सामर्थ्यमिति शाब्दिका अभिदधति। इति न केवलमीदृशो विचारो न जातः किन्तु रामायास्सीताया वचः मायामृगग्रहणाभ्यर्थनापरं वचनं प्रतिपन्नवान् अनुरागचपलो भूत्वा गुरुतरत्वेनाङ्गीकृतवान्। प्रियावचनं प्रमाणीकृत्य मायामृगग्रहणार्थं प्रवृत्तः साधु वञ्चितोऽभूदिति तात्पर्यार्थः। प्रतिपत्तिशब्दः प्रवृत्तिमप्यभिदधाति। यथाह— "प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये प्रतिभाज्ञानयोरपि।" इति। एवमात्मापनयहेतुकत्वं सीताहरणस्यालोच्य कृतं महान्तमनुतापं मतिमत्तया विमृश्य निष्फलमुत्साहविरोधिनं चावधार्य सत्त्वबलेन तन्नियच्छति— कृतमिति॥ कृतचिन्तया चिन्ताशब्देन तद्विशेषोऽनुतापो लक्ष्यते। कृतं कर्मोद्दिश्यानुतापेन कृतमलम्। निषेधे कृतमित्यव्ययम्। करिष्यमाणं कर्मोद्दिश्य चिन्तैव कार्येत्युत्साहसम्पन्नत्वमनेन द्योत्यते। इह व्यभिचारिभिर्मतिचिन्तादिभिरुद्दीपितस्य स्थायिनः उत्साहस्य वीररसतया परिणतिर्दर्शितेति वेदितव्यम्। अथ मतिमत्तमत्वेन भूयोऽपि विमृश्य सीताहरणात्मकस्यानर्थस्य दैवप्रयुक्तत्वमवधार्य आत्मनो मतिवैपरीत्यं च तत्कृतं निश्चित्य स्वस्यापराधाभावं मन्यमानोऽस्थान एव मयानुतापः कृत इति कृतमनुतापं प्रति अनुतापमवलम्बमानोऽनुतापस्यात्मनि वासनारूपतयापि सद्भावं परिहरति— प्रभवतीति॥ प्रज्ञा अपथोन्मुखी न चेत् कुतोऽनर्थः प्रभवति। अपथशब्देनानिष्टोपायो लक्ष्यते। प्रज्ञायां तदौन्मुख्यं प्रज्ञाकर्तृका मनोवाक्कर्मणामनिष्टोपाये प्रेरणा। अनर्थश्चानिष्टप्राप्तिः। यत्र यत्रानर्थस्तत्र तत्र प्रज्ञायाः अपथोन्मुखत्वं इत्यनर्थस्य प्रज्ञाया अपथोन्मुखत्वं व्यापकम्। ततश्च यस्य विधिरनर्थमापादयितुमिच्छति तस्य तदर्थं प्रथमं प्रज्ञावैपरीत्यं जनयति। अतो मम प्रज्ञावैपरीत्यं विधिकृतमेवेत्यनुतापलेशोऽपि कर्तुं न समुचितः। ततश्चास्थान एव मयानुतापः कृत इति। अथ लक्ष्मणोऽपि सहजैरोज-

स्सत्त्वादिभिः शोकावमानविषादादीन्विनियम्य धीरो भूत्वा सीतान्वेषणे दशग्रीवनिग्रहे च महान्तमध्यवसायमङ्गीकृत्यार्यस्यापि तदध्यवसायं द्रढयति—"तदिति ॥ यतोऽस्माकं दशग्रीवेण सीतापहृतेति शत्रुविशेषावधारणं सञ्जातं तत् ततो हेतोः । अविदिते शत्रुविशेषे यत्नः कृतोऽपि निरुद्देशत्वान्निष्फल एव स्यादिति भावः । इदानीमिममेव क्षणमारभ्य दशग्रीवोन्मूलने सीतायाः प्रत्याहरणे च यत्नः कर्तव्यः । अविलम्बितमित्यनेन प्रारब्धस्य यत्नस्य निरन्तरानुवर्तनं विधीयते । विलम्बो नाम कर्मण उचितकालाननुष्ठानम् । इह प्रारब्धस्य यत्नस्य आयासकृतया तन्द्र्या वा असाध्यत्वबुद्धिकृतयोपेक्षया वा कर्मान्तरानुष्ठानेन वा यदन्तरा अकरणं तल्लक्ष्यते । तद्यथा न भवति तथा यत्नः कर्तव्य इत्यर्थः । बाढं गच्छाग्रत इत्यनेन यत्नस्य प्रारम्भो दर्शितः । यत्नप्रकारस्तु पञ्चमेऽङ्के वालिनं हत्वेत्यत्र स्फुटीभविष्यति ।

॥ इत्याश्चर्यचूडामणिनाटकविवृतौ तृतीयोऽङ्कः ॥

## ॥ अथ चतुर्थोऽङ्कः ॥

( ततः प्रविशति रावणो रथेन सीतया सूतेन च )

**रावणः**— लक्ष्मण तूर्णं चोदयाश्वान् ।

त्यजतु भरतो भारं विश्वम्भराविषयं क्षणा-
न्मुदितमनसः पश्यन्त्यो नो भवन्तु च मातरः।
इयमपि पुरीमासाद्य स्वां निशाचरगोचरे
चिरमगवने जातं दुःखं जहातु तपस्विनी ॥ १ ॥

---

आश्चर्यचूडामणिनाटकेऽस्मिन् अङ्कस्तृतीयो विवृतः कथञ्चित् ।
व्याख्यास्यतेऽस्माभिरनन्यचित्तैरङ्कस्तुरीयोऽपि गुरुप्रसादात् ॥

अथ तृतीयेऽङ्के सावशेषतयोपवर्णितं प्रतिनायकेतिवृत्तमस्मिन्नङ्केऽभिधीयते । अत एव विष्कम्भादिचतुष्टयमनादृत्य "अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः ।" इति लक्षितमङ्कावतारमाश्रित्याङ्क एवारभ्यते । अथ दशग्रीवो दूरीकृते राघवे समुद्भूतमदनचापलस्सन् मनोरथपरिकल्पितलङ्काप्रवेशसमनन्तरभाविविविधजानकीसम्भोगाकृष्टमानसतया लङ्काप्रवेशं प्रति महतीं त्वरामवलम्ब्य सूतं वेगेनाश्वांश्चोदयितुं नियुङ्क्ते— **लक्ष्मणेति** ॥ अथ सीताप्रत्ययार्थं क्षिप्रगमने मिथ्याभूतानि निमित्तान्तराण्याह— **त्यजत्विति** ॥ भरतः क्षणात् क्षणकालसिद्धेनास्मत्पुरप्रवेशेन विश्वम्भराविषयं भारम् । विश्वं स्थावरजङ्गमात्मकं भावजातं बिभर्तीति विश्वम्भरा । अनेन तस्या दुर्वहत्वं द्योत्यते । सैव विषयः कर्म यस्य सः विश्वम्भराविषयः भारो भरणं ततश्च विश्वम्भराभरणमित्यर्थः सम्पद्यते । पूर्वमस्मन्निर्बन्धात् कृतं विश्वम्भराभरणमपि त्यजतु । न केवलं परचक्रभयमेवेत्यर्थः ॥ नः पश्यन्त्य इति ॥ हेतौ शता । अस्मद्दर्शनान्मातरो मुदितमनसो भवन्त्वित्यर्थः । मातृदर्शनान्मुदितमनसो नः पश्यन्त्य इत्यपि योज्यम् ॥ **तपस्विनीयं सीतापि स्वां पुरीमासाद्य निशाचरगोचरेऽगवने चिरं जातं दुःखं जहातु** ॥ तपस्विनीत्यनेन तपोऽर्थैरुपवासादिभिः शोचनीयता दर्शिता । इयमित्यनेन सैव शोचनीयावस्था प्रत्यक्षतया हस्ताभिनयेन निर्दिश्यते । अपिशब्दः समुच्चये । निशाचरगोचरे निशाचराणामास्पदे सुवेलगिरौ निवेशितां लङ्कापुरीमासाद्येत्ययमर्थो रावणाभिप्रायानुसारेण गम्यते । अन्यत्र निशाचरगोचरेऽगवने अगाश्च वनानि चागवनम् । सर्वो द्वन्द्वो विभाषया एकवद्भवतीति एकवद्भावः । तेषु चिरं चिर-

सीता— अज्जउत्त मा मा एव्वं । तपोवणे एव्व रमदे मे बुद्धी ।
आर्यपुत्र मा मैवम् । तपोवन एव रमते मे बुद्धिः ।

सूतः— ( आत्मगतम् ) शान्तमुदारं चास्याश्चेतः । न वञ्चनामर्हत्येषा ।

सीता— ( आत्मगतम् ) किं णु खु एदं पिअं च सुणोमि हिअअं च सन्तप्पदि ।
किन्नु खल्विदं प्रियं च शृणोमि हृदयं च सन्तपति ।

रावणः— ( कामावेशं निरूप्य ) केन खलु विधिना मनुष्यस्त्रियमन्तरेण मन्मथापूर्विकां त्यजामि ।

सूतः— ( रावणं निरीक्ष्य आत्मगतम् ) अहो नु खलु कामो निर्म-

---

कालनिवासेन जातं दुःखं जहातु दुःखमपहाय यथाकामं सुखमनुभवत्वित्यर्थः ॥ **आर्यपुत्र मा मैवमिति** ॥ एतावन्तं कालं वनवासेन दुःखलेशोऽपि नाभूदित्यर्थः । अतः परमपि तपोवनवास एव ममाभिरुचिरित्याह— **तपोवण इति** ॥ **शान्तमिति** ॥ शान्तत्वं चेतसः सत्त्वगुणशालित्वं औदार्यं निरुपाधिकस्सन्तोषः यत एवंभूतमस्याश्चेतः अत एषा न वञ्चनामर्हति वञ्चनानर्हाया अस्याः कृतेयं वञ्चना न शुभोदर्का भविष्यतीति भावः । अथ जानकी रघुनाथेन वियुक्ता रक्षोवशमुपगता वर्तमानामेव महतीं विपदं सूचयता दैवेनोत्पादितं हृदयसन्तापमालक्ष्य तत्कारणमपश्यन्ती विचिन्तयति— **किं न्विति** ॥ **किन्नु खल्विदं प्रियं च शृणोमि हृदयं च सन्तपतीति** ॥ उभयत्र प्रयुक्तश्चशब्दो वाक्यार्थयोः परस्पराविरोधं द्योतयति । यथा स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमित्यत्र ॥ **कामावेशं निरूप्य** अभिनीयेत्यर्थः । अहं केन विधिना स्पर्शनालिङ्गनादीनामन्यतमेन केन कर्मणा । **मनुष्यस्त्रियमन्तरेणेति** ॥ मनुष्यस्त्रियमिति जातिप्रधानतया सीताया अभिधानं जातितोऽप्यभिलषण्यानुभूतगोचरत्वमावेदयति । अनुभूतगोचरादननुभूतगोचरोऽभिलाषः प्रकृष्टं सम्भ्रमं जनयतीति संभोगत्वराजनितं चापलमनेन द्योत्यते । मनुष्यस्त्रियमन्तरेण विषयीकृत्योत्पन्नामिमां मन्मथापूर्विकां कामस्यापूर्वां वृत्तिमुत्कण्ठामिति यावत् । त्यजामि इदानीमेवोपशमयामि । भोगविनाश्यत्वादुत्कण्ठायाः केन विधिनेत्युपभोगस्य करणत्वमुक्तम् । इह चापलाख्यो धीरोद्धतगुणो दर्शितः । अथ सूतस्स्वामिनो जृम्भणदीर्घश्वासादिभिरनुभावैरन्तर्गतं महन्मदनचापलमालक्ष्य सविषादमाह— **अहो इति** ॥ अहो नु खल्वित्यव्ययसमुदायो विषादे ।

र्यादः। ततः खलु

अपि नियमिनो दारान्साधूनधीरमवेक्षते
पुलकसुहृदा भूयो बाहुद्वयेन विजृम्भते।
श्वसिति मुहुरत्युष्णं दन्तच्छदेन हतत्विषा
क्रिमपि किमपि व्याजेनायं ब्रवीति करोति च॥ २॥

सीता—(आत्मगतं) किं णु खु अवरो विअ दीसइ आआरेण अज्जउत्तो।

किन्तु खल्वपर इव दृश्यते आकारेण आर्यपुत्रः।

रावणः—(आत्मगतम्) भवत्वनया तावत्स्पर्शसुखमनुभवामि। अहो नु खलु बलवानसंस्तवः। तथा हि।

---

निर्गता मर्यादा विधिप्रतिषेधकृता व्यवस्था यस्मात्स निर्मर्यादः। कामस्य निर्मर्यादत्वमुपपादयति— अपीति॥ अयं नियमिनो दारानधीरमवेक्षते। अवैगुण्येन विहिते काले स्वधर्मानुष्ठानं नियमस्तेन नित्ययोगान्नियमी। इह प्रकरणबलात् रामे पर्यवस्यति। अपि रघुपतेर्दारानित्यर्थेऽपि सुकरे सन्दर्भे नियमिन इति रामस्याभिधानं तस्य नियमैर्नित्ययोगं द्योतयितुं कृतम्। तेन तद्दारापेक्षणस्यात्यन्तमशुभत्वमावेद्यते। साधुशब्देन पातिव्रत्यमभिधीयते। तथा चाह— "सती साध्वी पतिव्रता" इति। दारशब्दस्य नियमेन पुंल्लिङ्गत्वात् बहुवचनान्तत्वाच्च तद्विशेषणस्य साधुशब्दस्यापि तथात्वम्। धीरशब्दो धैर्यगुणवाची। अधीरशब्दोऽधर्मशब्दवत्तद्विरोधिनि चापले वर्तते। गुणवाचिनः शब्दाः गुणिन्यपि वर्तन्त इति अधीरमित्यवेक्षणक्रियाविशेषणम्। तथा च सचापलमवेक्षते इत्ययमर्थस्सम्पद्यते। अवेक्षणसमये अयं कथंभूत इत्यत आह— पुलकेति॥ पुलकश्चासौ सुहृच्चेति पुलकसुहृत्। पुलको रोमाञ्चः। तस्य सुहृत्त्वमवेक्षणसमये साहचर्यादारोप्यते। जानकीदर्शनानन्दजनितेन रोमाञ्चेनोपलक्षित इत्यर्थः। अथ तद्दर्शनानन्तरमालिङ्गनाद्ययोगजनितं विप्रलम्भप्रकारमाह— भूय इत्यादिना॥ अयं भूयो भूयः प्रसारितेन बाहुद्वयेन विजृम्भते। अयं मुहुर्मुहुरत्युष्णं श्वसिति तदा कथंभूत इत्यत आह—दन्तच्छदेनेति॥ अत्युष्णनिःश्वासमारुतसम्पर्कात् हता नष्टा त्विट् यस्य तेन दन्तच्छदेन सहित इत्यर्थः। अयं किमपि किमप्यस्पष्टाक्षरं व्याजेन ब्रवीति यत्किञ्चित्करोति। चपलानां कामिनां स्वभावोऽयम्। अथ केन विधिनेति विचारितं कर्म निर्धारयति— भवत्विति॥ अनयेति करणे तृतीया॥ तावत् प्रथममनया करणभूतया स्पर्शसुखमनुभवामि पश्चादालिङ्गनादिसुखमिति

अपि वासववारणस्य वक्त्रे
मदकल्माषितकर्णचामराग्रे ।
अनिवारितविक्रमः करो मे
दयितां स्प्रष्टुमलं न तापसस्य ॥ ३ ॥

सीता—( आत्मगतम् ) किं णु खु रक्खसदंसणादो सहस्सगुणो विअ मे संदावो ।

किं नु खलु राक्षसदर्शनात्सहस्रगुण इव मे सन्तापः ।

रावणः—( आत्मगतं ) भवत्वेवं तावत् करिष्ये । ( प्रकाशं ) देवि

---

भावः । अथ सीता आत्मप्रियेऽदृष्टपूर्वं मदनावेशकृतं जाड्यातिशयमालक्ष्य साशङ्कमाह— किं णु खु इति ॥ आकारो नेत्रवक्त्रादीनां चपलो व्यापारः । अथ दशग्रीवः स्पर्शनार्थमुत्तिष्ठमानोऽपि सीतायाः पातिव्रत्यमहिम्ना सञ्जातेन साध्वसेन स्तब्धव्यापारो भूत्वा सनिर्वेदमाह—अहो इति ॥ असंस्तवो अपरिचयः तेन तत्कार्यं साध्वसं लक्ष्यते ॥ बलवानिति ॥ प्रगल्भतावैदग्धीप्रभृतिभ्यो गुणेभ्योऽपरिचयकृतं साध्वसं बलवत्तमम् । अहो असंस्तवस्य बलवत्त्वमतिकष्टमित्यर्थः । तदेव दर्शयति— अपीति ॥ यतो मे करस्तापसस्य दयितां स्प्रष्टुं नालम् अतो बलवानसंस्तव इति योज्यम् । करणभूतस्यापि करस्य स्पर्शनं प्रति कर्तृत्वाभिधानमात्मना व्यापारितोऽपि करः स्पर्शने न शक्तो भवतीति द्योतयितुं कृतम् । न राघवस्येत्यपि सुकरे सन्दर्भे क्षत्रियत्वहेतुकस्य पराक्रमादेरभावं दर्शयितुं तापसस्येत्युक्तम् । तेन तद्भयाभावो द्योत्यते । मे कर इत्यनेनैव सूचितं करस्यान्यत्र अप्रतिहतत्वं दर्शयति— अपीति ॥ वासववारणस्यापि वक्त्रेऽनिवारितविक्रमः अभिमुखागतान् शत्रून् वारयतीति वारणः स न योगरूढया गजे वर्तते । अनेन गजानामश्वादिभ्यः शत्रुनिवारणसामर्थ्यातिशयो द्योत्यते । विशेषतः पुनर्गजानां प्रधानभूतस्य वासवेन युद्धार्थं सञ्चोदितस्यैरावतस्य परिपन्थिनिवारणसामर्थ्यमुत्कृष्टतमं भवतीति वासववारणस्येत्यनेन द्योत्यते । एवंभूतेनैरावतेनापि मदीयकरविक्रमो न निवारितः । मदकल्माषितकर्णचामराग्रे ॥ मदाम्भसा कल्माषितं शबलीकृतं कर्णाग्रं चामराग्रं च यस्य तत् तथोक्तम् । अनेन मदावस्थाजनितमधृष्यत्वं दर्शितम् । किण्णु खु इत्यादिग्रन्थस्य हिअअं चेत्यत्र कृतमेव व्याख्यानं द्रष्टव्यम् । अथ रावणः सीतायाः स्पर्शनं प्रति आनुकूल्यं सम्पादयितुमुपायं निश्चिनोति— भवत्विति ॥ करिष्य इति ॥ अत्र प्रकथने कृञ आत्मनेपदम् । स्मर्यते च "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" इति । हे देवि तव

नियमाभिषेकजटिलं तपोवने
वनवल्लरीकुसुममात्रमण्डनम् ।
रचयामि देवि रथयानवेगतः
श्लथितं शिरोरुहनिबन्धनं तव ॥ ४ ॥

सीता— ( सलज्जं ) णं कुमारो आसण्णो । ( इति स्वहस्तेन रावण-
हस्तं निवारयति ) ननु कुमार आसन्नः ।

रावणः— ( स्वरूपमेव गृह्णाति )

सीता— ( विलोक्य ) हं ण खु अज्जउत्तो । ( भयं नाटयति )
हं न खल्वार्यपुत्रः !

रावणः— देवि न भेतव्यं न भेतव्यम् । नन्वहं रामः ।

सीता— संतोसि । शान्तोऽसि ।

रावणः— लक्ष्मण किमिदम् ।

---

शिरोरुहनिबन्धनं केशकलापमहं रचयामि । अङ्गुलीभिः प्रसार्य संयमयामि ॥ नियमाभिषेकजटिलम् ॥ नियम्यत इति नियमः । श्रुतिस्मृतिविहितं कर्म तदर्थेन स्नानेन जटिलम् । प्रसारणापेक्षा अनेन केशकलापस्य दर्शिता । रथयानवेगतः श्लथितमित्यनेन तस्य संयमनापेक्षां दर्शयति । तपोवने वनवल्लरी-कुसुममात्रमण्डनमित्यनेन प्रणयविवशस्य दशग्रीवस्य पारिजातकुसुमादि-भिः संस्कृतं केशकलापमलङ्कर्तुमौत्सुक्यं द्योत्यते । अथ स्पर्शननिषेधसमये सीताया हस्तस्पर्शे बलाज्जाते चूडामणिप्रभावात् संभूतामात्मनः स्वरूपप्राप्तिमजा-नानोऽपि सीताया आत्मदर्शनादुत्पन्नं भयं अरामत्वशङ्काहेतुकं मत्वा तदाश्वास-नपुरस्सरमात्मनो रामत्वं बोधयति— देवीत्यादिना ॥ ननुरवधारणे । अहं राम एवेत्यर्थः ॥ शान्तोऽसीति ॥ शान्तशब्देन चेष्टेन्द्रियप्राणादीनां शमनम-भिधीयते । यथा श्रीमद्भागवते-"तच्छ्रुत्वा प्रीतमनसः इन्द्रप्रस्थनिवासिनः । मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥" इति । वर्तमानार्थत्वेऽस्य वाक्यस्या-पर्यवसानाच्छापरूपत्वमाश्रीयते ॥ वाङ्मात्रेणेति ॥ मात्रचाकारो व्याव-र्त्यते । तमेव वचनस्याकारेण विसंवादं दर्शयति— तरुणेति ॥ पूर्वं रामाकारं यद्वपुः तत्सहसा हेतुना विना जातिबन्धं राक्षसत्वजातिसम्बद्धं प्रकाशित-राक्षसाकारं जायत इति यावत् । भीमं चैतत्कान्तं चेति भीमकान्तम् । एतदेवोपपादयति— तरुणहरिणलक्ष्महेपिदंष्ट्राकरालम् ॥ बालचन्द्र-

सूतः— आयुष्मन् किं वाङ्मात्रेण ।

तरुणहरिणलक्ष्मह्रेपिदंष्ट्राकरालं
हिमगिरितटवर्ष्म स्निग्धजीमूतनीलम् ।
प्रतिदिशमुपलक्ष्यैराननैर्भीमकान्तं
वपुरिह सहसा ते जायते जातिबन्धम् ॥ ५ ॥

रावणः— ( आत्मानं विलोक्य ) कथमहमित्थंभूतोऽस्मि । देवि न भेतव्यं न भेतव्यम् ।

नाहं बन्धुरगात्रि भीतिविषयस्ते किं मुधा खिद्यसे
त्रातुं त्वां ससुरासुरे त्रिभुवने के वा मनः कुर्वते ।
मय्यस्मिन् परिपन्थिनि प्रकटितक्रोधान्धदिग्वारण-
स्थूलव्यायतदन्तकोटिकुलिशव्यालीढवक्षस्स्थले ॥ ६ ॥

---

क्ष्यापि लज्जामावहन्तीभिर्दंष्ट्राभिः क्रूरदर्शनम् । दंष्ट्रा स्वरूपेण निरूप्यमाणा वपुषो भीमत्वे हेतुः । बालचन्द्राकारतया निरूप्यमाणा कान्तत्वे निमित्तम् । हिमगिरितटवत् वर्ष्म स्थौल्यं यस्य । "वर्ष्म देहप्रमाणयोः" इत्यमरः ॥ स्निग्धजीमूतनीलमित्यत्र स्निग्धत्वं कान्तत्वे हेतुः । जीमूतनीलत्वं भीमत्वे हेतुः । प्रतिदिशमुपलक्ष्यैराननैः ॥ सहितमित्यध्याहार्यम् । अथ प्रकृतिमापन्नमात्मानं विलोक्याह— कथमिति ॥ अथात्मस्वरूपदर्शनं भयहेतुमाशङ्कयाश्वासयति— देवीति ॥ न भेतव्यमित्यत्र मत्तस्त्वयेत्यध्याहार्यम् । कुतो न भेतव्यमित्यत आह— नाहमिति ॥ बन्धुरगात्रि अहं ते न भीतिविषयः ॥ बन्धुरं सुन्दरं गात्रं यस्यास्सा बन्धुरगात्री । इह कामिनामनुरूपेण सम्बोधनेनात्मनः सीतां प्रति प्रातिकूल्यं निरस्यते । अहमित्यनेनात्मनः स्मरवैवश्यं दर्शयता भीतिकरत्वाभावः स्फुटीक्रियते । भीतिकरस्यैव भीतिविषयत्वमिति भीतिविषयशब्देन तन्निमित्तं भीतिकरत्वं लक्ष्यते । एवं मदनविवशस्त्वत्कारुण्यायत्तजीवितः कथं ते भीतिकरः स्यामित्यर्थः । यतो न भीतिकरोऽहं अतो न भेतव्यमिति सम्बन्धः । एवमात्मनो भयहेतुत्वं निरस्यानुग्रहोन्मुखत्वं दर्शयति— किमिति ॥ किं खिद्यस इत्येकं वाक्यम् । मुधेति वाक्यान्तरम् । किं केन हेतुना खिद्यसे ! न केनापि हेतुना खेदः कार्यः । यतोऽस्मत्परिगृहीताया भवत्यास्स्वर्गानुभवोऽपि करस्थ एवेति भावः । चिरपरिचितस्वजनवियोगनिबन्धनोऽपि खेदो निष्फल-

सीता— अज्जउत्त परित्ताअहि परित्ताअहि, सोमित्ति परित्ताअहि परित्ताअहि मं ।

आर्यपुत्र परित्रायस्व परित्रायस्व, सौमित्रे परित्रायस्व परित्रायस्व माम् ।

सूतः— किमनेन । स्वरूपमेव गृह्णामि । ( तथा करोति )

सीता— हं अअं वि ण कुमारो । ( मुक्तकण्ठं रोदिति ) हा अज्जउत्त, हा कुमार, हा मं रक्ख रक्खसहत्थादो ।

हं अयमपि न कुमारः । हा आर्यपुत्र, हा कुमार, हा मां रक्ष राक्षसहस्तात् ।

( नेपथ्ये ) अयमयमागच्छामि ।

सूतः— आयुष्मन् पश्य पश्य

तुण्डेनाङ्कुशसन्निभेन कनकस्तम्भश्रिया ग्रीवया
दृष्ट्या विद्रुमभङ्गपाटलरुचा गृध्रोऽयमाक्रामति ।

---

त्वान्न कर्तव्य इत्याह—मुधेति ॥ अत्रापि खिद्यस इति सम्बध्यते । निष्फलत्वमेव समर्थयते— त्रातुमिति ॥ अस्मिन्मयि परिपन्थिनि त्रिभुवने के वा त्वां त्रातुं मनः कुर्वते । मयीत्येकवचनेनात्मनो बहुभिस्सह विक्रमणे बन्धुसैन्यादिनिरपेक्षत्वं द्योत्यते । अस्मिन्नित्यनेन युद्धसन्नाहसमयभाविनं भयङ्करमाकारं सीतायै दर्शयति । ससुरासुर इत्यनेन मिथो नैसर्गिकवैरभाजोऽपि संप्रत्यमृतमथन इव सुरासुराः संहता भवन्तु नाम तथापि न त्वां त्रातुं शक्नुवन्ति किं पुनर्मनुजा इति दर्शयति । प्रकटितेन क्रोधेनान्धानां दिग्वारणानां स्थूलैर्व्यायतैश्च दन्तकोटिभिरेव कुलिशैः व्यालीढं वक्षस्स्थलं यस्य स तथोक्तः । अथ सूतः प्रकृतिमापन्नः सीताया हा अज्जउत्तेत्यादिविलापवचनमाकर्णयतो जटायुषः अयमयमागच्छामीति वचनानुसारेण दत्तदृष्टिस्तं पक्षीन्द्रं विप्रतिपित्सुमालक्ष्य स्वामिने तं दर्शयति— आयुष्मन्नित्यादिना ॥ अयं गृध्रः आक्रामति अस्मत्प्रयाणं निरुरुत्सुः क्रुद्धो भूत्वाभिमुख्येनागच्छति अतस्सम्यगवहितेन त्वया भवितव्यमिति तात्पर्यम् । अङ्कुशसन्निभेन तुण्डेन कनकस्तम्भश्रिया ग्रीवया च सहितः । अनेन निसर्गतः क्रौर्यं दर्शितम् । विद्रुमभङ्गपाटलरुचा दृष्ट्या च सहितः । अत्रैकत्वमविवक्षितम् । विद्रुमपाटलशोभत्वं नयनयोर्नैसर्गिकम् । विद्रुमभङ्गपाटलत्वं तु क्रोधस्यानुभाव इति दर्शयितुं विद्रुमभङ्गस्यो-

संसर्गं सहसा व्रजन्ति विटपैरुद्भ्रान्तपुष्पाङ्कुरै-
राधूताः पथि यस्य पक्षपवनैरायामिनः पादपाः ॥ ७ ॥

**सीता**— हा का मे गई किं मे सरणं ।
हा का मे गतिः किं मे शरणम् ।

( नेपथ्ये )

शरणमस्मि जटायुरहं सखा
दशरथस्य रथस्तव तिष्ठतु ।
अविदुषामपराधमहं सहे
विसृज रावण वीरमनुव्रताम् ॥ ८ ॥

**रावणः**— ( प्रहस्य ) सहते किलायं ममापराधं पक्षी । सूत प्रतो-

---

पमानत्वमाश्रितम् । अथ तच्चेष्टाया अपि क्रौर्यं दर्शयति— संसर्गमिति ॥ यस्य पक्षपवनैराधूताः अत एवोद्भ्रान्तपुष्पाङ्कुरैर्विटपैस्सहिताः पादपाः सहसा संसर्गं व्रजन्तीत्यन्वयः । अथ जटायुः किं मे शरणमिति विलापमाकर्ण्य सीतामाश्वासयति— शरणमिति ॥ अहं जटायुः शरणं रक्षितास्मि । जटायुरित्यनेन मध्येमार्गं पूर्वं रामेण कृतं सख्यमनुस्मारयन्नात्मनो रक्षितृत्वस्यावश्यकत्वमावेदयति— दशरथस्य सखेत्यनेन ॥ यदि रक्षितुं समर्थोऽस्मि ततो दशरथस्य सख्यं तत्पुत्रभार्यापरिरक्षणादविकलमेव लोके जागर्ति यदि यथाशक्त्युत्सहमानोऽपि परिरक्षितुं न शक्नोमि तर्हि स्वर्गगतं दशरथमनुयास्यामि एवमपि परिपुष्कलमेव दशरथस्य सख्यं जगति प्रकाशयिष्यामीति रक्षणाध्यवसायस्य प्राणपरित्यागपर्यन्तत्वं सूच्यते । एवं सीतामाश्वास्य रावणं निवारयति— रथ इत्यादिना ॥ हे रावण तव रथस्तिष्ठतु चोरवृत्तिमवलम्ब्य रामस्य धर्मपत्नीं मा नैषीरिति भावः । वीरमनुव्रतामिति विशेषणबलात् प्रकरणबलाच्च सीतामिति विशेष्यं सिध्यति । सीतां विसृज विसृज्य शीघ्रमपयाहि । अविसर्जने रावणस्य महान्तमनर्थं सूचयन्नाह— वीरमिति ॥ वीरमित्यत्र विशेष्यानुपादानं त्रिलोक्यामन्यस्य वीरस्याभावं दर्शयति । जगदेकवीरं रामं अनुव्रतां सर्वात्मनानुगतामित्यर्थः । वीरमित्यनेन प्रतिक्रियाविधानसामर्थ्यं तदध्यवसाययोगं च दर्शयति । अविदुषामित्यत्र त्वादृशानामिति विशेष्यमध्याहार्यम् । अविदुषामिति बहुवचनेन राक्षसजातीयानामेवाज्ञानं नैसर्गिकमिति दर्शयति । तदयमर्थः । यतो निसर्गसिद्धाज्ञानास्त्वादृशाः अतोऽहमेकमपराधं सहे । रामस्तु न सहते अतस्तदागमना-

दप्रहारेण रथमार्गादेनमुत्सारय । न जानात्येष परमार्थतो मां गृध्रः ।

( नेपथ्ये )— जानामि जानामि ।

कैलाससानुमति खण्डितमानशृङ्गं
कारागृहे नियमितं चिरमर्जुनेन ।
त्वां वालिवालवलयाङ्कितबद्धबाहुं
जानामि राक्षस जगत्त्रयधूमकेतुम् ॥ ९ ॥

रावणः— हहह आः अतिवाचालोऽयं विहङ्गः ।

---

त्पूर्वमेव सीतां विसृज्यापयाहीति ॥ सहत इति ॥ अत्र किलशब्द आक्षेपद्योतकः। प्रतिक्रियासामर्थ्ये सत्यपि करुणादिभिस्तदकरणं सहनम् । अयमर्थः । यस्यापराधः पुरन्दरेणाप्यप्रतीकार्यः तस्य ममापराधमयं तिर्यग्जातीयः पक्षी सहत इत्येतदत्यन्तं हास्यमिति । प्रतोदः कशा तेन कृतः प्रहारः प्रतोदप्रहारः ॥ उत्सारयेति ॥ उत्सारणमेव कर्तव्यं न निग्रहः । तत्र हेतुः— न जानातीति ॥ अथ जटायुः परमार्थत इत्यनेनाभिप्रेतं लोकोत्तरपराक्रममस्यान्यथा संभावयन्नधिक्षिपति— जानामीति ॥ जानामि जानामीति द्विर्वचनेन ज्ञानस्य सावशेषत्वं निरस्यते । त्वां परमार्थतो यथावत् जानामीत्यर्थः । ज्ञानप्रकारान् दर्शयति— अहं कैलाससानुमति कैलासपर्वते ॥ खण्डितमानशृङ्गम् ॥ मानं च शृङ्गं च मानशृङ्गे । शृङ्गं प्रभुत्वम् । "क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः" इति वैजयन्ती । गिरिशेन खण्डिते मानशृङ्गे यस्य तं तथाविधं जानामि । मा भूज्जगदीश्वरात्परिभवो मानभङ्गहेतुरिति मत्वा वरदानसमये परिहृताया मनुष्यजातेस्तस्य परिभवं दर्शयति— कारागृह इति ॥ न हि कारागृहनियमनात्परः अवमानोऽस्ति तादृशमवमानं चिरकालमनुभूतवन्तं त्वां परमार्थतो जानामीत्यर्थः । मा वा भूत् कार्तवीर्यार्जुनात् परिभवोऽवमानहेतुरिति मत्वा तिर्यग्जातिषु निकृष्टतमाया वानरजातेस्तस्य परिभवमाह—वालीति ॥ वालिनो वलयाकारो वालः वालिवालवलयः तेन कृतमङ्कितं वलयाकारं किणरूपं चिह्नं वालिवालवलयाङ्कितं तेन बद्धा युक्ताः बाहवो यस्य तम् । अयमवमानः इदानीमपि सर्वैः प्रत्यक्षीक्रियत इति भावः ॥ जगत्त्रयधूमकेतुमिति ॥ धूमकेतुर्नाशसूचको दुष्ग्रहः अनेन जगत्त्रयपीडाकरत्वेन वध्यत्वं दर्शितम् ॥ हहहेति ॥ अधिक्षेपश्रवणोद्भूतस्य कोपस्यानुभावोऽयम् ॥ अतिवाचाल इति ॥ बहुभाषिणि कुत्सायां गम्यमानायामालच्प्रत्ययः । अनेन सीतां प्रति तद्वचनस्य मिथ्यात्वमावेदय-

तिष्ठ त्वमत्र मम पश्यतु कर्म सीता
शस्त्रेण मे समरमूर्धनि दर्पणेन ।
अद्रिं महेन्द्र इव पक्षिणमम्बरस्थं
पक्षौ विलूय सहसा भुवि पातयामि ॥ १० ॥

( प्रविश्य )

जटायुः— भवतु पश्यामस्तावत् ।

वक्त्राण्येतानि तेऽद्य प्रलयघनरुचः पिङ्गकेशानि रोषात्
शृङ्गाणीवाञ्जनाद्रेः दवदहनशिखादीपितानीव रात्रौ ।
उत्कृत्योत्कृत्य चञ्च्वा झटझटिति गलत्सान्द्ररक्तारुणानि
प्रत्यक्षं क्षत्रियाया दश दशसु दशग्रीव दिक्षु क्षिपामि ॥

---

ति ॥ तिष्ठ त्वमिति ॥ सूतं पूर्वमाज्ञापितात् प्रतोदप्रहाराद् निवारयति ॥ सीता अत्र अस्मिन्प्रदेश एव मम कर्म पराक्रमं पश्यतु ॥ मत्पराक्रमदर्शनेन खण्डितमानशृङ्गमित्यधिक्षेपवचनस्य मिथ्यात्वं निश्चिनुयादिति भावः । यथा महेन्द्रः पक्षिणं पक्षवन्तं अम्बरस्थमद्रिं वज्रेण पक्षौ विलूय भुवि पातयति तथाहमपि समरमूर्धनि शस्त्रेणाम्बरस्थं पक्षिणं पक्षौ विलूय भुवि सहसा पातयामि ॥ दर्पणेनेति ॥ दर्पयतीति दर्पणः । वीराणां शस्त्रे गृहीते विशेषतो दर्पो भवतीति । अथ जटायुः युद्धार्थमध्यवस्यति— भवत्विति ॥ पश्यामस्तावदिति ॥ तावच्छब्दोऽवधारणे । वयं त्वत्कर्म पश्याम एव । शस्त्रेणेत्यादिविभीषिकावचनं तु भीरून्प्रत्येव शोभत इति भावः । अथ जटायुर्वीरधर्ममवलम्ब्यास्य मम पश्यत्वित्यादिवाक्येन तुल्यच्छायं वाक्यमुपाददानः स्वपराक्रमशक्तिं प्रकटयति— वक्त्राणीति ॥ हे दशग्रीव अहं अद्य क्षत्रियायाः प्रत्यक्षं ते दश एतानि वक्त्राणि रोषात् चञ्च्वा झटझटिति उत्कृत्योत्कृत्य दशसु दिक्षु क्षिपामि ॥ प्रत्यक्षं क्षत्रियाया इत्यनेन सीता ममापि कर्म पश्यत्विति दर्शितम् । क्षत्रियाशब्देन पराक्रमविशेषाभिज्ञत्वं सीताया दर्शितम् । शस्त्रेणेत्यस्य स्थाने चञ्च्वेत्युक्तम् । चञ्च्वा नित्यसाहचर्येण शस्त्राद्विशेषोऽपि दर्शितः । पक्षौ विलूयेत्यस्य स्थाने दशवक्त्राण्युत्कृत्योत्कृत्येत्युक्तम् । दशेत्यनेन पक्षद्वयविषयात् त्वत्पराक्रमान्मत्पराक्रमस्य दशवक्त्रविषयत्वेनाधिक्यं दर्शितम् । भुवि पातयामीत्यस्य स्थाने दशसु दिक्षु क्षिपामीत्युक्तम् । दशस्वित्यनेन त्वत्पराक्रमं भूवासिन एव जानन्ति मत्पराक्रमं तु दशदिग्वासिनोऽपि जानन्तीति द्योतितम् । दशग्रीवेत्यनेनोत्कृत्तशिरस्त्वस्य

सूतः— अयमयमाधावति ।

रावणः — आः तिष्ठेदानीम् ।

( उभौ युद्धं कुरुतः )

रावणः— एष प्रहरामि । ( प्रहरति )

सीता— हद्धि हद्धि । ( नेत्रे निमीलयति )

हा धिक् हा धिक् ।

सूतः— हन्त प्रहतोऽयं गृध्रः । अयमयं

क्षतजजन्मकणोक्षितविग्रहः
श्रमनिरुद्धविभुग्नशिरोधरः ।
दिनविरामपयोधरपाटलः
पतति पत्ररथो मरुतां पथः ॥ १२ ॥

सीता— अहो अकरुणा खु इस्सरा, अधण्णाए मम किदे अअं वि

---

ग्रीवादशकमात्रावशेषत्वं सूच्यते । अञ्जनाद्रिसाधर्म्यमुपपादयितुं प्रलयघनरुच इति विशेषणम् । वक्त्राणां दवदहनशिखादीपिताञ्जनाद्रिशृङ्गसाधर्म्यमुपपादयितुं पिङ्गकेशानि गलत्सान्द्ररक्तारुणानीति विशेषणद्वयमुपात्तम् । रात्राविस्यनेन औज्ज्वल्यातिशयो दर्शितः । एक इवशब्दो वाक्यालङ्कारे । एतच्चाद्रिं महेन्द्र इवेत्यस्य स्थाने उक्तम् ॥ अयमयमित्यादि ॥ विषादे द्विर्वचनम् । स्वामिना चन्द्रहासेन प्रहतोऽयं पत्ररथः पक्षीन्द्रो मरुतां पथः आकाशात्पतति । कथंभूतः क्षतजजन्मकणोक्षितविग्रहः ॥ क्षतजात् रुधिरात् जन्म येषां ते क्षतजजन्मानः तथाभूतैः कणैः उक्षितो विग्रहो यस्य स तथोक्तः । अत्र क्षतजस्य तत्कणानां च जन्यजनकभावोऽवयवावयविभावसम्बन्ध एव विवक्षितः ॥ श्रमनिरुद्धविभुग्नशिरोधर इति ॥ श्रमेणातिप्रयत्नेन निरुद्धा विभुग्ना शिरोधरा यस्य स तथोक्तः । कोपादुन्नमयितुं प्रयत्ने कृतेऽपि वेदनातिशयादशक्या ग्रीवा बलान्नमति । रुधिरोक्षितत्वात् दिनविरामपयोधरपाटलः सन्ध्यावलाहकवद्रक्त इति । अथ सूतः प्रयाणप्रतिबन्धकपतगराजवधसञ्जातानन्दस्य सीताचित्तविलोभनार्थं लङ्काप्रवेशं प्रति त्वरमाणस्य स्वामिनः सूत तूर्णं चोदयाश्वानिति वचनमाकर्ण्य दाशरथ्योः प्रतापं सीतायाश्चात्र महिमानं चालोच्य सीताहरणस्य राक्षसकुलोच्छेदहेतुत्वं निश्चित्य स्वयमेव तन्निवेदनं निष्फलत्वेनावधारयति— एष खल्वित्यादिना ॥ एष खलु मदीयं वचनमपकर्णयति नाद्रि-

विहंगो सोअणीओ संवुत्तो । ( रोदीति )

अहो अकरुणाः खल्वीश्वराः, अधन्याया मम कृते अयमपि विहङ्गः शोचनीयः संवृत्तः ।

रावणः— सूत तूर्णं चोदयाश्वान् ।

सूतः— यदाज्ञापयत्यायुष्मान् । ( विचिन्त्यात्मगतं ) एष खलु

अनुकूलमर्थ्यमविरोधि हितं
श्रवणीयमागमरहस्ययुतम् ।
वचनं मदीयमपकर्णयति
क्व मनोभवः क्व गुणसंग्रहणम् ॥ १३ ॥

( निष्क्रान्ताः सर्वे )

इति शक्तिभद्रविरचिते चूडामणिनाटके चतुर्थोऽङ्कः ॥

---

यते । नाश्राव्यत्वमनादरे हेतुरित्याह— श्रवणीयमिति ॥ अनुकूलमित्यादिविशेषणपञ्चकं श्रवणीयत्वे हेतुः । अर्थादनपेतमर्थ्यम् । अर्थशब्दः प्रयोजनवाची ॥ अविरोधि धर्मार्थकामानामनुपघातकं अत एव अनुकूलं ऐहिकफलानुगुणं हितं परलोकाविरुद्धं आगमरहस्ययुतं आगमोऽर्थशास्त्रं तद्रहस्यं तत्प्रतिपाद्योऽर्थः तेन युतम् । देशकालोचितार्थप्रतिपादकमिति यावत् । एवंभूतस्यास्य वचनस्यानादरे हेतुमाह— क्व मनोभव इति ॥ क्वेत्यधिकरणनिरासे । अत्र मनोभवशब्दसन्निधौ गुणसङ्ग्रहणशब्दसन्निधौ च श्रूयमाणः क्वशब्दः कामावेशगुणग्रहणयोरैकाधिकरण्यं निराकरोति । यतोऽयं मदनपरवशतया गुणदोषौ न गृह्णाति अतो न किञ्चिद्वक्तव्यमिति भावः । अस्मिन्नङ्के प्रकरीसंज्ञकमितिवृत्तं कविना दर्शितमिति ज्ञेयम् । यथाह— "प्रकरी तु प्रदेशभाक्" इति । न चाधिकारिकवृत्तस्य विच्छेद इति वाच्यम् । तस्यापि नियमिन इत्यत्र वीरमनुव्रतामित्यत्र चानुसन्धानात् । अस्मिन्नङ्के शृङ्गाराभासो रौद्ररसश्च रावणाश्रयत्वेन दर्शितः । रौद्ररसकार्यो भयानकः सीतागतत्वेन प्रतिपादित इति द्रष्टव्यम् ।

॥ इत्याश्चर्यचूडामणिनाटकविवृतौ चतुर्थोऽङ्कः ॥

## ॥ अथ पञ्चमोऽङ्कः ॥

( ततः प्रविशति मण्डोदरी चेटी च )

मण्डोदरी— किं णु खु एदं वि भविस्सदि ।

किं नु खल्वेतदपि भविष्यति ।

चेटी— अणुदावोग्गारं विअ भट्टिणीए वअणं ।

अनुतापोद्गार इव भट्टिन्या वदनम् ।

मण्डोदरी— हञ्जे णं तुए असोअवणिआ पविट्ठपुव्वा ।

हञ्जे ननु त्वया अशोकवनिका प्रविष्टपूर्वा ।

चेटी— णं तहिं भट्टिणो वन्दी तापसपदिणी । किं तिस्से ।

ननु तत्र भर्तुर्वन्दी तापसपत्नी । किं तस्याः ।

---

आश्चर्यचूडामणिनाटकेऽयमङ्कस्तुरीयो विवृतो गुरूणाम् ।
प्रसादमाश्रित्य तथोत्तराङ्को व्याख्यास्यतेऽस्माभिरनन्यचित्तैः ॥

अथ कविना वृत्तवर्तिष्यमाणेतिवृत्तसूचनार्थं प्रवेशक आरभ्यते । प्रवेशकश्च 'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ॥' इति लक्षितः । अथ दशग्रीवेणाशोकवनिकोद्यानमध्यगताशिंशपातरुमूलं नीतायां सीतायां मण्डोदरी नाम बहुमता तद्भार्या दुःस्वप्नदर्शनेन दुर्मनायमाना चिन्तयति— किं णु खु इत्यादिना ॥ इदमित्यनेन बुद्धिस्थं दुःस्वप्नदर्शनं निर्दिश्यते— किन्नु खलु भविष्यतीति ॥ किमनिष्टं फलं परिणंस्यत इत्यर्थः ॥ भट्टिणीति ॥ नाटके चेट्या स्वामिनी भट्टिनीत्यभिधीयते । उद्गीर्यतेऽनेनेत्युद्गारः । करणे घञ् । तव वदनं महान्तमनुतापं सूचयतीत्यर्थः ॥ हञ्जे इति ॥ नीचां चेटीं प्रति नाटक आह्वानम् । यथाह— "हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति" इति ॥ ननु त्वयाशोकवनिका प्रविष्टपूर्वेति ॥ अत्र काक्का त्वयाशोकवनिका न कदाचिदपि प्रविष्टेति भाति यतस्तत्रत्यं वृत्तान्तं न जानासीति प्रतिपाद्यते । जानाम्येवाहं तत्रत्यं वृत्तान्तं न तु तस्य त्वदनुतापहेतुत्वमित्यभिप्रायेणाह —णमिति ॥ बन्दी बलात्कारेण हृता तापसपत्नीत्यनेन सीतायाः रसमार्गानभिज्ञत्वं द्योत्यते ॥ किं तिस्से इति ॥ तस्या इति पञ्चमी । तस्यास्सकाशात् किमनिष्टं तव जातमि-

मण्डोदरी— तंणिमित्तं णो विणासं पेक्खामि।

तन्निमित्तं नो विनाशं प्रेक्षे।

चेटी— भट्टिणि ण कदाइ सद्दूलं मिईणं विस्संभो आसी। ज-
ह आअदा तह गमिस्सदि। णं भट्टिणी एव्व लङ्केसरी।

भट्टिनि न कदापि शार्दूले मृगीणां विस्रम्भ आसीत्। यथागता तथा गमिष्यति। ननु भट्टिन्येव लङ्केश्वरी।

मण्डोदरी— उम्मत्तिएव्व तुमं परिइदा वि भावं मे ण:ववुज्झसि। मए असोहणं दाणिं सिविणओ दिट्ठो।

उन्मत्तेव त्वं परिचितापि मे भावं नावबुध्यसे। मयाशोभनमिदानीं स्वप्नो दृष्टः।

चेटी— संति होदु, संति होदु, भणादु भट्टिणी।

शान्तिर्भवतु, शान्तिर्भवतु, भणतु भट्टिनी।

मण्डोदरी— हञ्जे सुणाहि दाव। हञ्जे शृणु तावत्।

चेटी— अवहिदंम्हि। अवहितास्मि।

मण्डोदरी— आसामुहविअविप्फुरिअवीईसहस्सो मरअदगिरिणिअरणीलो उब्भंदातिमितिमिङ्गलमाअङ्गमअरो मअराअरो इ-

---

त्यर्थः॥ तन्निमित्तं नो विनाशं प्रेक्ष इति॥ न इति राक्षसजातीयान् सर्वानभिप्रेत्योक्तम्। अथ चेटी मण्डोदर्यात्मनो राजमहिषीपदभ्रंशात्मको विनाश एव सीताहेतुकत्वेनोक्त इति भ्रमेण तन्निराकरोति— भट्टिणीत्यादिना॥ शार्दूलपदं सप्तम्यन्तम्। सद्दूलमित्येव पाठः। न कदाचिदपि मृगीणां शार्दूले विस्रम्भ आसीत्। एवं मानुषीणां राक्षसेषु विश्वासो न भवतीति भावः॥ यथा आगता तथा गमिष्यतीति॥ आगमनप्रकारो गमनप्रकारस्यैव निमित्तं नान्यस्य फलस्येति भावः। ननु स्वामिन्येव लङ्केश्वरी नान्या काचित् दिव्ययोषिदपि किं पुनर्मानुषीति भावः। अथ मण्डोदर्यात्मनो गौरवभङ्गसूचकं वचनमाकर्ण्य सनिर्वेदमाह— उम्मात्तिएव्वेति॥ यतो नित्यपरिचितापि मे भावमभिप्रायं नावबुध्यसे अत इदानीमुन्मत्तेव त्वमित्यर्थः। किमन्यत्तवानुतापकारणं अत आह— मए इति॥ अथ स्वप्नस्याशोभनत्वं दर्शयति— आसामुहेत्यादिना॥ अत्र मकराकरशब्दः समुद्रवाची सन्नपि अत्रापर्यवसानात् अपरिमेयत्वधर्मयोगाच्च राक्षससैन्यमभिव्यनक्ति। आसामुखेषु

दो तदो आपदिदेहिं तिणजादीहिं णिवीदसारो मुहुत्तएण रिक्तओ संवुत्तो ।

आशामुखविततविस्फुरितवीचीसहस्रो मरकतगिरिनिकरनीलः उद्भ्रान्ततिमितिमिङ्गलमातङ्गमकरो मकराकर इतस्तत आपतितैः तृणजातिभिः निपीतसारो मुहूर्तेन रिक्तः संवृत्तः ।

चेटी— हद्धि तदो तदो । हा धिक् ततस्ततः ।

मण्डोदरी— अहं वि दाव पंसुपरुसकेसकलापाए विरलदसणविकिदवदणाए विप्फुलिङ्गणअणाए सुण्णकण्णाए कपालवण्णाए अमंगलाए कआ वि इत्थिआए गाढं परिस्सत्तंम्हि ।

अहमपि तावत् पांसुपरुषकेशकलापया विरलदशनविकृतवदनया विस्फुलिङ्गनयनया शून्यकर्णया कपालवर्णया अमङ्गळया कयापि स्त्रिया गाढं परिष्वक्तास्मि ।

चेटी— हद्धि तदो तदो । हा धिक् ततस्ततः ।

---

समुद्रगतेषु दिङ्मुखेषु सर्वत्र विततं व्याप्तं विस्फुरितं च वीचीसहस्रं यस्य स तथोक्तः । अनेन राक्षसानां महत्तराः करचरणाद्यवयवाः सूच्यन्ते । मरतकगिरिनिकरनीलत्वं समुद्रे राक्षससैन्ये च समानम् । उद्भ्रान्ताः साहङ्कारं भ्रमन्तस्तिमयः तिमिङ्गिला मातङ्गा मकराश्च यस्मिन्स तथोक्तः । योजनमायतो मत्स्यविशेषस्तिमिः । तद्भक्षको मत्स्यविशेषस्तिमिङ्गिलः । यस्तिमिङ्गिलमपि भक्षयति स जलगजो मातङ्गशब्देनोच्यते । यो जलगजमप्यनायासेनाश्नाति स मकर इति विशेषस्याच्च विवक्षितत्वम् । अत्र तिमिङ्गिलादिशब्दैः मेघनादकुम्भकर्णादयो रक्षोनायका द्योत्यन्ते । तृणजातिशब्दः कृमिविशेषवाची तत्रापर्यवसानात् वानरसैन्यमभिव्यनक्ति । इतस्ततः आपतितैस्तृणजातिभिर्निपीतसार इति रिक्तत्वे हेतुः ॥ रिक्तस्संवृत्तः ॥ शून्यतोयतटाकादिवत् संवृत्त इत्यर्थः ॥ अहमपि तावदिति ॥ अहमपि तावत् तस्मिन्काले कयाचिदमङ्गलया स्त्रिया परिष्वक्तास्मि अनेन वैधव्याधिष्ठातृदुर्देवताभिव्यज्यते । अमङ्गलत्वमेव दर्शयति— पंसुपरुसेत्यादिना ॥ पांसुपरुषकेशकलापया चेत्येवमादीनि विशेषणानि अमङ्गलत्वद्योतकानि विरलदशनं निबिडं विकृतं च वदनं यस्याः सा । विरलत्वं सङ्ख्यान्यूनत्वं त्रिचतुरदशनमित्यर्थः । विस्फुलिङ्गनयनया शून्यकर्णया कपालवत् कृष्णवर्णया चेति स्पष्टोऽर्थः । एवं स्वपक्षविनाशे सूचिते

मण्डोदरी— सा वि सीदा पण्डुरदुऊलपरिधाणा मलअजरसपरि-
सोहिअपओहरा मल्लिआकुसुमवड्ढिअधम्मिल्ला पदिणा दि-
ण्णहत्था पुप्फअं आलुहंती अ मए दिट्ठा । तदो अपरिइद-
वेलाए मम णिद्दा वि संवुत्ता ।

सापि सीता पाण्डुरदुकूलपरिधाना मलयजरसपरिशो-
भितपयोधरा मल्लिकाकुसुमवर्धितधम्मिल्ला पत्या दत्तह-
स्ता पुष्पकमारोहन्ती च मया दृष्टा । ततः अपरिचि-
तवेलायां मम निद्रापि संवृत्ता ।

चेटी— भट्टिणि मा मा अणुसएण सिविणाणं वहूणि कारणाणि
वज्जा उपदिसंति । अहवा कुदो दाणिं भअं भअमूलाणं तेल्लो-
क्कस्स अम्हाणम् ।

भट्टिनि मा मानुशयेन स्वप्नानां बहूनि कारणानि वैद्या
उपदिशन्ति । अथवा कुत इदानीं भयं भयमूलानां त्रै-
लोक्यस्य अस्माकम् ।

---

प्रतिपक्षाभ्युदयमाह— सापीत्यादिना ॥ सापि सीता पाण्डरदुकूलपरिधाना मलयजरसपरिशोभितपयोधरा मल्लिकाकुसुमसंवर्धितधम्मिल्ला इति त्रिष्वपि विशेषणेषु धावळ्यं माङ्गल्यद्योतनायोपात्तम् । पत्या दत्तहस्तेत्यनेनावैधव्यं सूचितम् । पुष्पकमारुह्य गच्छन्ती मया दृष्टेत्यनेन सीतायाः प्रत्याहरणं सूचितम् । तस्मिन्काले मम निद्रापि संवृत्तातीता । अत्र प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमित्यस्मिन् भाष्य इव वृत्तशब्दोऽतीतवचनः । अपरिचिता वेला कालो यस्यास्सा तथोक्ता । निद्रासमाप्तौ पूर्वपरिचितो यः कालः तस्मात्पूर्वमेव निद्रा विनष्टेत्यर्थः । अनेन दुःस्वप्नस्य वृत्तान्तान्तरदर्शनानुविद्धत्वेनानिष्टसूचकत्वं पारमार्थिकमिति द्योत्यते । अथ चेटी मण्डोदरीमाश्वासयति— मा मेति ॥ अनुशयस्सन्तापः । स्वप्नानां बहूनि कारणान्याहारदोषादीनि वैद्या उपदिशन्ति यत् अतो न सन्तापः कर्तव्य इति पूर्वत्र पर्यवसानम् । अथवेत्यनेन दुःस्वप्नदर्शनमस्मान् प्रत्यप्रमाणमिति पक्षान्तरं परिगृह्य तदेवोपपादयति— कुदो इत्यादि ॥ भयाभावे हेतुः— त्रैलोक्यस्य भयमूलानामिति ॥ अथ कविना प्रवेशकमध्ये चूलिकया वर्तिष्यमाणः कथांशस्सूच्यते । यथाह— "अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना" इति । अथ कश्चिद्राक्षसो दशग्रीवस्याज्ञां घनादीन्प्रति विज्ञापयति— गन्धापेत्यादि ॥ घनाः गन्धापार्द्रदलाः परिमलबहलमकरन्दार्द्राणि दलानि यस्यां तां

( नेपथ्ये )

गन्धापार्द्रदलां सृजन्तु परितो वृष्टिं घनाः कौसुमी-
माधूतामरसिन्धुवीचिवलयः स्वर्गानिलो जृम्भताम् ।
उद्यानश्रियमुद्वहन्तु समयास्सर्वे वसन्तादयः
स्वान्पादान् सुखमानमय्य ककुभां पर्येतु चक्रं शशी ॥ १ ॥

मण्डोदरी— हं घोसणा विअ । हं घोषणेव ।

चेटी— भट्टिणि आम् । भट्टिनि आम् ।

मण्डोदरी— हञ्जे इमस्स मूलं दाव जाणीहि ।
हञ्जे अस्य मूलं तावत् जानीहि ।

चेटी— भट्टिणि तह । ( निष्क्रान्ता ) भट्टिनि तथा ।

मण्डोदरी— किं एत्थ विआरिदव्वं तिस्से भूमिगोअरीए चित्तवि-
लोहणणिमित्तो खु महाराअस्स अअं आरंभो ।
किमत्र विचारयितव्यं तस्याः भूमिगोचरायाः चित्तवि-
लोभननिमित्तः खलु महाराजस्यायमारम्भः ।

( प्रविश्य )

चेटी— जेदु भट्टिणी ( कर्णे ) एव्वं विअ ।
जयतु भट्टिनी । एवमिव ।

---

कौसुमीं वृष्टिं सृजन्तु । उद्याने कुसुमसमृद्धौ सत्यामपि कुसुमवृष्टिर्दुर्लभेति मत्वा वृष्टिमित्युक्तम् । आधूतामरसिन्धुवीचिवलय इत्यनेन गौमात्पवमानात् स्वर्गानिलस्य शैत्योत्कर्षो दर्शितः । सौरभ्यं च कुसुमवृष्टिसम्पर्कादुद्यानसंसर्गाच्च भवत्येव । अद्यैव सर्वे वसन्तादयः समयाः संभूय उद्यानश्रियमुद्वहन्त्विति सोपस्कारं व्याख्येयम् । शशी ककुभां चक्रं सुखं पर्येत्वित्यनेन पूर्वं दशग्रीवभयात् सुखसञ्चाराभावेन व्यसनं द्योतितम् । पादाः रश्मयश्चरणाश्च । अत्रैव चन्द्रपादरसज्ञतामिति रश्मिषु प्रयोगदर्शनात् । अत्र रश्मीन् विस्तार्येति वाच्योऽर्थः । यथा कश्चित् राज्ञा निगळितचरणः पुनर्मोचितः सन् सुखसञ्चारार्थं पादव्यायामं करोति तद्वच्चन्द्रोऽपीत्ययमर्थः श्लेषेण द्योत्यते । अनेन सीताचित्तविलोभनार्थं महानुद्यमो रक्षोनाथस्य सूचितः ॥ किं से भूमिगोअरीए इति ॥ भूमिर्गोचरः आश्रयो यस्यास्सा तथोक्ता । अनेन दिव्याङ्गनासु सुलभासु मनुष्यस्त्री-

मण्डोदरी — तव आआसमेत्तं किदं। दाणिं किं करेदि महाराओ।

तव आयासमात्रं कृतम्। इदानीं किं करोति महाराजः।

चेटी — तिस्से दंसणणिमित्तं पादोसिअं दाणिं वेसं अणुचिट्ठदिं भट्टा।

सीतायाः दर्शननिमित्तं प्रादोषिकमिदानीं वेषं अनुतिष्ठति भर्ता।

मण्डोदरी — तेण हि हळा एहि दाव महाराएण अविण्णादाओ असोअवणिआं पविसिअ, लदावलअन्तरिदाओ भविअ, तस्सिं अकामअमाणाअं सीदाअं महाराअस्स कामुअवत्तिणं पेक्खिअ ओहसिस्सामो।

तेन हि हला एहि तावत् महाराजेनाविज्ञाते अशोकवनिकां प्रविश्य, लतावलयान्तरिते भूत्वा, तस्मिन्नकामयमानायां सीतायां महाराजस्य कामुकवृत्तिं दृष्ट्वा अपहसिष्यावः।

चेटी — जं भट्टिणी आणवेदि। यद्भट्टिन्याज्ञापयति।

(निष्क्रान्ते)

॥ प्रवेशकः ॥

(ततः प्रविशति कामयमानावस्थः सपरि[illegible] रावणः)

रावणः — (स्पर्शं निरूप्य) वर्षवर मया चिरान्निर्वासितस्य दिवा-

---

परिग्रहनिर्बन्धः कष्टतम इति योज्यते॥ तव आआसमेत्तमिति॥ यतो मया निरूपितमेव त्वया वेदितं अतस्तवायासमात्रं मया कृतं नत्वविदितस्य वेदनमित्यर्थः॥ पादोसिअमिति॥ प्रदोषः सन्ध्या तस्मिन् काले समुचितं प्रादोषिकम्॥ एहीति॥ एहि तावत् महाराजेनाविज्ञाते अशोकवनिकां प्रविश्य लतावलयान्तरिते भूत्वा तस्मिन्नकामयमानायां सीतायां महाराजस्य कामवर्तनं कामव्यापारं प्रेक्ष्यापहासिष्याव इति स्पष्टोऽर्थः॥ प्रवेशकः॥ अथ दशग्रीवः सीताचित्तविलोभनार्थमुज्ज्वलवेषाभरणादिभिः कमनीयतमो भूत्वाशोकवनिकां प्रति प्रतिष्ठमानो नेदीयांसं चन्द्रमसमालोक्य विवृद्धविरहसन्तापः सन् विरोचनं मत्वा आत्मना निषिद्धप्रसरस्य तस्य प्राप्तिकारणं वर्षवरमभिमुखीकृत्य विचारयति — वर्षवर मयेत्यादिना॥ प्रसङ्गः प्रस्तावः किंशब्दः प्रस्ता-

करस्य लङ्कायां कः प्रसङ्गः । तूर्णमाहूयताममात्याश्चित्र-योधी ।

वर्षवरः— ( आत्मगतं ) अहो नु खलु स्वामिनो महान् मदनोन्मादः ।

यदेष दोषातनमीक्षणाना-
मानन्दमान्दोलितसागरोर्मिम् ।
न वेद शीतांशुमपि स्पृशन्तं
तुषारनिष्यन्दसुखैर्मयूखैः ॥ २ ॥

रावणः— किं विलम्बसे ।

वर्षवरः— यदाज्ञापयति स्वामी । ( आत्मगतं ) न खलु व्याधेरीदृशस्य भिषजो मन्त्रिणः । ( निष्क्रान्तः )

---

वस्यासंभावनां द्योतयति । तामेवासंभावनां प्रकटयति— मया चिरान्निर्वासितस्येति ॥ अथ दिवाकरप्रसङ्गहेतुं रामाज्ञामाशङ्कय तद्वृत्तान्तं जिज्ञासमानः सीतावशीकरणोपायं निरूपयिष्यन्नमात्यानयनार्थं वर्षवरं नियुङ्क्ते— तूर्णमिति ॥ अथ वर्षवरः स्वामिनो मदनोन्मादकृतं चन्द्रे सूर्यभ्रमं निश्चित्य सविषादमाह— अहो इति ॥ उन्मादस्यातिकष्टत्वमेवोपपादयति— यदिति ॥ यत् यतः एषः मत्स्वामी शीतांशुं न वेद प्रकरणसामर्थ्यात् सूर्यत्वेनाभिमन्यत इति सिध्यति । शीतांशौ सूर्यभ्रमस्यावकाशाभावं दर्शयन्नाह— ईक्षणानामानन्दमिति ॥ न केवलं नयनेन्द्रियेणैव वैलक्षण्यमवगन्तुं शक्यते । अपि तु स्पर्शेन्द्रियेणापीत्याह— तुषारनिष्यन्दसुखैर्मयूखैः स्पृशन्तमपीति ॥ अपिशब्दो विरोधे । अत्रानन्दसुखशब्दौ आयुर्घृतमित्यादिवत् उपचारादानन्दकारणे वर्तते । ननु विरहिणश्चन्द्रदर्शने सन्ताप एवोदीयत इति संभवत्येव सूर्यभ्रमः । अत आह— दोषातनमिति ॥ दोषा रात्रिस्तत्र भवतीति दोषातनः । इदानीं रात्रावुदीयमानमिति यावत् । अनेन कालविशेषज्ञानापगमेन उन्मादातिशयो दर्शितः । सत्यपि कालविशेषज्ञानस्य प्रमोषे नयनपथं श्रवणमार्गं चासाद्य वर्तमानेन सागरोर्मिप्रक्षोभरूपेण लिङ्गेन चन्द्रोऽयमित्यवधारणं संभवत्येवेत्यभिप्रायेणाह— आन्दोलितसागरोर्मिमिति ॥ अथानया चिन्तया किञ्चिद्विलम्बमानं तं त्वरयन्नाह— किमिति ॥ अथ स्वयमेवामात्यानयनस्य निष्फलत्वमवधारयति— न खल्विति ॥ ईदृशस्यात्यन्तविरक्तमनु-

रावणः—( विचारयन् निरीक्ष्य ) न भानुरेषः । मया दत्ताभय-
श्चन्द्रमाः । कुतः

आतपत्यविदुषाममृतांशु-
मंशुमन्तमपि रश्मिसहस्रे ।
रागिणां भवति लक्षणमिन्दो-
रिन्द्रनीलशकलच्छविलक्ष्म ॥ ३ ॥

( विचिन्त्य ) स्वयं कृतमिदं व्यसनम् ।

न रश्मिभिर्ग्लपयति यो दिगन्तरे
सरोरुहाण्यपि मम शासनादृते ।
स चन्द्रमा वितपति संमुखेन मा-
मवस्थया बलमबलोऽपि नीयते ॥ ४ ॥

---

व्याङ्गनागोचररतिपरिणामसन्तापरूपस्येत्यर्थः । अथ मण्डलान्तर्गताङ्कदर्शनेन च-न्द्रोऽयमित्यवधार्याह— न भानुरिति ॥ दत्ताभयः स्वान्पादानित्यादिनेत्यनुस-न्धेयम् ॥ आतपतीति ॥ अमृतांशोः अंशुमतश्च रश्मिसहस्र इत्यनेन सङ्ख्या-या विशेषाभावो दर्शितः । निर्विशेषं विरहिजनानातपति अतिशयेन सन्तापय-ति अमृतांशुमंशुमन्तमपि विविच्याविदुषामजानतां रागिणां विरहिणामिन्द्र-नीलशकलच्छविलक्ष्म इन्दोर्लक्षणं विविच्यावधारणे प्रमाणं भवतीत्यर्थः । अथ रक्षोनाथो विभावरीनाथदर्शनेन विशेषतो विजृम्भमाणं सन्तापमसहमानो वी-रत्वेन दुर्बलकृतत्वं सन्तापस्यालोच्य किञ्चित्सञ्जातदैन्यस्सन् आत्मनाभ्यनुज्ञात-लङ्काप्रवेशस्य तस्य तदैव निर्वासनमनुचितं मन्यमानः क्षमामवलम्ब्य सानुश-यमाह— स्वयमिति ॥ ननु स्पष्टमेव चन्द्रदर्शनेन विजृम्भमाणस्य व्यसनस्य तद्धेतुकत्वं अतः कथं तस्य स्वयंकृतत्वं अत आह— न रश्मिभिरि-ति ॥ यो मम शासनादृते दिगन्तरे दिग्विशेषे सरोरुहाण्यपि न ग्लपयति य-स्यां दिशि सरोरुहाणां सर्वदा संफुल्लत्वं मयाभिकाङ्क्ष्यते तां दिशं चन्द्रमाः मदाज्ञां विना न प्राप्नोतीति तात्पर्यम् । स इत्थं मद्भ्रूक्षेपलेशवशंवदोऽपि लक्षितचन्द्रमाः सम्मुखेन सम्मुखो भूत्वा इत्यर्थः । मां वितपति । अत्र हेतुमाह— अवस्थयेति ॥ इहावस्थाशब्देन निमित्तान्तरकृतं वैवश्यमुच्यते । अस्मद्वैवश्यमेव चन्द्रमसो बलवत्त्वे कारणं तथा च न चन्द्रमसा कृतमिदं व्यस-नमिति भावः । अथ चित्रयोधी स्वामिनं द्रष्टुं गच्छन्नेव स्वामिनो दुर्वृत्तमालो-

( ततः प्रविशत्यमात्यः )

**अमात्यः**— ( सर्वतो विलोक्य ) अहो चन्द्रपादरसज्ञतां चिरादा- प्नोति राक्षसलोकः । कुतः

आविर्भवत्यमृतभाजनमङ्गजन्म-
सेनापतिः शिशिरदीधितिरेष देवः ।
क्षीरार्णवप्रलयवारिणि जीवलोकं
पश्यामि मग्नमिव यस्य मयूखजालैः ॥ ५ ॥

**रावणः**—

हिमकर हिमगर्भा रश्मयस्तावकीनाः
मयि मदनविधेये येन वह्निं वमन्ति ।

---

च्य सन्तापयुक्तोऽपि मध्येमार्गं चन्द्रमसो दर्शनेनानन्दविवशं रक्षःकुलमालोक्य सविस्मयमाह— अहो इति ॥ पादाः रश्मयः । केषाञ्चिच्चन्द्रिकारसज्ञानमेव तावदिदंप्रथमिकं प्रवयसामपि चिरातीतत्वेनेदंप्रथमिकत्वं तस्य वक्तुं श- क्यत इति मत्वा चन्द्रपादरसामित्यनभिधाय चन्द्रपादरसज्ञतामित्युक्तम् । अथ स्वयमपि चन्द्रोदयमभिनन्दन्नाह— आविर्भवतीति ॥ सिद्धस्याप्याविर्भा- वस्य कथनेनैतावन्तं कालमनाविर्भावेन उद्वेगस्तादात्विको हर्षातिशयश्च द्योत्य- ते ॥ अमृतभाजनमिति ॥ शिशिरदीधितित्वे हेतुः । अमृतभाजनमित्यनेन इतरेषां देवानां पानशेषत्वेन बहुलपक्षे कलाक्षयोऽप्यस्य श्लाघ्य एवेति सूचितम् ॥ अङ्गजन्मसेनापतिरिति ॥ सीताचित्तविलोभनार्थं लङ्काप्रवेशमभ्यनुजानानेना- स्मत्स्वामिनाप्यस्याङ्गजन्मसेनापतित्वमनुमतमिति भावः । क्षीरार्णवस्य प्रलयवारित्वेन परिणामश्चतुर्दशभुवनव्याप्त्यर्थमुत्प्रेक्षाबीजत्वेनाभिहितम् । जीवलोकमित्यभिधानं स्थावरजङ्गमात्मकभुवनपरं न तु जीवैकपरमिति द्रष्टव्यम् । अथ मृगाङ्कदर्शनतन्मयूखसंस्पर्शनसमुद्दीपितविरहसन्तापजनि- तमुन्मादाधिक्यमुपगम्यात्मसन्तापविधानस्य शशाङ्ककर्तृकत्वमालोच्य कि- ञ्चित्सञ्जातेर्ष्यादैन्यरसन् त्रिलोकीविजयश्लाघनीयपराक्रमो राक्षसराजो मया निर्जितः अहो मम बलमित्येवं गर्वविशेषं चन्द्रमस्यारोप्य युक्तिभिस्त- मपनुदन्नाह— हिमकरेति ॥ हिमकरेत्यत्र नावयवार्थादरः कार्यः । हिमगर्भा इत्यनेन पौनरुक्त्यप्रसङ्गात् । अतो हिमकरशब्दस्य संज्ञिमात्रपर- त्वम् । हिमकर तावकीना रश्मयः येन करणभूतेन पदार्थान्तरेण मयि वह्निं वमन्ति तत्करणभूतं पदार्थान्तर न तव बलं मम बलमिति च तव बुद्धिर्मा

न तव बलमनङ्गस्यापि वा दुःखभाजो
जनकदुहितुरेषा शर्वरीनाथ शक्तिः ॥ ६ ॥

अमात्यः—

उन्मर्यादमुपेक्ष्य रावणमहं रामाद्विनश्यामि नु
व्याहृत्याप्रियमाप्नुयान्नु विपदं चण्डादुत स्वामिनः ।
पक्षौ द्वावपि मे न पथ्यमनयोः श्रेयानयं रावणात्
नाशो मे पतनावसानमचिरान्नेक्षे यतस्स्वामिनः ॥ ७ ॥

---

भूत् । कुतो न मे बलमेतदत आह— हिमगर्भा इति ॥ स्वतश्शीतलानां त्वद्रश्मीनां कथं वह्निवमनसामर्थ्यमिति भावः । ननु प्रत्यक्षमेतत् यद्रश्मिसंस्पर्शे तव सन्तापो भवतीति अतः कथं न मम बलं तत्र हेतुः अत आह— मदनविधेय इति ॥ मदनविधेयशब्देनात्र मदनसन्तापविवशोऽभिप्रेतः । इह यस्य मदनविवशत्वं तस्यैव त्वद्दर्शने सन्तापो भवतीत्यन्वयव्यतिरेकाभ्यां मदनविवशत्वमेव तत्र हेतुरिति निश्चीयते । एवं तर्हि मत्स्वामिनो मदनस्य बलमेतदिति तदवस्थ एव भवतो मत्तः पराजयः अत आह— अनङ्गस्यापि वेति ॥ बलं नेत्यनुषज्यते । सत्यं मम मदनविवशत्वमस्त्येव । नैतावता मदनस्य स्वतः सन्तापकरत्वमस्तीति भावः । तर्हि कस्य बलमेतदित्यत आह— जनकदुहितुरेषा शक्तिरिति ॥ यतो मदनोऽपि लोकोत्तरान् जनकदुहितुर्गुणविशेषानपेक्ष्यास्मत्सन्तापं करोति अतो जनकदुहितुः शक्तिरेव मूलकारणमिति । उक्तां जनकदुहितुरेव सन्तापोत्पादनशक्तिमुपपादयति— दुःखभाज इति ॥ यतो दाशरथिविप्रयोगाल्लङ्कापुरीप्रवेशनाच्च महद्दुःखमुपगम्यास्मान्प्रति प्रतिकूला वर्तते अत एव मम सन्ताप इति भावः ॥ शर्वरीनाथेति ॥ त्वयापि शर्वरीविरहे आत्मनानुभूयमानस्य सन्तापस्य शर्वर्येव मूलकारणमिति विदितमेवेत्यभिप्रायेण सम्बोध्यते । अथ अमात्यः स्वामिदर्शनानन्तरमात्मना कर्तव्यं कर्म विचार्याध्यवस्यति— उन्मर्यादमिति ॥ उन्मर्यादमित्यनेनानुपेक्षणीयत्वं दर्शितम् । अमात्येन हि लङ्घितमर्यादः स्वामी हितोपदेशेन मर्यादायां स्थापनीयः । अत्रोपेक्षा परमकारुणिकाय रघुवीराय सीतां दत्वा तत्पादावेव शरणमुपगच्छतु स्वामीत्यादिहितोपदेशं प्रत्यौदासीन्यम् । रामाद्विनाशोऽत्रोपेक्षायां हेतुः । अयमभिप्रायः । युद्धमरणमेव तावच्छ्रेयस्करं विशेषतः पुनर्जगन्नाथस्य नारायणस्य शस्त्रधारातीर्थस्नानपूर्वको विनाशः अतोऽनुपेक्षणीयमपि स्वामिनमुपेक्ष्य किं रामाद्विनाशमा—

कष्टः स्वामिनो वृत्तान्तः । यदेष वालेन बद्धो मुसलेन हन्यते । यावत्स्वामिनं पश्यामि । ( परिक्रम्यावलोक्य ) एष स्वामी

ध्यानैकाग्रमना विजृम्भणपरो निःश्वासतप्ताधरः
स्वामुज्झन्निव कान्तिमुत्पलनिभां वर्षावसाने घनः ।
और्वेणेव कृशानुना पतिरपामापीयमानः परैः
दुर्बोधापचयं दधाति दहता कामेन गूढं वपुः ॥ ८ ॥

---

ब्रुयामिति । अथास्मिन्पक्षे दोषप्रसङ्गात् पक्षान्तरं परिगृह्णाति— व्याहरिष्येति ॥ अप्रियशब्देन हितं लक्ष्यते । प्रायेण जनानां हितमप्रियं भवति । यथाह— "हितं मनोहारि च दुर्लभं वचः" इति । रावणस्य पुनर्हितोपदेशे विपत्प्राप्तेरप्रियव्यवहारमात्रहेतुकत्वं तदनन्तरकालीनत्वं च प्रदर्श्यते । तेन च स्वामिनो हिताहितविचाराभावः कोपनत्वातिशयश्च व्यज्यते । चण्डादित्यनेन स्वामात्यबुद्ध्या निग्रहाकरणं निरस्यते । अस्मिन्पक्षे स्वाधिकारापरित्यागो गुणः श्रेयस्करत्वेन निरूपितस्य रामाद्विनाशस्यालाभो दोषः । उक्तमेव दोषद्वयमभिप्रेत्य पक्षयोरुभयोरपि अपथ्यत्वमाह— पक्षाविति ॥ अथ गुणदोषबलाबलं विचार्यानुष्ठानाय द्वितीयं पक्षं परिगृह्णाति— अनयोरिति ॥ मे इत्येकवचनेनान्येषामनुजीविनां हितोपदेशाकरणेन दोषो नास्ति । मम त्वमात्यस्य हितोपदेशः कुलधर्मत्वेन गरीयानिति च द्योत्यते । रावणाश्रशस्य श्रेयस्त्वे कुलधर्मापरित्यागः प्रधानहेतुः । तस्यानुषङ्गिकं प्रयोजनमाह— अचिरादिति ॥ यतो रावणहेतुकाद्विनाशात् अचिराद्भावि स्वामिनः पतनावसानं पतनशब्देन पुत्रमित्रादिविनाशोऽभिप्रेतः । अवसानशब्देनान्त्यावस्था । तदुभयं नेक्षे । द्वितीयपक्षे न केवलं स्वाधिकारापरित्याग एव गुणः अपि तु स्वामिनः पतनावसानादर्शनमपीति भावः । अनुष्ठेयत्वेन निश्चितस्य हितोपदेशस्य उक्तमेव निष्फलत्वमुपपादयति— कष्ट इति ॥ कष्टत्वे हेतुः— यदिति ॥ वालशब्देन दुर्बलं बन्धनकारणं मनुष्याङ्गनानुरागरूपं विवक्ष्यते । मुसलशब्देन प्रबलं हननकारणं रामादिरभिप्रेतः । मनुष्याङ्गनानुरागस्यासारत्वं रामादेः प्रबलत्वं च सुज्ञेयमपि अजानानं प्रति हितोपदेशो निष्फल एवेत्यभिप्रायः ॥ ध्यानेत्यादि ॥ वर्षावसाने स्वां कान्तिमुज्झन् घन इव । अत्र वर्षाशब्दस्य ऋतुवाचिनस्समासः । उज्झनस्य वर्तमानत्वेन स्वकान्तेरत्यन्तापगमाभावो दर्शितः । अनेनोपमानेन रावणस्य विरहजनितेन पाण्डिम्ना नैसर्गिकस्य कार्ष्ण्यस्य सङ्करो दर्शितः । गूढं दहता कामेन परैर्दुर्बोधापचयं वपुर्दधाति । अत्र कामस्य दहनकर्तृत्वाभिधानबलात् अग्नित्वं रूप्यते । अत्र च विशेषणे भारः ।

( उपेत्य ) जयतु स्वामी ।

रावणः— किमस्त्यपूर्वो वृत्तान्तः ।

अमात्यः— ( आत्मगतम् ) प्रसन्नमाचष्टे देवः । ( प्रकाशम् ) अ-
स्ति कौलीनम् ।

रावणः— तिष्ठ । वालिनं हत्वा सुग्रीवमुपास्ते राम इति ।

अमात्यः— तदेव । विशेषोऽप्यस्ति ।

रावणः— तत्कथय ।

अमात्यः— सर्वा दिशः सीतान्वेषणार्थं तदाज्ञया वानरसैन्यं
सञ्चरतीति ।

---

कामाग्निना गूढं दहनादित्यर्थः । परैः दुःखेन ज्ञातुं शक्यः न त्वज्ञानाभिप्रायमे-
तत् । अपचयोऽपक्षयो यस्य वपुषो यस्मिन्वा धारणे तत् तथोक्तम् ॥ **और्वे-
ण कृशानुना पीयमानोऽपांपतिरिवेति** ॥ अनेन वाडवाग्न्युपमानेन
कामाग्नेर्दुर्निवारत्वं भूयस्तमत्वं सर्वदानुवृत्तिश्च द्योत्यते । समुद्रोपमानेन दशग्री-
वस्य वपुर्महत्त्वं गाम्भीर्यं च प्रत्याय्यते । अथ दशग्रीवः कृतसमुदाचारममात्य-
मालोक्य रामस्य वालिवधानन्तरकालीनसमुद्योगविशेषं जिज्ञासमानः तद्विषय-
मेवानुयोगं भयत्रापलद्योतकमाशङ्क्य सामान्येन पृच्छति— **किमस्तीति** ॥
अपूर्व इत्यनेन श्रुतचरवृत्तान्तोपवर्णनेन कालं मा वृथा विलम्बिष्ठा इति सूचय-
ति— **प्रसन्नमिति** ॥ स्मरसन्तापाकुलोऽपि मयि प्रसन्न एव । अतो वक्तव्य-
वचनस्यायमवसर इति भावः ॥ **कौलीनं** जनप्रवादः । तिष्ठेत्यनेन गतिनिवृत्ति-
वाचिना वचनोपरतिर्लक्ष्यते ॥ **वालिनं हत्वेति** ॥ अयमभिप्रायः । एकं वानरं
हत्वान्यं वानरमुपास्ते राम इत्ययं जनप्रवादः श्रुत एव नैतावन्मात्रेण रामस्य
गौरवं भवतीति । तदेवेत्येवकारेण वालिहननस्य बहुमन्तव्य-
त्वायोगो व्यावर्त्यते । वालिनः पराक्रमे विचार्यमाणे सति तद्धननं बहुमन्तव्य-
मेव भवतीति भावः ॥ **सर्वा इति** ॥ वानरसैन्यमित्यनेन सञ्चरणसमये सन्न-
द्धत्वं सन्नाहवत्त्वं च दर्शितम् । तदाज्ञयेत्यनेन सीतामविज्ञाय स्वाच्छन्द्येन निव-
र्तने तेषां तन्द्र्यादिकृते वा मान्द्ये महान्दण्डो भवति । तेन सुग्रीवाज्ञापरतन्त्रा-
णां तेषामुत्साहः सीताविज्ञानपर्यन्त इति दर्शयति— **सीतान्वेषणार्थमित्य-
नेन** ॥ वालिवधपणभूतत्वेन सीतान्वेषणे तात्पर्यातिशयो दर्शितः । सर्वा दिश
इत्यनेन समुद्रदुर्गायामप्यस्यां लङ्कायामद्य श्वो वा आयास्यतीति द्योत्यते । अ-
थ तदुक्तमेव वाक्यमुपहासपूर्वकं काक्वानुवदन्नाधिक्षिपति— **किं किमिति** ॥

रावणः— किं किम् । सर्वा दिशः सीतान्वेषणार्थं तदाज्ञया वानरसैन्यं सञ्चरतीति । पश्य—

अहिभवनविधानान्युधीकृत्य शैला-
नमरजयिनि सैन्ये रक्षसामात्तकक्ष्ये ।
कथमिव रणभूमौ वर्तते वानराणा-
मुपवनतरुवल्लीपल्लवोन्माथि यूथम् ॥ ९ ॥

अमात्यः— कामं भवन्तु वानराः परिहास्याः । किन्तु

रावणः— कथय किं तत् ।

अमात्यः— अजय्यं धनुर्धराणामाहुर्दाशरथिम् ।

---

अत्राक्षेपगर्भे प्रश्ने किंशब्दद्वयम् ॥ पश्येति ॥ वानररक्षस्सैन्ययोरन्तरं मयोच्यमानं सावधानमवधारयेत्यर्थः ॥ आयुधीकृत्येति ॥ अस्योत्तरक्रियापेक्षायां स्थिता इत्यर्थात् सिध्यति । अहिभवनविधानानीत्यस्य पुँल्लिङ्गशैलशब्दविशेषणत्वं नियतलिङ्गत्वेनेति द्रष्टव्यम् । रणभूमौ रक्षसां सैन्ये स्थिते सति कथं वानराणां यूथं तत्र वर्तते । रणभूमौ वर्तने ये शस्त्रास्त्रप्रयोगकौशलबलवत्त्वशूरत्वादयः प्रकारास्तेषां सर्वेषामभावं द्योतयितुं न वर्तत इत्यनुक्त्वा कथमित्युक्तम् । वर्तत इत्यनेन शत्रूनभिमुखीकृत्यावस्थानमेव दुर्लभं किमुत युद्धप्रसङ्ग इति दर्शयति । यूथमित्यनेन सैन्यशब्दप्रवृत्तिनिमित्तशस्त्रग्रहणाद्यभावेन यूथमित्येव वक्तुमुचितं न सैन्यमितीति दर्शितम् । रक्षसां सैन्य इत्यनेन ये सैन्यस्यापि पुरतोऽवस्थातुं न शक्नुवन्ति तेषां सैन्यानां तदधिपानां इन्द्रजिदादीनां वा पुरतोऽवस्थानं शङ्कितुमपि न शक्यत इति दर्शयति । आयुधीकृत्येत्यनेन शैलानामायुधवदनायासेन प्रयोज्यत्वं दर्शितम् । अमरजयिनीत्यनेन वानरामित्रस्य मानुषस्य राघवस्यापि रक्षस्सैन्येन सह युद्धं कर्तुं न शक्यते । किं पुनस्तिरश्चां वानराणामिति द्योत्यते ॥ उपवनतरुवल्लीपल्लवोन्माथि उपवनतरुपर्णोन्मथने च सामर्थ्यं निवार्यते । अहिभवनविधानानीत्यनेन महीयसामेव शैलानामायुधीकरणमिति दर्शितम् ॥ आत्तकक्ष्य इति ॥ युद्धसन्नाहमवलम्ब्य स्थित इत्यर्थः ॥ काममिति ॥ अकामानुमतौ काममित्यव्ययम् । अयमभिप्रायः । यद्यपि वालिसुग्रीवादिपराक्रमे पर्यालोचिते सति वानरेभ्योऽस्माकमनर्थप्राप्तिस्संभावितैव प्रतिभाति तथापि तत्र न विप्रतिपद्यामहे । अस्त्वेव तेषां परिहास्यत्वं तथापि नास्माकं स्वैरासिका लभ्यते अतोऽधिकस्यानर्थहेतोर्विद्यमानत्वादिति । किन्त्वित्यनन्तरं वाक्यमध्ये कथयति— किं तदि-

**रावणः**— किं किम् । अजय्यं धनुर्धराणामाहुर्दाशरथिमिति ।

पश्य—

स्थातुं यस्य पुरन्दरो न पुरतः शक्नोति संरम्भिणो
यस्य स्थाणुनिवासशालिनि गिरौ व्यापारिता बाहवः ।
यस्मात्प्राप्य पराभवं परिभवक्षेत्रीभवन्ति ग्रहाः
शत्रुं तस्य ममाह मानुषमहो हास्यस्तपस्वी भवान् ॥ १० ॥

**अमात्यः**— किं किं रामो मानुष इति । पश्य—

अधिवसन् गुरुशासनतो वनं
रघुपतिर्न च केवलमानुषः ।
भुवनसंहरणोदयकारणं
हरिरयं हरिदश्वकुलोद्भवः ॥ ११ ॥

---

ति ॥ प्रश्नेन विवक्षितविशेषश्रवणे संभ्रमो द्योत्यते ॥ **अजय्यमिति** ॥ अद्य ये धनुर्धरा जगति वर्तन्ते तेषां मध्ये दाशरथिमजय्यं जेतुमशक्यमाहुः । न त्वजेयम् । यथाह— "जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके" इति । आहुरित्यत्र कर्तृविशेषानिर्देशात् अस्मिन्नर्थे सर्वसंप्रतिपत्तिरिति द्योत्यते । अजय्यमित्यत्रापि कर्तृविशेषानुपादानात् सर्वैरिति गम्यते । तेनाथोऽत्रयापि न जेतुं शक्यत इत्युक्तं भवति । तेन च सीतापरिग्रहोद्यमस्यानर्थानुबन्धित्वेनार्थपुरुषार्थविरोधित्वं प्रतिपादितम् । सर्वत्र किं किमित्याद्यनुवादग्रन्थेन पूर्वमेव व्याख्यानं द्रष्टव्यम् ॥ **स्थातुमिति** ॥ पुरन्दरोऽपि यस्य संरम्भमात्रेण पुरोऽवस्थातुं न शक्नोति । पुरोऽवस्थानेऽप्यशक्तस्य दूरे युद्धमिति भावः ॥ **यस्येति** ॥ आसतामिन्द्रादयः यस्य बाहुवीर्यं जगदीश्वरेणाप्यनिवार्यमित्यर्थः ॥ **यस्मादिति** ॥ परिभवक्षेत्रीभवन्ति भवक्षेत्रं जन्मगृहं परिः परित्यागं परित्यक्तजन्मगृहा भवन्तीत्यर्थः । पराजितानां हि जन्मगृहं परित्यज्य परगृहेषु भिक्षार्थं परिभ्रमणं दृश्यते । ग्रहाणामपि सर्वदा ज्योतिर्मण्डले परिचङ्क्रमणं दृश्यते । तेन रावणेनात्मनिमित्तपराभवहेतुको जन्मगृहपरित्याग आरोप्यते । एवंभूतस्य तस्य मम मानुषं शत्रुमाह भवान्यतः अतोऽत्यन्तापहास्यो भवति । भवतस्त्वेवमभिधानमुचितमेवेत्याह— **तपस्वीति** ॥ तपस्विशब्देन भीरुत्वं लक्ष्यत इति ॥ **अधिवसन्निति** ॥ अयं रघुपतिर्न केवलं मानुषः हरिर्नारायण एवायम् । विश्वात्मकस्य नारायणस्य मानुषत्वं निषेद्धुमशक्यमिति मत्वा न मानुष इत्यनुक्त्वा न केवलमानुष

रावणः— किं किं केशव इति । अहो भयस्थानमेषः ।

जित्वा ज्यायांसं स्वात्मनो देवराजं
स्वर्गे रक्षोभिर्दूषिते मामकीनैः ।
शच्यां त्रस्तायामप्सरोभिश्च सार्धं
विष्णोरेतावान् विक्रमः क्व प्रलीनः ॥ १२ ॥

अमात्यः— किं किं केन जिता देवाः ।

रावणः— किं न जानासि जेतारं देवानाम् ।

अमात्यः— न जाने ।

रावणः— ननु मया ।

---

इत्युक्तम् । सर्वात्मनो भगवतः केवलमानुषत्वं तु नास्त्येवेति तन्निषेधः कृतः ॥ हरिदश्वकुलोद्भव इति ॥ हरिदश्वस्य आदित्यस्य कुले वंशे उद्भवोऽभिव्यक्तिर्यस्य स तथोक्तः । उद्भवोऽत्राभिव्यक्तिरेव नित्यत्वादीश्वरस्य । ननु रामो नारायण एव भवतु तथाप्यसौ न देवासुरविजयिनं मां जेतुं प्रभवति अत आह— भुवनसंहरणोदयकारणमिति ॥ उदयशब्देन उत्पत्तिरभ्युदयश्चाभिप्रेयते । भुवनसंहरणादिसमर्थस्य कथं त्वज्जयासामर्थ्यमिति भावः । ननु यः स्वराज्यस्यापि नेष्टे तस्य भुवनसंहरणादिकर्तृत्वाभिधानमत्यन्तं हास्यमेव अत आह— अधिवसन्निति ॥ गुरुशासनमेव वनाधिवासे निमित्तं नाशक्तिरिति भावः ॥ जित्वेति ॥ देवराजमित्यनेन देवसहितस्येन्द्रस्य जयो दर्शितः । स्वात्मनो ज्यायांसमित्यनेन ज्यायस्त्वस्य सोदर्यान्तरसाधारण्यं निरस्यते । मामकीनैः रक्षोभिरित्यनेन देवराजजये साक्षात्कर्तृत्वं रक्षसामेवात्मनः प्रयोजककर्तृत्वमेवेति दर्शयति ॥ एतावानिति ॥ भुवनसंहारादिहेतुभूतो विक्रम इत्यर्थः । क्व प्रलीन इत्यनेन ज्यायोजयस्वर्गदूषणशचीत्रासादिसमये प्रलीनस्य विक्रमस्य सद्भावोऽपि दुष्प्रतिपादः दूरे तस्य भुवनसंहरणादिहेतुत्वमिति भावः । विष्णोरित्यनेन युष्मद्विधैर्व्यापित्वेनाङ्गीकृतस्य तद्देशासन्निधानप्रयुक्तमेव स्वविक्रमाप्रकाशनमित्यपि न वक्तुं शक्यत इति दर्शितम् ॥ अहो भयस्थानमिति ॥ अत्र काका नञर्थो द्रष्टव्यः । एवं परिपन्थिप्राबल्यप्रतिपादनरूपे भेदोपाये निराकृतेऽप्यमात्यः प्रकारान्तरेण सीतापरिग्रहनिर्बन्धात् स्वामिनं निवर्तयितुं भेदोपायमेव प्रयुङ्क्ते— किं किमिति ॥ केन जिता देवा इत्यत्रायममात्यस्याशयः वीराः परेभ्यः परिभवं न सहन्ते विशेषत आत्मनो न्यूनात् अतोऽस्य जानकीप्रातिकूल्यहेतुजं सन्तापमनुभवतः

अमात्यः— मिथ्यैतत् ।

यमवरुणकुबेरवासवादी-
नमृतभुजो जितवान्भवानयत्नः ।
कथमिव शिथिलीकृतः समाधिः
कुसुममयैः कुसुमायुधस्य बाणैः ॥ १३ ॥

रावणः— किं किं कुसुमायुधो मां प्रहरतीति प्रतर्कः ।

अमात्यः— ननु प्रत्यक्षम् ।

रावणः— सत्यमिदं प्रत्यक्षविषयः । पश्य—

पुरां जेतुः कोपाद्वमति नयने वह्निकणिकाः
कथीभूतः कामः कथय कथमद्य प्रहरति ।

---

कुसुमायुधात्पराभवो निर्विवादसिद्ध एव अतस्तत्कृतपराभवासहिष्णुत्वेन सीता-मुपेक्षितापीति । ननु मयेत्यत्र जिता देवा इत्यनुषङ्गेण वाक्यसमाप्तिः । अमात्यः स्वाभिप्रायं विवृणोति— मिथ्यैतदिति ॥ देवजयस्य मिथ्यात्वमुपपादयति— यमेति ॥ य एव भवान्पूर्वं यमादीनमृतभुजो यत्नेन जितवान् तस्यैव तवेदानीं समाधिः कुसुमायुधस्य कुसुममयैर्बाणैः शिथिलीकृतश्चेत्येतदुभयं कथमिव घटते वाक्यद्वयमध्यगतः कथमिवशब्दो वाक्यार्थद्वयस्य विरोधमाह ॥ कुसुमायुधस्येति ॥ अनेनायोमयशस्त्रग्रहणासामर्थ्येन सौकुमार्यातिशयो द्योत्यते । तेन च दुर्बलतमत्वं दर्शितम् । कुसुममयैर्बाणैरित्यनेन जयसाधनस्यासारत्वं दर्शितम् । समाधिशब्देन धैर्यं लक्ष्यते । अनेन धैर्यस्य समाधिवदचाल्यत्वं द्योत्यते । शिथिलीकृत इत्यनेन पूर्वं प्रबलैर्हेतुभिराशिथिलस्येदानीं दुर्बलेन हेतुना शिथिलत्वमत्यन्तविरुद्धमिति दर्शितम् । अयमभिप्रायः । अहमेक एव देवेषु बलीयसो बहूँल्लोकपालानयत्नेन जितवानिति हि भवतास्सिद्धान्तः । स देवेषु दुर्बलतमात्कुसुमायुधात्पराजयेनात्यन्तं विरुद्धः । विरोधे चान्यतरदवश्यं बाध्यते । तत्र सर्वलोकप्रत्यक्षेण स्मरसन्तापेन पूर्वं कृतोऽपि देवजयो लोकप्रत्ययं नाधिरोहतीति स एव बाध्यते अतो देवजयसमुत्थयशोरक्षणार्थमिदानीं स्मरोऽपि जीयतामिति । सत्यमिदमित्यत्र प्रहरणस्य प्रत्यक्षविषयत्वनिषेधार्थं काकुर्द्रष्टव्या ॥ पुरामिति ॥ कामः कथं केन प्रकारेण प्रहरति । प्रहरणे साध्ये ये प्रकाराः उपायाः प्रहर्त्रादयः तेषां सर्वेषामत्र निषेधः कथमित्यनेन कृतः । अथेत्यनेन त्वयोक्तः प्रहर्ता इदानीं नास्तीति दर्शयति । यतः पुरां जेतुः परमेश्वरस्य नयने कोपाद्वह्निकणिका वमति सति कथीभूतः कथामात्रेण

14

शरन्नीहारांशुच्छवि चतुरतारभ्रु वदनं
मनोज्ञं जानक्या जनयति विहस्तं जनमिमम् ॥ १४ ॥

अमात्यः—

अधीतवेदविद्योऽसि दायादश्च स्वयंभुवः ।
परदारास्थया किं त्वं परिवादाय कल्पसे ॥ १५ ॥

---

शोषोऽभूत् । तर्हि केन कुतोऽयं सन्तापः अत आह— **शरदिति** ॥ जानक्या वदनमेव इमं जनं विहस्तं विवशं जनयति अत्र हेतुमाह— **मनोज्ञमिति** ॥ मनोज्ञत्वे हेतुः — **शरदित्यादि** ॥ शरदि शरत्सम्बन्धादुज्ज्वलतरो यो नीहारांशुः तस्य छविरिव छविर्यस्य तत्तथोक्तम् । चतुरे तारे भ्रुवौ यस्य तत् ॥ **जानक्या इति** ॥ सीताबुद्ध्यनुसारेणोक्तम् । यत एषा कुलीनत्वाभिमानेन पातिव्रत्यभङ्गभयादस्मद्वशे न वर्तते अत एव मम सन्ताप इत्यर्थः । एवं कुसुमायुधात्पराजये निराकृतेऽमात्यस्सीतापरिग्रहनिर्बन्धाद्दशग्रीवं निवर्तयितुं तस्य लोकापवादहेतुत्वं प्रतिपादयति— **अधीतेति** ॥ त्वं परदारास्थया किं परिवादाय कल्पसे । परदारास्थायां परिवादादन्यत्फलं नास्तीति किमित्यनेन दर्शितम् । परदारास्थया न तु परदारगमनेन । यदि परदारा गम्येरन् ततस्तादात्विकसुखवाञ्छया परापवादस्सोढव्यः स्यात् तव तु सीता कदाचिदपि नानुकूला भविष्यति परिवादमात्रमेव फलमवशिष्यत इत्यभिप्रायः । कल्पस इत्यनेनैव युष्मदर्थे सिद्धेऽपि त्वमित्युपादानमन्येभ्यो राक्षसेभ्यो विशेषं द्योतयितुम् । नन्वविदुषामस्माकं तिरश्चामिव परदारगमनं परीवादहेतुर्न भवति अत आह— **अधीतेति** ॥ अधीता अवधृतार्थाश्च वेदाश्चत्वारो विद्याश्चतुर्दश च येन स तथोक्तः । स्वाध्यायविधिविहितस्य साङ्गवेदाध्ययनस्यार्थज्ञानपर्यन्तत्वं प्रथमसूत्रे विचार्य निर्णीतमित्यर्थावधारणमप्यत्रान्तः । तम् । विद्यानां सङ्ख्या चान्यत्रोक्ता । यथा— "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वो वेद इत्यपि । अर्थवेदश्चतुर्थस्तु विद्या ह्यष्टादश स्मृताः ॥" इति । अत्र विद्याशब्दो वेदव्यतिरिक्तविद्यास्थानपरः ॥ **असीति** ॥ वर्तमाननिर्देशेनाविस्मरणं दर्शयति । ननु रक्षोजातीयानामस्माकं परदारगमनं न दोषः येषामेव तद्दोषः तेषामेव परीवादः अत आह— **दायादश्चेति** ॥ स्वयं भवतीति स्वयम्भूः । अनेन दिव्यदायादत्वेन दिव्यत्वं प्रकाश्यते । न हि रक्षःक्षेत्रसम्बन्धमात्रेण राक्षसत्वं भवति । यथाह मनुः— "माता भस्त्रा पितुः पुत्रो येन जातस्स एव सः ।" अतो भवतः परदारास्थाहेतुकः परिवादो भवत्येवेति भावः । परदारगमनस्य शिष्टाचरितत्वेन

रावणः— किमयमपि परिवादः।

अमात्यः— नातः परः परीवादः।

रावणः— यद्येवम्

कृतवान् विधिना शतं क्रतूना-
मभिधेयो वचसामकर्तृकाणाम्।
मरुतां पतिरग्रजस्त्रिधाम्नो
हरिराह्वानमहल्यया किमेति ॥ १६ ॥

---

परिवादहेतुत्वं निराकरोति— **कृतवानिति** ॥ हरिरिन्द्रः अहल्यया अह-ल्याशब्देनाहल्याजारेत्येवंरूपेण शब्देन यज्ञे याज्ञिकैरद्यापि क्रियमाणमाह्वानं कि-मेति अभ्युपैति श्लाघ्यत्वेनाङ्गीकरोति। यदि परदारगमनं दोषस्स्यात्तर्हि या-ज्ञिकानामेवमाह्वानं हरेस्तदङ्गीकारश्च न घटते नैतदुभयम्। प्रत्युत याज्ञिकाना-मेवमाह्वानं परदारगमनस्य वेदाभ्यनुज्ञानं दर्शयति। अधीतवेदविद्यस्य परदा-रगमनेन परिवादो भवति यदुक्तं तत्राह ॥ **विधिना क्रतूनां शतं कृतवा-निति** ॥ इह नाविदुषः कर्माधिकारोऽस्तीत्यनुष्ठानेनार्थज्ञानमाक्षिप्यते। तथा नानधीतसाङ्गवेदस्यार्थज्ञानेऽधिकारोऽस्तीत्यर्थज्ञानेनाध्ययनं प्रयुज्यते अधीतवेद-विद्यत्वेन साम्येऽप्यस्मत्तः क्रतुशतानुष्ठानमिन्द्रस्याधिक्यमिति भावः। दायादश्च स्वयंभुव इति यदुक्तं तत्राह— **त्रिधाम्नोऽग्रज इति** ॥ यस्य नाभिकमला-त् ब्रह्माऽऽविरासीत् तस्य विष्णोरग्रजः इन्द्रः न कनीयान्पुत्रो वा। अस्माकं तु ब्रह्मपुत्रत्वमपि न मुख्यमिति भावः। विशेषान्तरं दर्शयति— **अकर्तृकाणां वचसां** वेदानामभिधेय इति। यदि वेदानां कर्ता स्यात्ततो भारतादीनां कर्ता वेदव्यासादिरिव स्मर्येत। न च स स्मर्यते काठकादिसमाख्या तु प्रवच-नादप्युपपद्यत इति वेदानामकर्तृकत्वम्। इह स्तोत्रशस्त्रादिषु स्तोतव्यत्वेनाभिधा-नेन होमसमय उद्देश्यत्वेन विधिवाक्येषु कर्माङ्गतया विधेयत्वेनार्थवादेषु कर्म-प्रशंसाशेषतया प्रशस्यतयेति बहुधाभिधेयत्वं द्रष्टव्यम् ॥ **मरुतां पतिः** ॥ अने-नेन्द्रस्य भ्रूणहत्या द्योत्यते। एवं धार्मिकत्वेन महाकुलीनत्वेन वेदाभिधेयत्वेन च याज्ञिकैरङ्गीकृतस्य इन्द्रस्य परदारगमनभ्रूणहत्यादि स्तुतिपदमेव। अस्माकं तु विधिप्रतिषेधगोचराणां परिवादास्पदमित्येतदुन्मत्तप्रलपितमितीवाचभाती-त्यभिप्रायः। एवं परदारगमनस्य परिवादहेतुत्वे निराकृते "न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु सुखावहा ॥" इति मनुवचनेन सर्वेषामेव भूतानां परदारगमनादिनिवृत्तिपूर्वकं स्वधर्ममनु-

**अमात्यः**— परिवादस्तिष्ठतु । किमस्माभिर्निर्वासित एव सर्वार्थसाधनो धर्मः ।

**रावणः**— नयज्ञ ननु साध्यापेक्षः साधनपरिग्रहः । पश्य—

यदि सुरपदकाङ्क्षा वज्रिणो वज्रपाता-
दविकृतधारश्चन्द्रहासः सखा मे ।
तव विरमतु धर्मः साधनं दुर्बलानां
बलवत इव पथ्यं सर्वमस्मद्विधस्य ॥ १७ ॥

**अमात्यः**— तथाविधैव स्वामिनः शक्तिः । शक्तिमतां भवाद्विधानां

---

तिष्ठतां स्वर्गादिश्रेयस्सिद्धिरित्यसज्जातीयानामपि स्वधर्मपरित्यागो न युक्त इत्यभिप्रायेणाह— **किमिति** ॥ **नयज्ञेति** ॥ विपरीतलक्षणया सम्बोधनम् । ननु साध्यापेक्षस्साधनपरिग्रह इत्यनेनोपायानामानियमो दर्शितः । यथोक्तं— "उपायानां तु नियमो नावश्यमवतिष्ठते । उपादायापि ये हेयास्तानुपायान्प्रचक्षते ॥" इति । धर्मादन्येन बलीयसोपायेन फलसिद्धिं दर्शयति— **यदीति** ॥ वज्रिणो वज्रपातादविकृतधार इत्यनेन चन्द्रहासस्य सुरपराक्रमेण सामर्थ्यं दर्शितम् । चन्द्रहासस्सखेत्यनेन देशकालद्रव्यमन्त्रतन्त्रर्त्विक्पुरोहितादिपरतन्त्रात्कालान्तरफलदायिनोऽपरिहार्यवैकल्याद्धर्माच्चन्द्रहासस्यानेवंरूपस्य लघुतरत्वं दर्शितम् । अत आस्तां धर्मकथेत्याह— **तवेति** ॥ बलेन सुरपदं साधयितुमसमर्थानामेव धर्मस्साधनमित्याह— **साधनमिति** ॥ नन्वेवं हिंसारूपेण धर्मेण सुरपदं साधयतस्तव कालान्तरे प्रत्यवायो भविष्यति अत आह— **अस्मद्विधस्य सर्वं पथ्यमिति** ॥ पराक्रमेण दण्डधरमपि जेतुं समर्थेन मया प्रत्यवायोऽपि सुपरिहर इत्यभिप्रायः । यथा बलवतः प्रभूताग्निबलस्यापथ्यमपि पथ्यमपथ्यफलं न करोतीत्यर्थः ॥ **तथाविधैवेति** ॥ देवस्य शक्तिः सकलाभीष्टसम्पादयित्री नात्र संशय इत्येवकारेण दर्शितं तथापि साध्वाचारपरित्यागो न युक्त इत्यभिप्रायेणाह— **शक्तिमतामिति** ॥ साधूनामाचारः साध्वाचारः ॥ **भवद्विधानामिति** ॥ सम्बन्धमात्रविवक्षया प्रयुक्ता षष्ठी सम्बन्धविशेषे कर्तृकर्मभावे पर्यवस्यति । भवद्विधैस्साध्वाचारः परित्यक्त इति यत्तन्न युक्तमिति वाक्यपर्यवसानम् । अयुक्तत्वे हेतुः शक्तिमतामिति । यतश्शक्तिमतां साध्वाचारो महत्तरं भूषणं अतस्तत्परित्यागो न युक्तः । किञ्चायं लोकस्साध्वाचारपरित्यागेऽयमसाधुरिति ज्ञात्वा विद्यमानस्यापि गुणस्यासत्त्वं मन्वीत इत्यभिप्रायः । न केवलमात्मनोऽसाध्वाचारः दाशरथेर्धर्मदारापहरणेन साध्वाचारोपरो-

साध्वाचारः परित्यक्तः । ननु राजर्षिवृत्तपरायणे रामे साधुत्वमुपेक्षणीयम् ।

रावणः— किं किं रामः साधुरिति । पश्य—

येनानीयत ताटका यमपदं भित्त्वा स्थितिं धन्विनां
छन्नं यस्समधत्त वालिनि शरं दत्तेक्षणे भ्रातरि ।
स क्षात्रं च धनुर्जटाश्च यमिनां वोढा विरुद्धं मिथो
रामस्साधुरसाधवो वयमहो बालाः परप्रत्ययाः ॥ १८ ॥

अमात्यः— देव ममैतावानधिकारः ।

रावणः— कथय कस्तवाधिकारः ।

---

धोऽपि कृतः । तदिदमत्यन्तमयुक्तमित्यभिप्रायेणाह— नन्विति ॥ किमोऽर्थे ननुः । रामे यत्साधुत्वं तदप्युपेक्षणीयं परित्याज्यं किम् । ननु रामे साधुत्वमेव नास्ति अत आह— राजर्षीति ॥ वने धर्मदारैस्सह तपश्चरणं राजर्षिवृत्तं तस्मिन्परायणेऽनन्यबुद्ध्या तदनुष्ठानतत्पर इत्यर्थः । आत्मनस्साध्वाचारपरित्यागे शक्तिमत्त्वं हेतुरस्तु अन्येषां साध्वाचारोपरोधे द्वेषादृते नान्यो हेतुरस्तीत्यभिप्रायः ॥ येनेति ॥ येन धन्विनां स्थितिर्मर्यादा । "मत्तं प्रमत्तमुन्मत्तं वृद्धं बालं स्त्रियं जडम् । प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥" इति नियमितां भित्त्वा ताटका यमपदमनीयत तथा यो भ्रातरि सुग्रीवे दत्तेक्षणे दत्तं निहितमीक्षणं येन वालिना तथाभूते वालिनि छन्नं भयादन्तर्हितस्सन् शरं समधत्त । शरसन्धानेन तत्कार्यभूतो निग्रहो लक्ष्यते । अत्रापि धन्विनां स्थितिं भित्त्वेत्यनुषज्यते । अत्रान्योन्मुखवधो मर्यादाभङ्गः । ननु रामस्य सकलोऽप्ययं दोषः तपसा विनश्यतीत्यत आह— क्षात्रमिति ॥ क्षात्रं धनुः वोढेत्यनेन तपोविरुद्धं हिंसादिकमुपलक्ष्यते । यमिनां जटाश्चेत्यनेन तपस्विनां वेषमात्रं परिगृहीतं न तु नियमादिकमिति द्योत्यते । तद्दर्शनसमयेऽनौचित्यबुद्ध्युत्पादनमत्र विरोधः । न तु सहानवस्थानादिलक्षणः । स रामस्साधुरित्यन्वयः । वयमसाधवः । अत्र साधुत्वासाधुत्वयोर्विरोधान्निषेधार्थकाकुर्द्रष्टव्या ॥ परप्रत्यया इति ॥ स्वार्थमजहता परशब्देन परवचनं लक्ष्यते । परवचनं प्रत्ययः प्रमाणं साधुत्वादिज्ञाने येषां ते तथोक्ताः । अनेन स्वयमेव वस्तुतत्त्वावधारणे सामर्थ्याभावो दर्शितः । परशब्देन परगताप्तत्वानाप्तत्वादिविशेषापरिज्ञानात् तत्र साधुत्वासाधुत्वयोर्विरोधशून्यत्वं दर्शितम् । अत एव बाला इत्युक्तम् ॥ कथयेति ॥ अधिक्रियत इत्यधिकृतं कर्माधिकारः । पूर्वं जानकीसङ्गमोपायनिरूपणा-

अमात्यः— त्रिवर्गप्रापणम् ।

रावणः— कस्त्रिवर्गः ।

अमात्यः— धर्मार्थकामाः ।

रावणः— विभज्य कथय ।

अमात्यः— धर्मः ।

रावणः—

दण्ड्यानां दण्डनोऽन्निद्रो दण्डैर्मे दण्ड्यते यमः ।
स्वर्गैश्वर्यं मदायत्तं धर्मं किं सञ्चिनोम्यहम् ॥ १९ ॥

कस्ततोऽन्यः ।

अमात्यः— अर्थः ।

रावणः — किमर्थेन साध्यम् ।

अमात्यः— कोशदण्डयोरभ्युच्छ्रयः ।

---

र्थं तूर्णमाहूयतामित्यनेनामात्य आहूतः । तत्रैतत्प्रतिपादितं सीतासङ्गमस्यासुखोदर्कत्वं निराकृतम् । अथैतावानधिकार इति तदुक्ताधिकारप्रसङ्गेन तस्य सीतासङ्गमोपायचिन्ताधिकारमापादयितुं कस्तत्राधिकार इति प्रश्नः कृतः । त्रिवर्गप्रापणमित्यादि धर्म इत्यन्तं सुगमम् ॥ दण्डयानामिति ॥ अहं धर्मं किं किमर्थं सञ्चिनोमि । इह तव विरमतु धर्म इत्यत्रोक्तमेव धर्मानुष्ठानस्य वैफल्यं कामपुरुषार्थेऽमात्यस्याधिकारं परिशेषयितुमनूद्यत इत्यपौनरुक्त्यम् । तत्रोपात्तदुरितक्षयफलानां कृच्छ्रचान्द्रायणादीनामकरणान्यथाकरणनिमित्तप्रत्यवायपरिहारफलानां नित्यनैमित्तिकानां चानुष्ठानस्य वैफल्यमाह— दण्ड्यानामिति ॥ न केवलं यमोऽस्मद्दण्डने न शक्तः अपि तु मे दण्डैर्मया कृतैर्दण्डनैर्मे सैन्यैर्वा यमो दण्डयते च । दण्डनस्य वर्तमानत्वेन कारागृहबन्धनादिदण्डनस्य प्रत्यक्षत्वं दर्शितम् । यमदण्डने हेतुमाह— दण्ड्यानां दण्डनोऽन्निद्र इति ॥ यतो मयि शासितरि सति दण्ड्यदण्डनं ममाधिकार इति मत्वा तदर्थमुद्युक्तः अत एव मया दण्ड्यते अद्यप्रभृत्यन्यैव दण्ड्यदण्डनाप्रक्रिया पापीयोभिस्सुखं वर्तितव्यं अन्ये दण्डनीयाः एतावन्तं कालं पापीयोदण्डनस्य फलं चानेनानुभवितव्यमिति बुद्ध्या मया दण्ड्यत इत्यर्थः । यानि स्वर्गादिफलानि यागादिकर्माणि तदनुष्ठानमपि विफलमित्याह— स्वर्गेति ॥ कोशदण्डयोरभ्युच्छ्-

रावणः—

दण्डो मे रजनिचरा नभश्चरन्तः
कोशो मे भवति गुरुः कुबेर एव ।
आयत्तं मयि जगतां त्रयं समग्रं
भूतार्थं कथय करोति किं ममार्थः ॥ २० ॥

कः पश्चिमः ।

अमात्यः— कामः ।

रावणः— तदर्थिनो वयम् । तेन ममाभिलाषः पूरणीयः ।

---

यस्य सिद्धत्वं दर्शयति— दण्ड इति ॥ दण्डः सैन्यम् । रजनिचरा इत्यनेन सर्वप्राणिनामुपरतिकाले रजन्यामपि सञ्चरणेनोत्साहसम्पन्नत्वं दर्शितम् । नभश्चरन्त इत्यनेन सर्वत्राप्रतिहतसञ्चारत्वं दर्शितम् ॥ मे कोशः कुबेर एवेति ॥ कुबेरस्य कोशत्वारोपणेन तदीयमहापद्मादिनिधिसर्वस्वस्यापि आत्माधीनत्वं दर्शितम् । गुरुर्ज्यायान् अनेन तदीये धने आत्मनोऽपि स्वत्वं दर्शितम् । कोशदण्डयोर्हि फलं जगद्विजयः तदपि सिद्धमेवेत्याह— आयत्तमिति ॥ यदप्युक्तादन्यत् दुर्गनगरपुरप्रासादादिनिर्माणमर्थसाध्यं तदपि सर्वं सिद्धमेवेत्याह— समग्रं भूतार्थमिति ॥ भूतस्सिद्धोऽर्थः प्रयोजनं यस्य तत् भूतार्थम् । प्रयोजनं चार्थसाध्यप्रासादाद्युपभोगोऽभिप्रेतः । अतो ममार्थः किञ्चिदपि न करोति कृते करणायोगात् । यद्यतोऽन्यदप्यर्थसाध्यमस्ति तत्कथयेत्युपस्कृत्य व्याख्येयम् ॥ काम इति ॥ काम्यत इति कामः कामपुरुषार्थः कान्तासङ्गमादयः । अथानया प्रश्नोत्तरपरम्परया अमात्येन स्वाधिकारत्वेन कामपुरुषार्थप्रापणेऽङ्गीकृते सामोपायेन तमभिनन्द्य सीतासङ्गमोपाये नयषट्कोपायचतुष्टयप्रयोगनिपुणं तममात्यं प्रवर्तयितुं कामपुरुषार्थस्य साध्यत्वं तत्प्रसाधने साहाय्यकापेक्षां चाह— तदर्थिन इत्यादिना ॥ तदर्थिन इत्यत्र तु प्रत्ययार्थस्ताच्छील्यं विवक्षितम् । तेन च दिवानिशं तदभ्यर्थनैकशीलस्यात्मनस्सन्तापातिशयः प्रदर्शितः । धर्मार्थयोरिवात्मपौरुषं कामपुरुषार्थप्रसाधनाय न पर्याप्तमिति च द्योत्यते । अथ विस्पष्टं तत्र साहाय्यकं प्रार्थयते— तेनेति ॥ तेन कामेन ममाभिलाषो भवता पूरणीय इत्यर्थः । अभिलाषस्य पूरणं अभिलाषविषयप्रापणम् । अयमभिप्रायः । यस्मिन् भवता स्वाधिकारत्वेन स्वयमेव प्रयतितव्यं तदेव मयाऽभ्यर्थ्यते तदर्थमेव च भवानाहूत इति । अथामात्यः स्वामिना वैदेहीसङ्गमोपायचिन्तायां ससान्त्वमभ्यर्थितस्सन् सीतासङ्गमस्य

अमात्यः— तत्राप्यतिशये मनः कर्तव्यम् ।

रावणः— तथैव क्रियते ।

अमात्यः— यद्येवं

अनया कृतमन्यभुक्तया
वसुधागोचरया विरक्तया ।
अतिशायि महेन्द्रयोषितां
वपुषा किं न तवावरोधनम् ॥ २१ ॥

रावणः— मूढ नात्र परः प्रमाणम् ।

---

दुःखोदर्कत्वं पूर्वमेव प्रतिपादितं दुस्साधत्वं तु प्रतिपाद्यमानमस्य रागान्धतया न प्रत्ययास्पदमित्येतद्द्वयमपि न वक्तव्यमिति निश्चित्य जानक्या अननुरूपत्वप्रतिपादनेन तत्सङ्गमोपायाचिन्तां प्रत्याख्यातुमारभते— तत्रापीति ॥ यथा धर्मार्थयोर्वर्णाश्रमादिविभागेन व्यवस्था तथा कामेऽपीत्यपिशब्देन दर्शितम् । सौन्दर्यादिभिरन्याङ्गनाभ्योऽतिशायिनि स्त्रीरत्ने मनः कर्तव्यमित्यर्थः ॥ तथैवेति ॥ अतिशायिन्येव स्त्रीरत्ने मनः क्रियत इत्यर्थः ॥ यद्येवमिति ॥ यद्यतिशायिनि स्त्रीरत्नेऽभिलाषः तर्ह्यनया कृतम् । कृतमित्यव्ययं निषेधार्थम् । तर्हि जानक्यामभिलाषो न समुचितः अनुचितविषयप्रवृत्तस्याभिलाषस्य पूरणं न ममाधिकारः प्रत्युत ततो भवन्तं निवर्तयितुमेवोपायोऽन्वेष्टव्य इति भावः । अतिशयाभावं दर्शयति— वसुधागोचरयेति ॥ वसुधा गोचरः आश्रयो यस्य सा तथोक्ता । अनेन मानुषीत्युक्तं भवति । त्वदधीनाभ्यो दिव्याङ्गनाभ्योऽस्या मनुष्यजातीयत्वेनैव तावन्महानपकर्ष इत्यभिप्रायः । यदि मनुष्याङ्गनापि कन्यका भवेत् ततस्तस्याः परिग्रहस्समुचितः इयं त्वन्येन चिरकालमुपभुक्ता इत्यस्थान एव भवतोऽभिनिवेश इत्यभिप्रायेणाह— अन्यभुक्तयेति ॥ यद्यन्यभुक्तापि रक्ता भवेत् ततस्सह्येतापि पूर्वोक्तं दोषद्वयम् । इयं तु भवत्यत्यन्तविरक्ता इत्यवमानावह एवास्यामनुराग इत्यभिप्रायेणाह— विरक्तयेति ॥ एवं तर्ह्यन्यां लोकोत्तरगुणशालिनीं काञ्चिदस्मदभिलाषयोग्यां कथयेत्यत आह— तवावरोधनम् ॥ मण्डोदर्याद्या भार्याः ॥ वपुषा महेन्द्रयोषितामतिशायि न किमिति ॥ तवावरोधनस्य महेन्द्रयोषित एव स्पर्धार्हाः न तु मनुष्याङ्गना इत्यपि द्योतयितुं महेन्द्रयोषितां प्रतियोगित्वेनोपादानम् । अतः परिपूर्ण एव भवतः काम इति न तत्प्रापणेऽस्माभिः यत्नः कार्य इत्यभिप्रायः । अथ स्वाभिप्रायाननुरूपं वचनमाकर्ण्य दशग्रीवः कुपितो भूत्वा प्रत्याचष्टे— मूर्खेति ॥ मूर्ख

परभुक्तरसा पद्मा परं रत्नं धराकरम् ।
भारती च विरक्तेति त्यज्यते किमयं नयः ॥ २२ ॥

अमात्यः— ( आत्मगतम् ) अतः परमायुधानि गतिः । प्रज्ञासाहचर्यमतिक्रान्तो देवः ।

रावणः— गच्छ रामवार्तावबोधनार्थं साम्प्रतं चारानाज्ञापय ।

अमात्यः— यदाज्ञापयति देवः ।

---

कामस्वभावानभिज्ञ नात्र कामे परः परोपदेशः प्रमाणम् । परशब्देन स्वार्थमजहता परोपदेशो लक्ष्यते । इह कस्यचित् कस्याञ्चित् स्वत एवाभिलाषो भवति । न हि काश्चिदपि कुत्राभिलाषः कर्तव्य इति परं प्रति परिपृच्छति । नापि सौन्दर्यादिगुणसम्पन्ने स्त्रीरत्ने परेणोपदिश्यमानेऽपि नियमेनाभिलाष उत्पद्यमानो दृश्यते । दृश्यते च सौन्दर्यादिरहितायामपि स्त्रियां कस्यचिदभिलाषः यथेन्द्रस्याहल्यायामिति परभुक्तयेत्येतन्निराकरोति— परेति ॥ पद्मा धनधान्यादिसम्पदधिष्ठात्री देवता धनधान्यादिभोग एव तस्या भोगः सा परैर्भुक्तेति किं त्यज्यते । पित्रा भुक्ता पुत्रेणापि परिगृह्यमाणा दृश्यते किं पुनरन्यैरित्यभिप्रायः । वसुधागोचरयेत्येतन्निराकरोति— परमिति ॥ धरा आकरो यस्य तद्धराकरम् । परमुत्कृष्टं सूर्यकान्तपद्मरागवैडूर्यादि तदपि धराकरमिति किं त्यज्यते अलङ्क्रियत एव । विरक्तयेत्येतन्निराकरोति— भारतीति ॥ भारती कविताव्याख्यानवादजल्पवितण्डानयव्यवहाराद्यधिष्ठात्री देवता सा बहुभिर्जन्मभिस्सेव्यमानापि कदाचित् कञ्चिदनुगृह्णातीति तत्प्रसादस्यानीषत्करत्वमभिप्रेत्य विरक्तेत्युक्तम् । सापि विरक्तेति किं त्यज्यते । सर्वदा सर्वप्रकारेण सर्वैस्सेव्यत एव । यत एवं ततोऽयं नयः । अयमित्यनेन जानकीविषयोऽभिलाषः परामृश्यते । अयमभिलाषो नयः न्याय्य इति यावत् । अथामात्यस्स्वामिनं कुपितं दृष्ट्वा स्वयमेव विमृशति— अतः परमिति ॥ गतिरुपायः । एतावन्तं कालं यद्यन्मया हितमुपदिष्टं तत्तत्खण्डने दुस्तर्क एवास्य गतिरभूत् । यद्यतः परं पूर्वोक्तसकलदुस्तर्कखण्डनेनास्मदीयं सिद्धान्तं स्थापयिष्यामि ततोऽस्यास्मद्दमने आयुधेभ्योऽन्या काचित् गतिर्नास्ति । तथा चास्मत्सिद्धान्तसमर्थनफलमस्मात्पापीयसो विनाश एव । स च पूर्वमस्मदधिकारभङ्गभयादङ्गीकृतः । अनुष्ठितश्चाधिकारः । अतोऽस्माभिः पूर्वं श्रेयस्करत्वेन निरूपितो यो रामाद्विनाशः स एवास्मत्कुलोचितस्वामिहितोपदेशकरणेन निर्दोषत्वादङ्गीकर्तव्यः । तस्मादचिरेण कालेन राघवशस्त्रधारातीर्थस्नानपूर्वकमेकान्तविध्वंसिनामिमं देहं परित्यज्य श्रेयः प्राप्स्यामीत्येतत् सर्वमभिप्रेत्य अतः परमायुधानि गतिरित्युक्तम् । प्रज्ञासाहचर्यमतिक्रान्त इत्यनेन स्वामात्यबुद्ध्या

न भयेन युधो न पक्षपातात्
तव शत्राविदमुक्तमप्रियं ते ।
असिमर्पयतोऽपि कण्ठदेशे
सुजनः शंसति पथ्यमेव भर्तुः ॥ २३ ॥

( निष्क्रान्तः )

**रावणः**— वर्षवर अशोकवनिकामार्गमादेशय ।

**वर्षवरः**— यदाज्ञापयति महाराजः । इत इतः ।

( उभावुद्यानप्रवेशं रूपयतः )

**रावणः**— ( सर्वतो विलोक्य ) अहो परिचयपरवशता चित्तस्य । अत्रासीनापि सीता रामतपोवनमेव चिन्तयति । अत्र हि ।

---

निग्रहाकरणं निरस्यते । अथ दशग्रीवः स्वाभिलाषतसाधनाननुकूलं तमाज्ञाय कुपितो भूत्वा विसर्जयति ॥ **गच्छेति** ॥ अथामात्यश्चरनियोगार्थमाज्ञापितस्सन् गमनावकाशलाभेन कृतार्थो भूत्वा शत्रुपक्षपातादिकं स्वापराधं परिहरन्नाह— **न भयेनेति** ॥ यदिदं तवाप्रियमुक्तम् । मयेत्यर्थात् सिध्यति । हितमुपदिष्टमिति वक्तव्ये रावणबुद्ध्या अप्रियमित्युक्तम् । तत्तव शत्रौ मे पक्षपातान्न नापि मे युद्धाद्भयेन च । किन्तु त्वयि पक्षपातादेवेत्यर्थात्सिध्यति । सीतादानोपदेशस्य शत्रुपक्षपातो युद्धाद्भयं च हेतुत्वेन संभावितमित्युभयनिषेधः कृतः । स्वामिपक्षपात एव हेतुरित्येतदर्थान्तरन्यासेनोपपादयति— **असिमिति** ॥ सुजनो भर्तुः पथ्यं हितमेव शंसति न तु कदाचिदपि प्रियमप्यहितं शंसति इत्येवशब्देन दर्शितम् । भर्तुरित्यनेन वृत्तिदानहेतुकमुपकर्तृत्वं द्योत्यते । सुजन इत्यनेन उपकाराविस्मरणं दर्शितम् । सुजनस्य भर्तृहितोपदेशित्वं न केनापि हेतुना निवर्त्यत इत्याह— **असिं कण्ठदेशेऽर्पयतोऽपीति** ॥ हिताहितविचारशून्येनापि भर्त्राप्रियश्रवणकुपितेन निग्रहाय कण्ठदेशेऽसावर्पितेऽपि न प्रियवचनेनात्मानं विमोचयितुमिच्छति तदाप्यात्मविनाशमविगणय्य भर्तृहितमेव करोतीत्यभिप्रायः । अथ दशग्रीवः वर्षवरेण सहाशोकवनिकां प्रविश्यातिमनोहरं तदाभोगमालोक्य तस्य वैदेहीकुतूहलहेतुत्वाभावेन परिखिन्नो भूत्वाह— **अहो इति** ॥ परिचयः परिचयवासना तया कृतेन परिचिते वस्तुनि औत्सुक्येन यत्पारवश्यं परिचितवस्त्वधीनत्वं तत् अहो अतिकष्टं तत् । अतिकष्टत्वं चात्र मनोहरैरपि पदार्थान्तरैस्तस्य दुरपनयत्वम् । एतदेवोपपादयति— **अत्रेति** ॥ अत्रेत्यनेन प्रत्यक्ष-

एते स्वर्गविभूषणं विटपिनो मन्दाकिनीरोधसो
धीरं पश्यति देवभर्तरि महीं नेतुं मयोन्मूलिताः ।
एष्वाचुम्बति राजहंसमिथुनं हेमाम्बुजान्येकतो
दृष्ट्वा पल्लवमेकतः सकलिकं माद्यन्ति पुंस्कोकिलाः ॥

वर्षवरः— ( आत्मगतं ) चम्पकसौरभ्यमिव षट्पदमाला पश्यति रावणविभवं सीता ।

रावणः— ( कामावेशं निरूप्य )

जनतामशोकसहकारमञ्जरी-
शरमात्रया सरभसं भिनत्ति यः ।

---

दृश्यमानरामणीयकविशिष्टत्वेन उद्यानस्योपादानम् । आसीनापीत्यनेन उद्यानाभोगदर्शननैरन्तर्यं दर्शितम् । रामशब्देनात्युज्ज्वलाभरणादिभिस्स्वरूपतश्च कमनीयतमस्यात्मनो दर्शनेनानीदृशरामपरिचयपारवश्यानपगमस्यातिकष्टत्वं सूच्यते । तपोवनमित्यनेन तपस्विनां भोगनिरपेक्षत्वेनाशेषभोगसाधनशून्यत्वं तस्य दर्शितम् ॥ चिन्तयतीति वर्तमाननिर्देशेन परिचयपारवश्यस्य तदवस्थत्वं दर्शितम् । अत्रेस्वत्रान्तर्णीतं विशेषं दर्शयति— एत इति ॥ मया पूर्वं देवभर्तरि धीरं पश्यति महीं नेतुं मन्दाकिनीरोधस उन्मूलिता ये त एते विटपिनो दृश्यन्ते । देवभर्तरीत्यनेन देवैस्सहितस्याप्युन्मूलननिरोधाशक्तिर्दर्शिता । धीरमित्यनेनाशक्तिकृतं मर्षणं लक्ष्यते ॥ स्वर्गविभूषणमिति ॥ पूर्वमेभिस्स्वर्गस्य लोकान्तरोत्कृष्टत्वमभूत् इदानीं तु लङ्काया एतैर्लोकान्तरोत्कृष्टत्वमिति दर्शितम् । एकतः राजहंसमिथुनमेषु हेमाम्बुजानि एषां कुसुमतयावस्थितानि हेममयान्यम्बुजानि आचुम्बति परिमलाघ्राणनपूर्वकं मधु पिबतीत्यर्थः । एकतः पुंस्कोकिलाः पुंस्कोकिलशब्दः कोकिलावान्तरजातीयवचनः । "पुमान् स्त्रिया" इत्येकशेषः । मिथुनीभूय सकलिकं पल्लवं दृष्ट्वा माद्यन्ति । अनेनानुक्तान्यपि मधुकरगानमन्दमारुतादीन्युद्दीपनविभावान्तराण्युपलक्ष्यन्ते । अत्र मिथुनशब्देन एकशेषेण च संभोगश्शृङ्गारो विप्रलम्भपोषकत्वेनोपात्त इति द्रष्टव्यम् । यत एभिर्दृश्यमानैर्जानक्याः कौतुकलेशोऽपि न भवति अतः कष्टं परिचयपारवश्यमिति सम्बन्धः ॥ चम्पकेति ॥ षट्पदानां चम्पकेषु सान्निध्यादर्शनात् तद्विरक्तिरनुमीयते । अन्येषां हृद्यमपि किञ्चित्कस्मैचित् न रोचते अहृद्यमप्यन्येषां किञ्चित्कस्यचित् वास्वाद्यं भवति । न च मध्वभाव एवात्र हेतुः तदभावेऽपि सौरभ्यानुभवस्य दुर्निवारत्वात् ।

अधुना स किं पुनरयुग्मसायकः
सुरलोकवृक्षसुमनःशिलीमुखः ॥ २५ ॥

वर्षवर ननु सीता शिंशपाश्रिता ।

वर्षवरः— देव अथ किं ।

रावणः— सीता मयि

नयति नयने सावज्ञं मां करोति कराहृतां
श्रुतिमसहना श्रोत्रानन्दं वचो मयि जल्पति ।
विलपति पुरो रामं बद्धाञ्जलौ मयि तिष्ठति
प्रतिदिनमहं जाने नास्याः प्रसादनसाधनम् ॥ २६ ॥

( ततः प्रविशति शिंशपाश्रिता सीता लतावलयान्तरिता मण्डोदरी चेटी च )

---

अतो जातिस्वभाव एवात्र हेतुः । अथ स्वानुज्ञातसर्वर्तुसन्निधानकृतामुद्यानश्रियं वीक्ष्य द्विगुणितस्मरसन्तापस्तन्निमित्तं विचारयति— **जनतामिति** ॥ मात्रशब्देन एकदेशवाचिना सुरतरुसुमनांस्यपेक्ष्य न्यूनत्वं लक्ष्यते । भूमिप्रसवसहकारादिसुमनश्शरैरपि यस्सरभसं ससंरम्भं जनतां भिनत्ति अधुना सोऽयमयुग्मसायकः पञ्चशरः पञ्चसुरतरुसुमनःशिलीमुखस्सन् जनतां भिनत्तीति किं पुनरुच्यते । उत्कृष्टसाधनलाभेन तत्साध्यस्य भेदनस्यातिशयो न वर्णयितुं शक्य इत्यर्थः । अधुनेत्यनेनात्मनैव तस्य दिव्यशरसम्पत्सम्पादिता इति दर्शयति ॥ **सीता मयीति** ॥ अत्रोत्तरवाक्ययोर्मयि जल्पति मयि तिष्ठतीति दर्शनात् पश्यतीति विशेषणपदमध्याहर्तव्यम् । अनुदिनं पुरोदेशं प्राप्य निसर्गसुन्दरे रमणीयवेषाभरणे च मयि सानुरागं पश्यति सति सीता सावज्ञं नयने नयनद्वयं मां नयति प्रापयति । अत्र सावज्ञत्वं विधेयम् । सहसा मद्दर्शने सति सावज्ञा भूत्वा पराङ्मुखी भवतीत्यर्थः । तथा पराङ्मुख्यास्तस्याः आभिमुख्यसम्पादनार्थं "उन्नमय्य त्वं गमय वदनाम्भोजमुत्तिष्ठ वाले मालेयार्द्रां कुरु कुचतटीं वारि गाहस्व गाङ्गं" इत्यादि श्रोत्रानन्दं वचो मयि जल्पति सति श्रुतिं कर्णद्वयं कराभ्यामावृतां करोति । अत्र हेतुः— **असहनेति** ॥ एवं वचसो वैफल्ये जाते प्रणाम एव प्रसादनसाधनमिति मत्वा बद्धाञ्जलौ मयि पुरतस्तिष्ठति सत्यत्यन्तं परोक्षं रामं विलपति । आर्यपुत्र अनन्यशरणां मामस्मादतिघोराद्व्यसनात्परित्रायस्वेत्यादयो विलापाः । यत उक्तानां विपरीतसाध्यहेतुत्वं अतः प्रतिदिनमभ्यस्यन्नप्यस्याः प्रसादनसाधनं किमिति न जाने इति । अथ सीतावेक्षणोद्यताभिर्निशाचरीभिः क्रियमाणायाः

सीता— अहो रक्खसजादीणं णिग्घिणदा ।

अहो राक्षसजातीनां निर्घृणता ।

मण्डोदरी— हञ्जे एसो महाराओ । चिंतिदं दाणिं पेक्खिदव्वं संवुत्तं ।

हञ्जे एष महाराजः । चिन्तितमिदानीं प्रेक्षितव्यं संवृत्तम् ।

रावणः— ( उपेत्य ) ननु देवि ।

सीता— ( आत्मगतम् ) किं णु खु पावो भणिस्सदि ।

किं नु खलु पापो भणिष्यति ।

रावणः— देवि ।

स्नात्वा गङ्गापयसि विहितोपायना कल्पवृक्षैः
कैलासे वा शिखरिणि वने नन्दने वा मनोज्ञे ।
दुष्प्रापां वः सुतनु तपसा निर्विश स्वर्गलक्ष्मीं
पातिव्रत्यं परिघ इव ते स्वर्गमार्गं रुणद्धि ॥ २७ ॥

सीता— अघं दे सग्गमग्गं अज्जउत्तं अणुव्वदा णरअं एव्व पविसदुकामम्हि ।

अघं ते स्वर्गमार्गं आर्यपुत्रमनुव्रता नरकमेव प्रवेष्टु-

---

पीडायाः दुरन्तत्वमनुचिन्त्य सीता निरूपयति— अहो राक्षसजातीनां निर्घृणतेति ॥ यत आसां दयालेशोऽपि नास्ति अतो दुरन्तत्वमस्य व्यसनस्येति । अथ मण्डोदर्याह— एष महाराजः चिन्तितमिदानीं प्रेक्षितव्यं संवृत्तम् ॥ निरुद्धायां सीतायां महाराजस्य मदनचापलं प्रेक्ष्यापहसिष्याव इति यच्चिन्तितं तत् प्रेक्षितव्यमिदानीं संवृत्तम् । ननु देवीत्यत्र सम्बुद्ध्या यत्किञ्चिद्वक्तुमारभत इति विज्ञाय सीता निरूपयति— किं नु खलु पापो भणिष्यतीति ॥ देवीत्यादि ॥ असत्पुरप्रवेशात् पूर्वं रामेण सह वनवासक्लेशमनुभवन्ती त्वमिह लोके तपसा दुष्प्रापां इहैव मया सह स्वर्गलक्ष्मीं निर्विश । अनुभवप्रकारमाह— स्नात्वेति ॥ परिघ इव ते पातिव्रत्यं स्वर्गमार्गं रुणद्धि ॥ यथा परितो हननेन शत्रोरभिगमनं परिघो रुणद्धि तथा ते पातिव्रत्यं स्वयमभिमुखं स्वर्गमार्गं रुणद्धीत्यर्थः ॥ अघं ते स्वर्गमार्गमार्यपुत्रमनुव्रता नरकमेव प्रवेष्टुकामास्मि ॥ अघशब्देन

कामास्मि ।

रावणः— देवि तव कारणात्सर्वमन्तःपुरं त्यजामि ।

मण्डोदरी— सुमरदु सुमरदु दाणिं महाराओ ।

स्मरतु स्मरतु इदानीं महाराजः ।

सीता— ण हि ण हि केवळं अन्तेउरं एव्व । मम किदे तुए जी-
विअं वि परिच्चइदव्वं भविस्सदि ।

न हि न हि केवलमन्तःपुरमेव । मम कृते त्वया जी-
वितमपि परित्यक्तव्यं भविष्यति ।

मण्डोदरी— अहो परुसवअणा मणुस्सजादी ।

अहो परुषवचना मनुष्यजातिः ।

रावणः— सत्यं मे जीवितं हरति कामः ।

सीता— ण हि ण हि कामादपि सुरूपो अज्जउत्तो ।

न हि न हि कामादपि सुरूप आर्यपुत्रः ।

रावणः— ( प्रहस्य ) हहह ।

---

तत्कार्यं नरकं लक्ष्यते । त्वत्सम्बन्धिस्स्वर्गो नरकमेव आर्यपुत्रसम्बन्धात् मम नरकमपि स्वर्ग एवेति ॥ देवीति ॥ तव कारणात् ॥ त्वत्सम्बन्धिनः कारणात् । सम्बन्धश्चात्र साध्यसाधनभावः । कारणं चान्तःपुरत्यागः । तेन साध्यं सीताजायात्वसम्पादनम् । ल्यब्लोपे पञ्चमी । तदयमर्थः । त्वां जायात्वेन सम्पादयितुं सर्वान्तःपुरत्यागं कारणं परिकल्प्य सर्वमन्तःपुरं त्यजामि यत्स्वविच्छेदं करोमि वर्तमाननिर्देशेन त्यागानन्तरमेवाहमनुकम्पनीय इति दर्शयति । सर्वशब्देन प्रधानमहिषीमपि त्यजामीति दर्शितम् । अथ मण्डोदरी सर्वशब्दसूचितमात्मत्यागं विबुध्योपालभते ॥ स्मरतु महाराजः ॥ आत्मानमिति शेषः । अनेनानात्मज्ञत्वं तस्य गम्यते । उन्मत्तस्यानात्मज्ञस्य तवैवंविधं प्रलपितं न किञ्चिद्बहुमन्य इत्यभिप्रायः ॥ न केवलमन्तःपुरमेव मम कृते जीवितमपि परित्याज्यं भविष्यति ॥ अचिरेणार्यपुत्रस्तव जीवितं मम कृते हरिष्यतीत्यर्थः । अथ सीताभिप्रायमजानन्निव श्लोकस्यानुवदति— सत्यमिति ॥ न हि न हीत्यत्र जीवितं हरतीत्यनुषज्यते । सीता स्वाभिप्रायं विवृणोति— कामादपि सुरूप आर्यपुत्र एष जीवितं हरतीति । अथ काकुसनाथेन वचनवृत्तिविशेषेण सान्तर्हा-

युधि वनचरवृत्तेरायुधं क्षत्रबन्धो-
स्तृणमयमविषह्यं रावणेनेति युक्तम् ।
किसलयसुकुमारं वक्षसा येन सोढं
क्षितिधरपतिपक्षच्छेदि वज्रं मघोनः ॥ २८ ॥

मण्डोदरी— को णु खु महाराअस्स उवक्कमो । केण वि एसा अणुणअं ण गेह्णइ ।

को नु खलु महाराजस्योपक्रमः । केनापि एषा अनुनयं न गृह्णाति ।

रावणः— देवि अयमञ्जलिः ।

गन्धर्वदैत्यगगनेचरयक्षनाग-
कन्यासनाथमवरोधनमस्मदीयम् ।
सर्वस्वमेव तव सुन्दरि दासकृत्य-
मालम्बते यदि तवास्ति मयि प्रसादः ॥ २९ ॥

---

सपूर्वकं सीतावचनमाधाक्षिपति— **युधीति** ॥ मयेत्यनुक्त्वा रावणेनेति स्वनामकीर्तनं आत्मनो लोकोत्कृष्टत्वमवगमयतीत्यर्थान्तरसङ्क्रामितवाच्योऽयम् । वनचरवृत्तेरित्यनेन शस्त्रास्त्रशिक्षाभावो दर्शितः । क्षत्रबन्धोरित्यनेन जातिमात्रोपजीवित्वं दर्शितम् । तेन सकलक्षात्रधर्माभावो दर्शितः । काक्वा सूचितामसहनस्यासंभावनामुपपादयति— **किसलयेति** ॥ किसलयसुकुमारमिति क्रियाविशेषणम् । सोढमित्यत्र धारणमात्रं विवक्षितम् । येन वक्षसा किसलयस्पर्शवन्मृदुनमिन्द्रस्य वज्रं धृतमित्यर्थः । कर्ता क्रियायां व्यापार्यमाणस्य करणत्वात् वक्षसेति करणनिर्देशः सहनक्रियाया बुद्धिपूर्वकत्वमवगमयति । तेन शस्त्रेण वज्रस्य प्रतिहनने क्रियमाणे वक्षोभेदनभयादित्यन्येषां प्रतिभातीति मत्वा वक्षसैव सोढम् । क्षितिधरपतिपक्षच्छेदीत्यनेनान्यत्राकुण्ठशक्तित्वं दर्शितम् ॥ **को नु खलु महाराजस्योपक्रमः** ॥ **केनाप्येषानुनयं न गृह्णाति** ॥ अगृहीतानुनयायामस्यामुपेक्षा कोपात्साहसकर्मानुष्ठानं वेति भावः ॥ **गन्धर्वेति** ॥ गगनेचराश्चारणाः अमरा वा दैत्यशब्दसमभिव्याहारादुच्यन्ते । गन्धर्वदैत्यादीनां कन्याभिस्सहास्मदीयमवरोधनं भार्याजातं दासकृत्यमालम्बते । न केवलमवरोधनमेव । सर्वस्वं मित्रामात्याद्यपि तव प्रसादं प्रतिपाल्येदानीमेव दासकृत्योन्मुखं वर्तत इति दर्शयितुं लट्प्रयोगः कृतः ॥ **एतत् दास्य-**

मण्डोदरी— इदं वि इमाए अहं करिस्सम् । अण्णं जणं ण जाणामि ।

इदमप्यस्या अहं करिष्ये । अन्यं जनं न जानामि ।

चेटी— पेक्खदु पेक्खदु भट्टिणी । सव्वभाअविणिबद्धेहिं अञ्जलिपुडेहिं विरलप्फुल्लविसहरो विअ महासमुद्दो भट्टा ।

पश्यतु पश्यतु भट्टिनी । सर्वभागविनिबद्धैः अञ्जलिपुटैः विरलोत्फुल्लविसधर इव महासमुद्रो भर्ता ।

मण्डोदरी— अवि णाम महाराओ अहिळासभंगेण इमस्सिं पदिव्वदाअं कुपिदो ण भवे ।

अपि नाम महाराजः अभिलाषभङ्गेन अस्यां पतिव्रतायां कुपितो न भवेत् ।

वर्षवरः— ( आत्मगतं ) ) एष पश्यामि ।

चान्द्री कलेव शरपाण्डुरगात्रलेखा
तन्वी विभाति मिथिलाधिपतेस्तनूजा ।
लक्ष्मीमयं च रचिताञ्जलिरातनोति
पद्माकरस्य विनिमीलितपङ्कजस्य ॥ ३० ॥

---

मप्यस्याः अहं कारिष्यामि ॥ अन्यं जनं न जानामि ॥ दासत्वेन न जानामीत्यर्थः ॥ प्रेक्षतां प्रेक्षतां भाट्टिनी ॥ नाटके राजमहिषी चेटया भाट्टिनीत्युच्यते राजा भट्टेति ॥ सर्वभागविनिबद्धैरञ्जलिपुटै· विंरलोत्फुल्लबिसधर इव समुद्रो भट्टा शोभते ॥ विसधरशब्दः पङ्कजवचनः । सर्वेषु शरीरभागेषु विनिबद्धैस्सम्बद्धैर्द[illegible]भिरञ्जलिपुटैरित्यर्थः । पङ्कजानां सकलसमुद्रप्रदेशसम्बन्धात् तत्सादृश्यसिद्ध्यर्थं[illegible]ञ्जलिपु[illegible]ानां बहुप्रदे· शसम्बन्ध उक्तः । विरलोत्फुल्लानि ईषद्विकसितानि पङ्कजानि यत्र स तथोक्तः ॥ अपि नाम महाराजोऽस्यां पतिव्रतायामभिलाषभङ्गेन कुपितो न भवेत् ॥ अभिलाषस्तत्प्रसादसम्पादनेच्छा तद्भङ्गेन । अपिनामशब्देन कोपस्य संभावना दर्शिता । पतिव्रतायामित्यनेन कोपस्यायोग्यत्वं दर्शितम् ॥ एष इत्यादि ॥ तन्वीशरपाण्डुरगात्ररेखाविशेषणद्वयं चन्द्रकलोपमानबीजत्वेनोक्तम् । शरपाण्डुरत्वं गात्ररेखायाः विरहिजनस्वाभाविकं चन्द्रकलोपमया च विशुद्धपतिशयो द्योत्यते । रचिताञ्जलिरित्यनेनाञ्जलिनापि विनिमीलितैः

रावणः— देवि अयमनुनयसर्वस्वमञ्जलिः । ( प्रणमति )

सीता— हद्धि ( पादे दूरमाक्षिपति ) हा धिक् ।

मण्डोदरी — धीरा खु एसा, महाराअस्स सीसं पंकं विअ पादेण परिहरादि । सच्चं दाणिं कोलीणं पुहवीसुदा सीता पदुमणाहो रामेत्ति ।

धीरा खल्वेषा, महाराजस्य शीर्षं पङ्कमिव पादेन परिहरति । सत्यमिदानीं कौलीनं पृथिवीसुता सीता पद्मनाभो राम इति ।

वर्षवरः— राजपुत्रि किमुपेक्षसे महाराजस्य प्रणिपातम् ।

विप्रा यजन्ति च नमन्ति च याः शिवाय
ता देवता यमकुवेरपुरन्दराद्याः ।
यस्मै कराणि वितरन्ति विहाय मानं
सोऽयं मुहुर्नमति सुन्दरि मौलिभिस्त्वाम् ॥ ३१ ॥

---

पङ्कजैस्सादृश्यं दर्शितम् । आतनोति दधातीत्यर्थः । यथा चन्द्रकलायाः पद्माकरं प्रति प्रातिकूल्यं स्वाभाविकं तथा सीतायाः ईदृशं प्रातिकूल्यं प्रसादनसाधनसहस्रैरपि नापह्नोतुं शक्यत इत्ययमर्थोऽर्थाद्गम्यते । तत्र तत्र देवीति सम्बुद्ध्याभिमुख्याभावो द्योत्यते । एवं हस्तमात्रकृतेऽञ्जलिबन्धात्मके वन्दने निष्फले सर्वाङ्गसंस्पृष्टभूमिः प्रणमन्नाह— देवीति ॥ अनुनयसर्वस्वमिति ॥ प्रणामे कृतेऽनुनयप्रकारस्सर्वोऽनुष्ठितो भवति । प्रणामादन्यस्योत्कृष्टस्यानुनयप्रकारस्याभावात् । अत इदानीं त्वत्प्रसाद एव मम जीवितालम्बनमिति भावः । पादयोर्दूराक्षेपे मनाक् स्पर्शो हेतुः । स्पर्शात्पूर्वमनाक्षेपे दर्शनाभावो हेतुः ॥ **धीरा खल्वेषा पङ्कमिव महाराजस्य शिरः परिहरति** ॥ **सत्यमिदानीं कौलीनं पृथिवीसुता सीता पद्मनाभो राम इति** ॥ धीरेत्यनेन पृथिवीगुणस्य धैर्यस्य सीतायां सङ्क्रान्तिर्दर्शिता । पङ्कोपमानेन शिरसः पङ्कवज्जुगुप्सावहत्वं दर्शितम् । कौलीनं जनप्रवादः । पृथिवीगुणानां क्षमासत्त्वादीनां दर्शनात् इदानीं जनवादस्य सत्यत्वं निश्चितमित्यर्थः । अत एव पद्मनाभो राम इत्यपि निश्चीयते । प्रणिपातस्यानुपेक्ष्यत्वे हेतुमाह— **विप्रा इति** ॥ विप्राः शिवाय हिताहितप्राप्तिपरिहारार्थं या यजन्ति नमन्ति च । ता देवता यमकुबेरपुरन्दरा-

सीता— ण हि ण हि पणिपादो । विणिपादो खु अअं ।

न हि न हि प्रणिपातः । विनिपातः खल्वयम् ।

वर्षवरः— नेयमनुनयक्षमा । ( परावृत्य तिष्ठति )

रावणः— देवि तव पादौ मे शरणम् ।

सीता— अज्जउत्तपादाणि सरणं गच्छ ।

आर्यपुत्रपादौ शरणं गच्छ ।

रावणः— ( सरोषं सहसोत्थाय ) किं किं ।

वर्णेभ्यो हृतमुपभुज्य षष्ठमंशं
षाड्गुण्यं भुवि नयतां धरापतीनाम् ।
सामान्या तव जननी समुद्रनेमि-
श्चारित्रं तव किमिदं पतिव्रतानाम् ॥ ३२ ॥

---

या यस्मै मानं विहाय शिवाय कराणि वितरन्ति नमन्ति चेत्यनुषज्यते । सोऽयं महाराजस्त्वामिदानीं मौलिभिर्नमति । एवंभूतत्वात् स्वयं प्रार्थनीयोऽनेन सम्बन्धः । सोऽयं स्वयमागतः तव पादमूलमुपगतः त्वत्प्रसादं याचते अत इदानीमुपेक्षा न सुखादका भविष्यतीत्यभिप्रायः ॥ न हि न हि प्रणिपातः विनिपातः खल्वयम् ॥ खलुशब्दोऽवधारणे । दुःखहेतुत्वात्प्रणिपातस्य विनिपातत्वं समर्थ्यते । देवि ते पादौ मे शरणमित्यनेन यावत् त्वत्पादौ मां रक्षिष्यतः तावदेवमेव वर्तिष्यामहे शरणान्तराभावादिति दर्शितम् । अथ तमनुनयान्निवर्तयितुं परुषवचनेन कोपमुत्पादयति— आर्यपुत्रपादौ शरणं गच्छेति ॥ तव जननी सर्वेषां धरापतीनां सामान्या साधारणी अत एव सर्वेषां धरापतिशब्देनाभिधानम् । पतिशब्देन धराया जायात्वं सूचितम् । धराया अनुभवप्रकारमाह— वर्णेभ्य इत्यादिना ॥ ब्राह्मणादिवर्णचतुष्टयाद्धृतं गृहीतं षष्ठं भागमनुभूय षाड्गुण्यं षड्गुणान् , सन्धिविग्रहयानादीन् भुवि भूमिस्थेषु प्रतिभूपेषु यथोचितं नयतां विनियुञ्जानानाम् । षाड्गुण्यमिति स्वार्थे ष्यञ् । भूशब्देन तत्स्था लक्ष्यन्ते । नयनेन विनियोगो लक्ष्यते । अत एव कर्मान्तरानुपादानम् । समुद्रनेमिरित्यनेन समुद्रस्य रशनासाम्येनालङ्कारयोगः सूच्यते । यत एवंभूता तव जननी अतस्तव चारित्रं किं । किंशब्दः क्षेपे । नास्त्येव चारित्रमित्यर्थः । तव स्वतः पितुरभावान्मातृकुलशुद्धिरेव परीक्षितव्या सा च नास्त्येवेत्यभिप्रायः । कुत्र

( सर्वे भयं रूपयन्ति )

सीता— एदं ण जाणामि । एतन्न जानामि ।

रावणः— क चन्द्रहासः ।

सीता— लाहो खु अअं । मे पाणाणं गई अज्जउत्तपादमूलं एव्व ।
लाभः खल्वयम् । मे प्राणानां गतिः आर्यपुत्रपादमूलमेव ।

मण्डोदरी— हद्धि, तह आसि, पदिव्वदा खु एसा । मम पाणेहिं महाराअस्स अणत्थादो रक्खिस्सम् । ( तूर्णमुपेत्य तयोर्मध्ये तिष्ठति )
हा धिक्, तथासीत्, पतिव्रता खल्वेषा मम प्राणैः महाराजस्य अनर्थात् रक्षिष्यामि ।

मण्डोदरी— जेदु महाराओ । जयतु महाराजः ।

रावणः— ( विलोक्य ) अये देवी मयसुता मण्डोदरी । ( अधामुखस्तिष्ठति )

मण्डोदरी— महाराअ तव णिरिथंसविसओ से भत्ता रामो वि ण होइ । किं पुण एसा बंदी । तुए उवक्खिदा सअं एव्व पाणाणि परिच्चइस्सदि ।

---

तर्हि चारित्रमित्यत आह— पतिव्रतानां अरुन्धत्यादीनामेव ॥ इदं चारित्रं न त्वद्विधानामिति ॥ इदं त्वयोक्तं न जानामि त्वयोक्तं सर्वं मिथ्येत्यर्थः । न हि भूप्रदेशे ममाभिव्यक्तिरित्येतावता मम भूर्जननी भवति मृण्मयप्रदेशाधिष्ठात्री देवतैव चेतनत्वाज्जननीत्युच्यते । न च सा क्षत्रियाणां भार्या न च तस्याश्चारित्राभावः । भूपतिशब्दप्रयोगस्तु भूवासिजननियन्तृत्वनिबन्धन एवेति ॥ लाभः खल्वयं मम प्राणानां गतिरार्यपुत्रपादमूलमेव ॥ चिरं परगेहनिवासेन परपुरुषस्पर्शेन च दुष्टस्य स्वाश्रयस्य देहस्य परित्यागोऽयमनेन कृतो लाभ एव । जन्मान्तरेऽप्यार्यपुत्रपादमूलमेव मे गतिश्शरणं भूयादित्यर्थः ॥ पतिव्रता खल्वेषा महाराजस्यानर्थतो रक्षिष्यामि ॥ सम्बन्धमात्रे षष्ठी । सम्बन्धविशेषेऽनर्थकर्तृत्वे पर्यवस्यति । प्रतिव्रतेत्यनेनारक्षणे दोषो दर्शितः । अत एव

महाराज तव निस्त्रिंशविषयोऽस्या भर्ता रामोऽपि न भवति । किं पुनरेषा बन्दी । त्वयोपेक्षिता स्वयमेव प्राणान् परित्यक्ष्यति ।

वर्षवरः— ( आत्मगतं )

वसुधेव महीभुजः प्रियेयं
पतिरस्माकमपामिवैष राशिः ।
अनयोरियमन्तरा भवन्ती
मयकन्या क्षितिपालिनीव वेला ॥ ३३ ॥

ममाप्ययमवसरः । ( प्रकाशं ) देव किं तव खड्गोपादानम् ।

अवलोक्य सुधाभुजामनर्थं
हरिणा किं धृतमग्निमालि चक्रम् ।
अथवा नमितं धनुः पिनाकं
त्वयि मौर्वीकृततक्षकं हरेण ॥ ३४ ॥

---

मम प्राणैरित्युक्तम् ॥ महाराज तव निस्त्रिंशविषयोऽस्या भर्ता रामोऽपि न भवति किं पुनरेषा बन्दी ॥ बन्दी बलादाहृताङ्गना ॥ त्वयोपेक्षितेति ॥ अत्यन्तविरक्तायामस्यामुपेक्षानिश्चयादुपेक्षितेत्युक्तम् । अथवास्या हननादुपरतिरुपेक्षा । अहननेऽपि स्वयमेव भर्तृविरहात् परगृहनिवासदुःखाच्च प्राणान्परित्यक्ष्यतीति किं तन्निग्रहेणेति ॥ वसुधेत्यादि ॥ यथान्तरा भवन्त्या वेलया समुद्रोल्लङ्घनात् परिपाल्यमाना वसुधा भाति तथान्तराभवन्त्या मण्डोदर्यास्माकं पत्युः परिपाल्यमाना सीता भाति । यथा समुद्रक्षित्योरन्तरा भवन्ती समुद्रं प्रतिबध्य क्षितिं रक्षन्ती वेला भाति तथा सीतास्मत्पत्योरन्तरा भवन्ती घोरसंरम्भादस्मादेनां रक्षन्ती मण्डोदरी भाति । यथापां राशिर्वेलाप्रतिबद्धक्षित्युल्लङ्घनोद्यमः प्रतिभाति तथास्मत्पतिर्मण्डोदरीप्रतिबद्धसीताहननसंरम्भो भासते इति ॥ देवेति ॥ मनुष्यस्त्रियं हन्तुं तव खड्गोपादानमनुचितम् । कुत इत्यत आह— अवलोक्येति ॥ सकललोकरक्षणाधिकृतेन हरिणा त्वत्समुत्थं सुधाभुजामनर्थमवलोक्य त्वयि चक्रं धृतं किं न धृतमेव सामर्षोऽपि तूष्णीमासीदेव ॥ अग्निमालि अग्निशब्देन तेजोविशेषवाचिना तेजस्सामान्यं लक्ष्यते । मालिशब्दस्सहार्थः । सहस्रादित्यसङ्काशतेजःपटलयोगाद्दुर्दर्शम् । अथवा हरेणाखिलजगत्संहाराधिकृतेनापि सुधाभुगनर्थं दृष्ट्वा

रावणः— उपपन्नमिदम् ।

( नेपथ्ये )—जयतु स्वामी, जयतु महाराजः, जयतु लङ्केश्वरः, जयतु देवः, जयतु भद्रमुखः, दश नाडिकाः पूर्णाः, अतिक्रामति स्नानवेला । ( प्रणदन्ति शङ्खपटहाः ) इत इतो महाराजः ।

रावणः— अद्य यूयमन्तरायस्संवृत्तः । भवतु, प्रभाते ज्ञास्यामि ।

( निष्क्रान्तो रावणः सपरिवारः )

सीता— निरासा खु अज्जउत्तं अन्तरेण । पावं खु एदं रक्खसहत्थादो मरणं । तं अज्जउत्तं चिंदिअ सअं दाव जीविअं परिच्चाजिस्सं ।

( विलोक्य )

दिट्ठिआ णु सुत्ता खु रक्खसीओ । होदु । हद्धि, रक्खसी-

---

त्वयि पिनाकं नमितं किं । हरतीति हरः । त्रिपुरासुरनिग्रहार्थमात्मना मौर्वीकृततक्षको महानागो यस्मिंस्तत्तथोक्तम् । दुर्निग्रहत्रिपुरासुरनिहननेन यस्त्रिलोकीमरक्षत् सोऽपि त्वत्तोऽमरान् रक्षितुं निरुद्यम एवाभूदित्यर्थः ॥ इदं त्वया मण्डोदर्या चोक्तमुपपन्नम् । प्रसादालाभेन परुषवचनश्रवणेन च महति रोषे सत्यपि सीताहननं प्रति सन्देह एव । अत एवानयोः वचनमहननपक्षस्योपोद्बलकं इतरथा मण्डोदरीमुल्लङ्घ्यापि सीतां हन्यादेव । सन्देहश्च कोपवद्रागस्यापि प्रबलत्वादित्यवगन्तव्यम् ॥ दश नाडिकाः पूर्णा इति ॥ विंशतिर्नाडिकाः अतीताः । इतः परं पूर्णाः अन्यूनाः दश नाडिका एव सन्ति । त्रियामायामन्त्ये यामे स्नानं विहितम् ॥ अद्य यूयमन्तरायः ॥ इनेन विघ्नस्संवृत्तः । एवमेव नित्यं दैन्यं नानुभवामि जानकी यदि श्वोऽपि प्रमादं न करिष्यति तर्हि यत्किञ्चिदुचितमनुचितं वा कर्म करिष्याम्येवेत्यभिप्रायेण भवतु प्रभाते ज्ञास्यामीत्युक्तम् ॥ आर्यपुत्रमन्तरेण आर्यपुत्रागमनमुद्दिश्येति फलितोऽर्थः । निराशास्मि ॥ पापं खलु राक्षसहस्ततो मरणम् ॥ तस्मादार्यपुत्रं चिन्तयित्वा स्वयमेव जीवितं परित्यक्ष्यामि ॥ भर्तृचिन्तापूर्वकत्वेन मरणस्य शोभनत्वं दर्शितम् । जन्मान्तरेऽपि तद्भर्तृसङ्गमहेतुत्वाच्छोभनत्वमुक्तम् ॥ दिष्ट्या सुप्ता राक्षस्यः ॥ भवत्वित्यवसरलाभेन कर्तव्यं निश्चिनोति ॥ राक्षसशीर्षस्पर्शपांसुलौ पादौ ॥ पांसुर्दोषः तद्युक्तः पांसुलः अनेन देहस्याशुद्धिरुच्यते । यतोऽहमशुद्धा अनन्तरायं निर्विघ्नम् । राक्षसीनां

सफरिसपंसुलाणि पादाणि अणंतराअं पुक्खरिणिं पविसिअ परिसुद्धा भविअ अत्ताणं दुक्खादो मोचइस्सं ।

निराशा खल्वार्यपुत्रमन्तरेण । पापं खल्विदं राक्षसहस्तान्मरणम् । तदार्यपुत्रं चिन्तयित्वा स्वयं तावज्जीवितं परित्यक्ष्यामि ।

दिष्ट्या नु सुप्ताः खलु राक्षस्यः । भवतु । हा धिक् । राक्षसशीर्षस्पर्शपांसुले पादे अनन्तरायं पुष्करिणीं प्रविश्य परिशुद्धा भूत्वा आत्मानं दुःखात् मोचयिष्यामि ।

( निष्क्रान्ता )

इति शक्तिभद्रविरचिते चूडामणिनाटके पञ्चमोऽङ्कः ॥

---

स्वापाद्विघ्नाभावः । अनन्तरामिति वा पाठः । अनन्तरां समीपवर्तिनीम् ॥ पुष्करिणीं प्रविश्य स्नानेन परिशुद्धा भूत्वा आत्मानं दुःखतो मोचयिष्यामि ॥ अनेन भाविहनुमद्दर्शनरामवार्ताश्रवणाङ्गुलीयदर्शनादिभिर्दुःखविमोचनस्यासन्नत्वादबुद्धिपूर्वकस्यान्यपरस्यापि सीतावचनस्य सत्यत्वं गम्यते । अनेनैव वचनेन कविना उत्तराङ्के सीतादुःखविमोचनहेतुर्हनुमत्प्रवेशः सूचितः ।

॥ इत्याश्चर्यचूडामणिविवृतौ पञ्चमोऽङ्कः ॥

## ॥ अथ षष्ठोऽङ्कः ॥

( ततः प्रविशति हनूमान् अङ्गुलीयकहस्तः )

**हनूमान्—** सम्प्रति हि

**मैनाकं नागकन्यासुरतसुहृदमुल्लङ्घ्य वन्धुं पयोधे–**
**राकर्षन्वेगवश्यं दिव इव शिथिलं चर्म जीमूतजालम् ।**
**लङ्कां प्राप्तोऽस्मि देवं गुरुमपि मम विस्माययन्नाशुगत्या**
**राज्ञो रामस्य देव्यै प्रहित इव शरो धारयन्नङ्गुलीयम् ॥**

---

आश्चर्यचूडामणिनाटकेऽस्मिन् स पञ्चमाङ्को विवृतो गुरूणाम् ।
प्रसादमाश्रित्य तथोत्तराङ्को व्याख्यास्यतेऽस्माभिरनन्यचित्तैः ॥

अत्रापि चतुर्थाङ्कवद्विष्कम्भादिचतुष्टयं विनाङ्क एवारभ्यते । अनन्तरेऽङ्के वानरसैन्यं सञ्चरतीत्यत्र वानरसैन्यस्य सीतावृत्तान्तपरिज्ञानार्थमुद्यमः सूचितः । तत्र हनुमदुद्यमस्य फलपर्यन्तत्वात् तत्प्रवृत्तिरस्मिन्नङ्केऽभिधीयते ॥ **मैनाकमिति** ॥ **अहं लङ्कां प्राप्तोऽस्मि** ॥ सुदुरासदेप्सिततमलङ्काप्राप्तिनिर्देशेनानन्दातिशयो गम्यते । अनन्यसाध्यमैनाकोल्लङ्घनकर्मणोऽनायासेनानुष्ठानमभिदधता वचनेन तस्य विस्मयप्रकर्षोऽपि प्रतीयते । अहो अत्यद्भुतमिदं यन्ममेदृशमभूतपूर्वं समुद्रोल्लङ्घनादिसामर्थ्यं सञ्जातमिति । अत्र वीररसकार्योऽद्भुतरसो दर्शित इति ज्ञेयम् ॥ **मैनाकमुल्लङ्घ्येति** ॥ अपक्षसपक्षयोस्सपक्षोऽम्बरे बलीयान् तेन तदुल्लङ्घनस्य विस्मयावहत्वं दर्शितम् । उल्लङ्घ्य प्राप्तोऽस्मीत्यनेन उल्लङ्घनप्राप्त्योरेकहेतुकत्वं दर्शितम् । तेन लङ्काप्राप्त्यर्थो यो गमनव्यापारः तेनैवानुषङ्गादबुद्धिपूर्वं मैनाकोल्लङ्घनमपि सञ्जातमिति द्योत्यते । अयमपरोऽद्भुतातिशयहेतुः । पर्वतप्रतिबद्धगतेर्गुरोः पवनस्याप्यनेन विस्मयातिशयो दर्शितः । नागकन्यानां नागाङ्गनानां स्वकान्तैस्सह सुरतक्रीडायां मनोज्ञविविक्तकन्दरानिकुञ्जमणिमयशिलातलसहकारादिसुमनस्समुत्सुकमधुकरकोकिलादिमधुरारावमन्दसमीरणादिसम्पन्नत्वेन सुहृत् उपकर्ता । अनेनैवंभूतस्यापि तस्य दर्शने सत्त्वभ्रंशाभावेन व्यवसायस्य तादवस्थ्यं द्योत्यते । पयोधेर्बन्धुमित्यनेन पयोधिनियोगादागतस्य सत्कारो नादृत इति रामायणेतिवृत्तं दर्शितम् । अनेनापि प्रकृतकार्यनिष्ठा सूच्यते । वेगवश्यं जीमूतजालमाकर्षन्नित्यत्रोत्प्रेक्षा ॥ **दिवश्शिथिलं चर्माकर्षन्निवेति** ॥ शिथिलत्वेनाकर्षणस्य सुकरत्वं दर्शितम् ॥ **देवं गुरुमिति** ॥ पवनसूर्ययोस्साधार-

कस्मिन् खलु प्रदेशे तदुद्यानम् यत्र देवी शिंशपाश्रिता प्रतिवसतीति गृध्रराजेनोपदिष्टम् । तदहमन्विच्छामि । ( परिक्रम्यावलोक्य ) अहो नु खलु राक्षसनगरस्य परा लक्ष्मीः । सत्यमेवैतत् ।

यानि यानि मनोज्ञानि वस्तून्यमरवेश्मनि ।
तानि तानि किलोद्धृत्य लङ्कां नयति रावणः ॥ २ ॥

( स्पर्शं निरूप्य ) अनेनोद्यानेन भवितव्यम् । तथा हि—

---

णो निर्देशः ॥ आशुगत्येति ॥ मैनाकोल्लङ्घनसिंहिकावधादीनामप्युपलक्षणम् । अपिशब्देनान्येषां विस्मयः किमु वर्णनीय इति दर्शितम् । अथात्मनोऽत्यद्भुतकर्मानुष्ठानसामर्थ्ये हेतुं विमृश्यावधारयति—राज्ञो रामस्याङ्गुलीयं देव्यै धारयन्निति ॥ यतो राज्ञा देव्यै दातुं सङ्कल्प्येदमङ्गुलीयकं मयि समर्पितं मां देवीसकाशमप्रापय्य न विरमति अत एवाह लङ्कां प्राप्तः । देव्यै धारयन्नित्यनेन देव्याः प्रभावोऽप्यत्र हेतुरिति दर्शितम् । हेत्वन्तरमाह—प्रहित इति ॥ अन्येषामङ्गदादिवानरप्रवीराणां मध्येऽहमेक एवाचिन्तनीयप्रभावेन राज्ञा रामेण नियुक्तः । अनेन नियोक्तृसामर्थ्यस्य नियोज्ये स्वस्मिन् सङ्क्रान्तिर्दर्शिता । एकोऽपि हेतुर्मां लङ्कां प्रापयितुं समर्थः किं पुनस्समुदिता इति भावः ॥ शर इवेति ॥ यथा राज्ञा रामेण प्रहितः प्रयुक्तश्शर आशुगत्या लक्ष्यं प्राप्नोति तथाहमपि लङ्कां प्राप्तः । शरोपमयात्मनः सामर्थ्यं न लङ्काप्राप्तौ हेतुरिति द्योत्यते । अत्र स्वामिनि स्नेहबहुमानविश्वासात्मिका भक्तिराहोपुरुषिकाभावश्च गम्यते । परिपालनेन प्रजा रञ्जयतीति राजा । उपेक्षितराज्यपरिपालनस्य रामस्य राजत्वं नास्त्येवेति बालानां भ्रममपनुदन्नाह— राज्ञ इति ॥ स्वराज्यपरिपालनार्थं भरतं नियुज्याखिलनिशाचरनिग्रहपूर्वकमशेषभुवनरक्षणार्थमुद्यतस्यास्मत्स्वामिन एवेदानीमनन्यसाधारणं राजत्वमित्यभिप्रायः ॥ अथेति ॥ यत्रेत्यस्येतिशब्देनान्वयो न संभवति गृध्रराजवचने यच्छब्दस्याभावात् अत उपदिष्टमित्यनेनान्वयः । अथशब्द आरम्भार्थः । उद्यानान्वेषणमारब्धव्यमित्यर्थः । तदहमित्यत्र तच्छब्देनोद्यानं परामृश्यते ॥ परा लक्ष्मीरिति ॥ भूमण्डले नगरान्तरेष्वेवंभूता लक्ष्मीर्न विद्यते यतः अत उत्कृष्टेयम् । उत्कृष्टत्वे हेतुमाह—सत्यमिति ॥ एतच्छब्देन वक्ष्यमाणश्लोकार्थोऽभिधीयते । श्लोकार्थस्स्पष्टः । अथ गुणत्रयसम्पन्नसमीरणस्पर्शसुखमनुभूय तदनुसारेण दत्तदृष्टिरुद्यानमनुमिनोति— अनेनेति ॥ इदंशब्देन देशविशिष्टत्वेनानुमितमुद्यानं परामृश्यते ।

आनेता मदकलभृङ्गकूजितानां-
माकर्षन्द्रुमसुमनःपरागभारम् ।
वीचीनां सरसि विमर्दशीतलोऽय-
माचष्टे मम गुरुरेव मातरिश्वा ॥ ३ ॥

( विलोक्य ) इदं तदुद्यानं यावत्प्रविशामि । ( प्रविश्य सर्वतो विलोक्य सविस्मयं )

एषां पल्लवमंशुकानि कुसुमं मुक्ताः फलं विद्रुमं
बैडूर्यं दलमङ्कुरो मरतकं हैमं च शाखाशतम् ।
एते के जगतीरुहो वनजुषाप्यज्ञातपूर्वा मया
प्रायस्सारममी दिवो विटपिनः किं तैर्ममान्यो भरः ॥ ४ ॥

---

अस्मिन्देश उद्यानेन भवितव्यमित्यर्थः । अथोद्यानप्राप्तिचिह्नाभिधानपूर्वकमतिस्पष्टत्वेन धर्मेणानुमानं वचनत्वेनोत्प्रेक्षते— **आनेतेत्यादिना** ॥ मातरिश्वा मम गुरुः पितैव हे पुत्रक इतस्ततः परिचङ्क्रमणेन खेदं माकार्षीः इहैवोद्यानमित्याचष्टे इवेत्यध्याहार्यम् । एवशब्देनाख्यात्रन्तरापेक्षा वार्यते । आख्यानप्रकारं दर्शयति विशेषणत्रयेण । भृङ्गकूजितानां मदकलत्वेन मधुपूर्णसुमनस्सम्पदनुमीयते तया चोद्यानम् । इह मदकलभृङ्गकूजितानामाख्यानशब्दत्वं द्रष्टव्यम् । शब्दगतेस्समीरणानुसारित्वात्तस्यानेतृत्वमुक्तम् । इह शब्दश्रवणस्य प्राथम्यमुक्त्वानन्तरं परिमलाघ्राणनं दर्शयति— **आकर्षन्निति** ॥ भारशब्देन भारोद्वहनान्मातरिश्वनो मतिमान्द्यं सूचितं सुमनःपरागाणां बहुत्वं च दर्शितम् । एतदुद्यानस्य सामीप्ये चिह्नम् । परिमलाघ्राणनानन्तरं सञ्जातं स्पर्शसुखमाह— **वीचीनामिति** ॥ सरसि वीचीनामित्यन्वयः । इदमप्युद्यानचिह्नं उद्याने सरसो नियतत्वात् । अथोद्यानं प्रत्यक्षीकरोति— **इदमिति** ॥ अथोद्यानं प्रविश्यादृष्टपूर्वसुरतरुदर्शनेन विस्मयाक्षिप्तचित्तो भूत्वाह— **एते के जगतीरुह इति** ॥ इदमाद्यं वाक्यम् । इतरथा जगतीरुहाणामप्रकृतत्वेन एषामिति सर्वनाम्ना परामर्शासंभवात् । अर्थक्रमश्चैवं सति भवति । वनजुषेत्यनेन भूमण्डलगतसकलवृक्षपरिचयो दर्शितः । एतत्सुरतरुत्वावधारणे प्रथमं बीजम् । तदवधारणे बीजान्तराण्यप्याह— **एषामित्यादिना** ॥ यत एषां पल्लवादिस्थाने अंशुकादीनि दृश्यन्ते अतः **अमी प्रायो दिवस्सारं विटपिनः** ॥ इह संहतानामेव विटपिनां स्वर्गसारत्वं विवक्षितम् । अत एव सारशब्दस्य विलिङ्गत्वं विसंख्यत्वं चेति ज्ञेयम् । प्राय इत्यव्ययमूहे न निर्धारणे । अथ प्रकृतिस्थः क्षण-

अत्र देवीं शिंशपाश्रितामभिहितवान् स सम्पातिः । तत्क नु खलु शिंशपा । ( परिक्रम्यावलोक्य ) एषा खलु शिंशपा । ( सहर्षमुपेत्य सर्वतो विलोक्य सविषादम् ) नात्र देवीं पश्यामि । ( इति मोहमुपागतः । पुनः समाश्वस्य ) व्यापादिता नु राक्षसेन । स्वयमेव साहसं गता नु । वृथा मया समुद्रो लङ्घितः । वन्ध्यः सुग्रीवमनोरथः । किमुक्त्वा स्वामिदत्तमिदमभिज्ञानाङ्गुलीयकं प्रतिप्रयच्छामि । सर्वथा देवीमन्तरेण देवो

---

मात्रं कृतेऽपि सुरतरुदर्शनेऽनुशयमवलम्ब्याह— **किं तैरिति** ॥ तैः दृष्टैस्सुरतरुभिः किं प्रयोजनम् । नन्वत्यन्तहृद्यसुरतरुदर्शने महानानन्द एव फलमत आह— **ममान्यो भर इति** ॥ भवतु नामान्येषां कार्यान्तरनिरपेक्षाणामेतद्दर्शनेनानन्दः फलम् । मम त्वन्यो महान् कार्यभारोऽस्ति यतः अत एतद्दर्शनमनुचितमित्यर्थः । न चास्य श्लोकस्य यानि यानीत्यनेन गतार्थत्वमाशङ्कनीयं यतस्तत्र सामान्यतो मनोज्ञवस्तुदर्शनमेवाभूत् इह तु विशेषतस्सुरतरूणामेवैकत्र स्थितानामसङ्कीर्णत्वेन दर्शनम् । अथ शिंशपान्वेषणे हेतुमाह— **अत्रेति** ॥ तच्छब्देन स्वत एवाप्तत्वं रामायणकथनात् पक्षसम्पादनेनोपकृतत्वं च दर्शितम् । तेन तद्वचनस्यात्यन्तविश्वसनीयत्वं च द्योत्यते ॥ **सहर्षमुपेत्येति** ॥ शिंशपादर्शने सीतादर्शनमेव लब्धं मन्यमानो हर्षविवशः सञ्जातः । एतद्भाविनः करुणरसस्थायिनः शोकस्य पोषकत्वेन उपात्तमिति द्रष्टव्यम् । अथ सीताया अदर्शनेनातिधीरोऽपि मारुतिर्महति शोकसागरे निमग्नो विलपति— **व्यापादितेत्यादिना** ॥ सर्वथा जानकी दशग्रीववशं न गच्छत्येव । ततश्चल त्वाच्चण्डत्वात् कोपनत्वाच्च पतिव्रतां स्त्रियमपि निगृह्णीयादेवेत्यभिप्रायः । भर्तृदर्शनाशोच्छेदाद्रक्षोगृहनिवासदुःखाच्च स्वयं देहपरित्यागोऽपि संभवतीत्याह— **स्वयमेवेति** ॥ **वृथेति** ॥ गुरुतरोपायानुष्ठानस्य वृथात्वेन दुःखातिशयो द्योत्यते । तात्कालिकदुःखदर्शनासहिष्णुत्वात्सत्यमभिधातुमसमर्थोऽहं भविष्यामीति मत्वा किमुक्त्वेत्युक्तम् ॥ **स्वामिदत्तमिति** ॥ अनेन यदर्थं दत्तं तदलाभेन प्रतिप्रदाने लज्जातिशय आवेद्यते ॥ **सर्वथेति** ॥ देवस्य देव्या विना जीवने ये प्रकारा उपाया दशग्रीवनिग्रहपूर्वकं त्रिलोकीपरिरक्षणं मातृवर्गपरिचर्या परिणयनान्तरेण सन्तत्युत्पादनमित्यादयः ते सर्वे कुण्ठप्रसरा एव भविष्यन्ति अन्योन्यात्मत्वादुभयोः । ततो देवस्य जीवनपरित्यागात् सुग्रीवो न जीवतीत्यनुषङ्गः । भरतलक्ष्मणावित्यत्र न जीवत इत्यनुषज्यते । देव्यश्चेत्यत्र न जीवन्तीति । "अनन्तरेण सम्बद्धः स्यात् परस्याप्यन-

न जीवति। ततः सुग्रीवो भरतलक्ष्मणौ देव्यश्च। सर्वस्यास्य वन्ध्यपुनर्दर्शनेनाहं कारणं भविष्यामि। मिथ्या स्वामिनोऽपि न वक्तव्यम्। तद्यावदहमपि यथाशक्ति चेष्टितैर्यशोमूर्तिर्भविष्यामि।

(नेपथ्ये)— भअवं मिअलंछण। भगवन् मृगलाञ्छन।

हनूमान्— किं नु खल्विदम्। श्रोष्यामस्तावत्।

(पुनर्नेपथ्ये)—एसो दे अञ्जली। चिरस्स मे णअणगोअरं पत्तोसि।

एष ते अञ्जलिः। चिरस्य मे नयनगोचरं प्राप्तोऽसि।

हनूमान्— विलापः खल्वेषः। कोटरान्तरितो भूत्वा दृढं वृत्तान्तं

---

न्तर" इति द्वितीयाध्यायोक्तन्यायेनानुषक्तानुषङ्गो न दोषः। सर्वस्येत्यनेन पूर्वोक्तस्सर्वो जनः कथ्यते। अस्येत्यनेन जीवननाशः। सर्वेषां जीवननाशस्येत्यर्थः॥ **वन्ध्यपुनर्दर्शनेनेति**॥ पुनर्दर्शनस्य वन्ध्यत्वेनेति पूर्वपदार्थो विधेयः। अत एवमेव स्वामिसमीपं प्राप्य सत्येऽभिहिते मत्कारणतो बहूनां विनाशः प्रसज्येत अनृतं तु निषिद्धत्वान्निरर्थकत्वाच्च न वक्तव्यमित्याह— **मिथ्येति**॥ अपिर्भिन्नक्रमः। मिथ्यापि न वक्तव्यमित्यर्थः। एवं क्षणकालं शोकार्णवशो भूत्वा धैर्यमवलम्ब्यानन्तरकरणीयं कर्म विमृश्यावधारयति— **तद्यावदिति**॥ यतस्सीतादर्शनार्थमहं स्वामिना नियुक्तः अतस्तद्दर्शनार्थं मया यथाशक्ति यतितव्यम्। न हि शिंशपामूले सीता न दृष्टेत्येतावन्मात्रेण यथाशक्ति यत्नः कृतो भवति तद्यावत् यस्मात्कारणादतः परमपि यथाशक्ति चेष्टितैश्शक्त्यनुरूपैर्बहुविधैर्व्यापारैस्सीताया वृत्तान्तं तत्त्वतो ज्ञास्यामि। तत्र यदि सीतां लङ्कायामन्यत्र वा चतुर्दशसु लोकेषु कुत्रापि जीवन्तीं द्रक्ष्यामि ततो यशोमूर्तिर्भविष्यामि। यशस्करी मूर्तिर्देहो यस्य स तथोक्तः। यदि न द्रक्ष्यामि ततस्सीताया विनाशं तत्त्वतोऽवगम्य सपुत्रामात्यबान्धवं दशग्रीवं निगृह्य स्वामिनो निवेद्यामङ्गलदर्शनात् पूर्वमेव इमं देहं परित्यज्य यशोमूर्तिर्यशश्शरीरो भविष्यामीत्यर्थः। अथ सीताया विलापवचनमाकर्ण्य जिज्ञासते— **किं नु खल्विति**॥ **भगवन्मृगलाञ्छन चिरस्य मे नयनगोचरं प्राप्तोऽसि**। भगवच्छब्देन परमकारुणिकत्वं दर्शयति। महतीं दुरवस्थां प्राप्ताया ममाधन्यत्वेन सर्वत्र सुलभदर्शनस्य भवतो दर्शनमप्येतावन्तं कालं दुर्लभमभूदिति चिरस्येत्यनेन दर्शितम्। अथ मारुतिर्विलापत्वेन निश्चित्य किञ्चित्सञ्जातप्रत्याशस्सन् कोटरान्तरितस्सीतामवलोक्य सानन्दमाह— **एषेति**॥

ख्यास्यामि । ( तथा करोति ) एषा देवी । अस्याः खलु

परिवर्तनेन बहुशो महीतले
निचितं कपोतगलकर्बुरं रजः ।
नयनाम्भसा सरसमङ्गरागता-
मुपयाति पाण्डुनि पयोधरद्वये ॥ ५ ॥

अस्या विलापवचनं स्वामिनः श्रोत्रोपायनं क्षणमात्रमावर्जयिष्यामि । ( तूष्णीमास्ते )

( ततः प्रविशति विलपन्ती सीता )

सीता— तुमं दाव चन्द उपालम्भइ अअं जणो । सुणीअदि अ बन्धुभावो खत्तस्स । सदिसोत्ति तुमं दाव अज्जउत्तेण लोओ वाहरदि । ण हि ण हि उम्मत्ता खु अहं, तुमं खु दिअसे दिअसे पडिग्गहंतरेण अल्लीअसि । अज्जउत्तो हि दाव रक्खिस्सदि मए मंदभाआए एव्व । अहवा चिट्ठदु दाव एदं । एक्कदो मं दक्खासि एक्कदो अज्जउत्तं वि । ण किं चि भणिअ उदासीणो विअ गच्छसि ।

त्वां तावत् चन्द्र उपालभतेऽयं जनः । श्रूयते च ब-

---

अतः परमङ्कावसानं यावत्क्रमेण करुणरसस्य परिपोषो द्रष्टव्यः । बहुशः परिवर्तनेन शोकस्य प्रकर्षोऽनुवृत्तिश्च गम्यते ॥ निचितं नितरां व्याप्तं कपोतगलवत्कर्बुरं शबलवर्णं सरसं आर्द्रीकृतमङ्गरागतामुपयातीति पूर्णविश्वविभवायां लङ्कायां वर्तमानाया अपि तस्याः पतिव्रतायाः भर्तृविरहदुःखप्रकर्षचिह्नत्वेन सर्वमेवैतन्महीतलपरिवर्तनादि शोभाकरमिति मत्वा रजसोऽनुलेपनत्वमुक्तम् ॥ तूष्णीमास्त इति ॥ अनेन विलापवचनं स्वामिनश्श्रोत्रोपायनं कर्तुं तच्छ्रवण आदरातिशयो दर्शितः ॥ हे चन्द्र अयं जनस्त्वां तावदुपालभते ॥ अयं जन इत्यस्यास्मदर्थे पर्यवसानम् । उपालम्भो निन्दा अतेर्ष्यीकृता । परुषवचनं निन्दात्वेनाभिप्रेतम् । तावच्छब्देन बन्धुषु प्रथमत्वं इष्टमिति प्रथमं त्वदुपालम्भ इति दर्शितम् ॥ श्रूयते च क्षत्रस्य बन्धुभाव इति ॥ चशब्दो हेतौ । "यतस्सोमो वै राजा" इत्यादिश्रुतिषु क्षत्रस्य सर्वेषां क्षत्रियाणां बन्धुभावः श्रूयते विशेषतस्त्वत्प्रभवक्षत्रोद्भूताया मम परमो बन्धुः अत एव त्वदुपालम्भः । आदिराजत्वात्सर्वेषां राज्ञां सोमो बन्धुरित्युक्तम् ॥ आर्यपुत्रेण

न्धुभावः क्षत्रस्य। सदृश इति त्वां तावदार्यपुत्रेण लोको व्याहरति। न हि न हि उन्मत्ता खल्वहं, त्वं खलु दिवसे दिवसे परिग्रहान्तरेणालिङ्गयसे। आर्यपुत्रो हि तावत् रञ्जयिष्यति मया मन्दभाग्ययैव। अथवा तिष्ठतु तावदिदम्। एकतो मां पश्यसि एकत आर्यपुत्रमपि। न किञ्चित् भणित्वा उदासीन इव गच्छसि।

हनूमान्— अस्या विलापान्ते रूपं दर्शयिष्यामि। ( तूष्णीमस्तो )

सीता— एदे ए दे इसओ सत्तत्ति सुणीअंति। अअं खु भअवं उवज्झाओ रघूणं वसिट्ठो। एसा खु पदिव्वदाणं णिदंसणभूदा भअवदी अरुन्धई देवी। भअवदि को णाम अअं ववसाओ। रक्खसगोअरे देसे इमस्स जणस्स पडिआरं कं वि ण भणा-

---

सुसदृश इति त्वां लोको व्याहरति॥ सुसदृश इत्यनेन सर्वैरेव गुणैस्सादृश्यात्तन्निबन्धना रामचन्द्र इति लोकप्रसिद्धिर्द्योत्यते अनेनार्यपुत्रस्यापि परमो बन्धुरिति दर्शितम्। यदेवंभूतस्त्वं मयि करुणालेशमपि न करोषि तदत्यन्तमनुचितमित्याद्युपालम्भप्रकारो विवक्षितोऽपि विरहोन्मादकृतेन चित्तवैवश्येन वाग्गोचरं न प्राप्त इत्यूहनीयम्। न हि न हीत्यनेन पूर्वोक्तस्य सुसदृशत्वस्यात्यन्तनिषेधः क्रियते॥ उन्मत्ता खल्वहम्॥ उन्माद एव सुसदृशत्वभ्रमे हेतुरित्यर्थः। सादृश्याभावमेव दर्शयति— त्वं खलु दिवसे दिवसे परिग्रहान्तरेण॥ कृत्तिकया विप्रयुक्तो रोहिण्या सङ्गच्छसे एवं तया विप्रयुक्तो मृगशिरसा एवं कदाचिदपि न तव परिग्रहवैधुर्यम्॥ आर्यपुत्रो हि तावद्रञ्जयिष्यति मया मन्दभाग्ययैव॥ इदानीं मया विप्रयुक्तोऽप्यार्यपुत्रः परिग्रहान्तरपरिग्रहमानिच्छन्ममैकस्या एव पुनस्सङ्गमाशामवलम्ब्य शोकपरवशो वर्तते। रञ्जयिष्यतीति लृटा भविष्यत्वसामान्येन रञ्जनं कर्तुमिच्छतीति रञ्जनेच्छा लक्ष्यते। अविदितरामावस्थयापि सीतया पूर्वविश्वासलिङ्गकानुमानादेवमुक्तम्। रञ्जयिष्यतीत्यत्र णिजर्थो न विवक्षितः॥ अथवा तिष्ठत्वेतत्॥ एतत् मम मन्दभाग्यत्वकथनं निरर्थकत्वात्तिष्ठतु आस्तामित्यर्थः। इदानीं यद्वक्तुमुचितं तदेव वक्तव्यमिति मत्वाह— एकतो मां पश्यसि आर्यपुत्रमप्येकतः॥ पश्यसीत्यनुषङ्गः॥ न किञ्चिद्भणित्वा उदासीन इव गच्छसीति॥ यतो गगनमार्गेण गच्छन्नेव प्रयत्नान्तरेण विनार्यपुत्रवृत्तान्तं प्रत्यक्षीकरोषि अतस्तन्निवेदनेन मामनाश्वास्य औदासीन्यमवलम्ब्य गमनमत्यन्तमनुचितमित्यर्थः। अथ मारुतिरात्मनो रूपं दर्शयितुमवसरं निर्धारयति— अस्या इति॥ एते ये ते

सि । सव्वहा तव दंसणफलं अण्णहा करिस्सम् ।

एते ये ते ऋषयः सप्तेति श्रूयन्ते । अयं खलु भगवान् उपाध्यायो रघूणां वसिष्ठः । एषा खलु पतिव्रतानां निदर्शनभूता भगवती अरुन्धती देवी । भगवति को नामायं व्यवसायः राक्षसगोचरे देशे अस्य जनस्य प्रतीकारं कमपि न भणसि । सर्वथा तव दर्शनफलमन्यथा करिष्यामि ।

हनूमान्— स्वामिनि अहं तावत्प्रतिबध्नामि ।

सीता— कुदो णु खु अक्कन्दिदं । ( अन्यतो विलोक्य ) एसा एसा चक्कवाकवहू रअणिरक्खसेण विओजिदा अअं विअ जणो सुण्णं रोदिदि ।

कुतो नु खल्वाक्रन्दितम् । एषैषा चक्रवाकवधूः रजनीराक्षसेन वियोजिता अयमिव जनः शून्यं रोदिति ।

---

सप्तर्षय इति श्रूयन्ते ॥ ये सप्तऋषय इति श्रूयन्ते त एते इति सम्बन्धः । त्वमपीत्यपिशब्देन रक्खसगोअर इत्यादिग्रन्थो वक्ष्यमाणोऽत्रापि द्रष्टव्यः । निमित्तमनपेक्ष्यैव सर्वलोकानुग्रहोन्मुखा भवन्तो राक्षसगोचरे प्रदेशेऽमुष्य जनस्य प्रतिक्रियां न कथयन्ति कथं मय्येकस्यामेव कारुण्याभाव इत्युपालम्भः ॥ अयं खलु भगवानुपाध्यायो रघूणां वसिष्ठ इति ॥ आसतामन्ये भवता तु प्रतिक्रिया मेऽवश्यं वक्तव्यैवेति रघूणामुपाध्याय इत्यनेन दर्शितम् ॥ एषा खलु पतिव्रतानां निदर्शनभूता भगवती अरुन्धती ॥ अरुन्धत्येव पतिव्रतया वर्तितव्यमिति पतिव्रतानां दृष्टान्तः खलु भगवती अरुन्धती । सा त्वं कथं भर्त्रा विनाकृताया मम दर्शनं सहमाना प्रतिक्रियां न किञ्चित्कथयसि इत्थं मयि निर्दयाया भवत्या दर्शनफलमन्यथाकरिष्यामि दर्शनफलं मासषट्कजीवनं तदिदानीमेव प्राणपरित्यागात् अन्यथा करिष्यामीति । अथ मारुतिस्सीतायाः प्राणपरित्यागाध्यवसायमसहमान आह— स्वामिनीति ॥ सम्बुद्ध्या तव भर्ता मम स्वामीति दर्शितम् । तावच्छब्देन प्रथमं प्राणपरित्यागाध्यवसायं प्रतिबध्नामि पश्चात्कर्तव्यान्तरमप्यस्तीति प्रदर्श्यते— कुतो नु खल्विदमाक्रन्दितमिति ॥ मारुतिवचन आक्रन्दितभ्रमश्चित्तवैवश्यात् । कस्याक्रन्दितमिति ज्ञातुमन्यतोऽवलोकनम् ॥ एषा चक्रवाकवधू रजनीराक्षसेन वियोजिता अयमिव जनः शून्यं रोदितीति ॥ उपमाक्षेपत्वेन रजन्या राक्षसत्वारोपः ॥ शून्यमिति ॥ रोदनक्रियाविशेषणम् ।

हनूमान्— स्वामिनि न शून्यमिदम् । पूज्यपादो राम एव भर्ता तवेदं वचनं शृणोति ।

सीता— किं णु खु मए उवालद्धाणं देवदाणं अणुग्गहो । अहवा रक्खसस्स अवरा खु इअं माआ ।

किं नु खलु मयोपालब्धानां देवतानामनुग्रहः । अथवा राक्षसस्यापरा खल्वियं माया ।

हनूमान्— स्वामिनि मा संशयेन । दूतोऽहं आर्यमनुवंशप्रदीपस्य रामस्य ।

सीता— ( आत्मगतं ) महुरं खु से वअणं । ण हि ण हि रक्खसजादी । कहं वम्मिआदो हारो उप्पज्जइ ।

मधुरं खलु अस्य वचनम् । न हि न हि राक्षसजातिः । कथं वल्मीकात् हार उत्पद्यते ।

हनूमान्— स्वामिनि तुभ्यमयमञ्जलिः ।

---

अनुग्रहीतुं समर्थेन केनचित् स्वजनेनाश्रुतत्वात् अरण्यरुदितमिव निष्प्रयोजनं मम रुदितं तद्वदस्या अपि रुदितमित्यर्थः ॥ इदं रुदितं न शून्यं सफलमित्यर्थः । साफल्यमेव दर्शयति— पूज्यपाद इति ॥ अखिलजनानुग्रहशीलत्वादखिलैः पूज्यौ पादौ यस्य स पूज्यपादः यस्त्वद्व्यसनमपनेतुं समर्थः स भर्ता राम एव तवेदं वचनं शृणोति इत्येवशब्देनावधार्यते ॥ किन्नु खलु मया उपालब्धानां देवतानामनुग्रहः ॥ आर्यपुत्रेण सङ्गमयितुमारम्भः ॥ अथवा राक्षसस्यापरा खल्वियं माया ॥ अपरशब्दो विशेषवाची मायाविशेष इत्यर्थः । आर्यः श्रेष्ठो मनोः वंशः आर्यमनुवंशः तस्य प्रदीपः प्रकाशकत्वेन प्रदीपत्वारोपात् स्तुतिरूपमिदं विशेषणं भक्त्यतिशयमावेदयति । तेन चाप्तत्वेन वचनस्य विश्वसनीयत्वं द्योत्यते । अथ जानकी भर्तुः स्तुतिविशिष्टं नामामृतं पीत्वा हृष्टमनाः शब्दागमनापादानभूतवृक्षकोटरदत्तदृष्टिरनुमानेनास्मिन्कश्चिदस्तीत्यवधार्याह— मधुरं खल्वस्य वचनम् ॥ न हि न हि राक्षसजातिः ॥ मधुरं वदतीति शेषः । एतदेव दृष्टान्तेनोपपादयति— कथं वल्मीकतो हार उत्पद्यते ॥ तद्यथा वल्मीकतस्सर्प एव निर्गच्छति तथा राक्षसजातेः क्रूरतरं वचनमेवोत्पद्यते । अथाभिमुखीभूतां तां कोटरान्तर्हित एवाञ्जलिमात्रं प्रकाश्य प्रणमन्नाह— तुभ्यमिति ॥ दर्शय तावदात्मनो रूपम् ॥

**सीता**— दंसेहि दाव अत्तणो रूपं । अवआहि कोटरादो ।

दर्शय तावदात्मनो रूपम् । अपयाहि कोटरतः ।

**हनूमान्**— यदाज्ञापयति स्वामिनी । ( अवरुह्य प्रणमति )

**सीता**— ( निर्वर्ण्य ) हं वाणरो खु अअं । पाएण एदं रूपं रक्खसो ण गेह्णइ ।

हं वानरः खल्वयम् । प्रायेणेदं रूपं राक्षसो न गृह्णाति ।

**हनूमान्**— ( प्रणिपत्य )

पूतं पुनासि पितरं मिथिलाधिराजं
राजर्षिवंशतिलकं दयितं च रामम् ।
वन्द्या जनस्य सरिदम्बरगोचरेव
शैलं तुषारशिशिरं पतिमम्भसां च ॥ ६ ॥

**सीता**— ( आत्मगतं ) को णु खु अअं महुरवअणाणं पजावई । होदु पुच्छिस्सं दाव णं पच्छा इमस्स परिक्खणे अत्थि प-

---

तदर्थं कोटरतोऽपयाहीति तदाज्ञापुरस्सरमात्मानं प्रकाश्य प्रणाममकरोत् ॥ हमिति ॥ अचिन्तितरूपदर्शनोद्भूतो वाग्भूतोऽनुभावः ॥ वानरः खल्वयं प्रायेणैतद्रूपं राक्षसो न गृह्णाति ॥ अतिनिकृष्टत्वबुद्ध्या । अथ नमस्कारसमय एव पातिव्रत्यमहिमदर्शनेन विस्मितः स्तौति— पूतमिति ॥ त्वं पितरं मिथिलाधिराजं दयितं रामं च पुनासि ॥ उभयोरपि साधारणं विशेषणद्वयम् । शुद्धेः परां काष्ठामुपगतयोरपि पितृदयितयोः शुद्धिं जनयितुं समर्थस्ते पातिव्रत्यप्रभाव इति सीतास्तुतिपरमिदं वाक्यं न तु तयोश्शुद्धिजनने तात्पर्यं असंभवात् । राजर्षिवंशतिलकमित्यत्र ऋषिशब्देन जन्मना यथाक्रमं त्रिष्वाश्रमेषु अध्ययनार्थज्ञानाभ्यासकामनयानुष्ठितैः दर्शपूर्णमासादिभिर्बहुविधैस्तपोभिः प्रजापरिपालनादिस्वधर्मानुष्ठानाच्च ऋषिवच्छुद्धिमत्त्वं दर्शितम् । तेषां वंशस्य तिलकमलङ्कारभूतम् । वंशस्य शोभाकरत्वादलङ्कारत्वमुक्तम् । अनेन शुद्धिमत्तरत्वमुभयोर्दर्शितम् । यतस्त्वमेवंभूता ततस्सर्वैरेव वन्द्या इत्याह— वन्द्येति ॥ यथाम्बरगोचरा सरित् गङ्गा पूतं पितरं तुषारशिशिरं शैलं हिमवन्तं पूतं दयितमम्भसां पतिं वरुणं च पुनाति तद्वत् त्वमपि । गङ्गायाश्च विरिञ्चिविष्णुमहेश्वरकमण्डलुपादशिरस्संसर्गेण महिमा प्रसिद्धः । हिमवतस्तपश्चरणाश्रयत्वेन गौरीपितृत्वान्महत्त्वं देवतात्वेन वरु-

माणं अच्चरीअचूडामणी । ( प्रकाशम् ) वित्थरेण भणेहि को तुमं कदमेण उवाएण अज्जउत्तेण संसग्गो जादो ।

को नु खल्वयं मधुरवचनानां प्रजापतिः । भवतु प्रक्ष्यामि तावदेनं पश्चादस्य परीक्षणे अस्ति प्रमाणं आश्चर्यचूडामणिः । विस्तरेण भण कस्त्वं कतमेनोपायेन आर्यपुत्रेण संसर्गो जातः ।

हनूमान्— शृणोतु स्वामिनि । अहं तनयः सदागतेः, आज्ञाकरः सुग्रीवस्य, नाम्ना हनूमान् ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— तस्य सुग्रीवस्य पूर्वजेन वालिना स्त्रीनिमित्तं राज्यनिमित्तं च प्रवृद्धं वैरमासीत्

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततस्स खलु वालिभयात्सुग्रीवश्चतुरन्तां पृथिवीं प्रादेशमात्रमिव पर्यचरत् ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः सुग्रीवो वालिनिर्भयं मुनिशापबलान्माल्यवन्तं नाम गिरिमध्यास्त ।

---

णस्य पूतत्वमिति ॥ को नु खल्वयं मधुरवचनानां प्रजापतिः ॥ स्रष्टेत्यर्थः । प्रजापतित्वारोपेण सृष्टिकौशलकृतो माधुर्यातिशयो व्यज्यते ॥ भवतु पृच्छामि तावदेनं पश्चात् प्रश्नेनावगतस्य अमुष्य परीक्षणेऽस्ति प्रमाणमाश्चर्यचूडामणिः ॥ विस्तरेण भणेति ॥ दूतोऽहमित्यत्र सङ्क्षेपेण कथनाद्विस्तरेणेत्युक्तम् ॥ कस्त्वं कतमेनोपायेन प्रकारेण । यदृच्छया वा स्वबुद्धया अन्यप्रेरणया वेति प्रकाराणां च बहुत्वात् कतमेनेत्युक्तम् ॥ आर्यपुत्रेण संसर्गो जातः ॥ आज्ञाकरो भृत्यः । अनेन सुग्रीवो नाम वानरराजोऽस्तीति दर्शितम् । अतः परं कथारूपत्वान्निगदव्याख्यानो ग्रन्थः । प्रादेशमात्रमिवेत्युपमया चतुरन्तपृथिवीसञ्चरणेन न किञ्चिच्छ्रमो जात इति दर्शितम् । अत्यन्तसंयोगे द्वितीया । तेन सकलदेशसञ्चरणेन तत्परिज्ञानं सूचितम् ॥ वालिनिर्भयं निर्गतं वालिनो भयं यस्मात्तत्तथोक्तम् । क्लिष्टोऽयं समासः । अभिशीङ्स्थासां

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततस्तस्मिन्काले सवञ्चनमनेन तावदल्पायुषा राक्षसेन कष्टमवस्थान्तरं स्वामिनी गमिता ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततस्स धीरोऽपि देवो रामः सागर इव कारणवलाद-धीरतां प्राप्तः ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः सानुजो हृतायुषो जटायुषः प्रामाण्यात् त्वदन्वे-षणार्थं अद्रेरद्रिं वनाद्वनं पादन्यासैरसकृदपुनात् ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः कस्मिंश्चिन्महति वनान्तरे वालिचरजनपरीक्षणार्थं सुग्रीवस्य निदेशात्सञ्चरता मया दृष्टो देवः ।

सीता— ( सहर्षं ) सच्चं तव णअणेहिं । सत्यं तव नयनाभ्याम् ।

हनूमान्— स्वामिनि अथ किम् ।

सीता— भणेहि भणेहि कीरिसो अज्जउत्तो ।
भण भण कीदृश आर्यपुत्रः ।

हनूमान्— शृणोतु स्वामिनी ।

---

कर्मेति गिरिमिति द्वितीया ॥ सागर इव कारणवलादिति ॥ य-था चन्द्रोदयात्प्रभृत्यस्तमयं यावत् सागरस्याधीरताया अनुवृत्तिस्तथा त्वद्वियो-गजनितसन्ताप आसमागममनुवर्तिष्यत इत्युपमाफलम् ॥ जटायुषः प्रामा-ण्यादिति ॥ दशग्रीवेण हृता सीतेति जटायुर्वचनप्रामाण्यादित्यर्थः । मया दृष्टो देव इति वचनामृतपानेनात्यन्तं हृष्टा सीता "श्रेयांसि बहुविघ्नानि" इति न्यायेन पुनरप्यदर्शनमाशङ्क्य तद्दर्शनं द्रढीकर्तुमौत्सुक्यातिशयेन भूयोऽपि तदेव श्रोतुं च तदुक्तमेवार्थं प्रश्नरूपणानुवदति— सत्यं तव नयनाभ्या-मिति ॥ दृष्ट इति शेषः । नयनयोर्दर्शनकरणत्वाव्यभिचारेऽपि नयनाभ्यामि-ति करणत्वाभिधानं दर्शनक्रियायाः स्फुटीकरणार्थम् । यथा नयनाभ्यां दृष्ट इत्युक्ते दर्शनं स्फुटतमं न तथा दृष्ट इत्युक्ते । अथ कीदृश आर्यपुत्र इति

सीता— अवहिदम्हि। अवहितास्मि।

हनूमान्— पूज्यपादस्य रामस्य

नखोदग्रौ पादौ रथचरणशङ्खाङ्किततलौ
स्थिरे जङ्घे मध्यं तनु मणिशिलामण्डलनिभम्।
उरः श्रीवत्साङ्कं युगलमुरगायामि भुजयोः
पयोजाभं चक्षुः परिणतशशाङ्काकृति मुखम्॥ ७॥

सीता— दाणिं पेक्खामि विअ अज्जउत्तं। तदो तदो।
इदानीं पश्यामीवार्यपुत्रम्। ततस्ततः।

हनूमान्— ततस्तदानीं देवः

कुवलयपलाशाक्षि क्व त्वं गतेति लपन्वने
स्मरपरवशः स्वामी रामो मया समलक्ष्यत।
स्नपितमसकृद्बाष्पैराविर्मणिद्युति नूपुरं
सपदि कटकस्थाने मौलीपदे च समर्पयन्॥ ८॥

स्वामिनि किं बहुना। तव चरणाभरणं देवस्य सर्वाभरणं संवृत्तम्।

सीता— कहं तुए अवगतं। कथं त्वया अवगतम्।

---

पृष्टस्तत्स्वरूपमाह— पूज्येति॥ नखोदग्रौ॥ नखैरुन्नतौ उन्नतनखावित्यर्थः। अवनतनखत्वं दौर्गत्यलक्षणम्। पादयोः शङ्खचक्राङ्कितलत्वं उरसः श्रीवत्साङ्कत्वमसाधारणचिह्नं विश्वासमपि जनयति न केवलं स्वरूपप्रतिपत्त्यर्थम्। भुजयोर्युगलमुरगायामीत्यनेनाजानुलम्बित्वं भुजयोरुक्तम्। एतदपि लोकोत्तरपुरुषलक्षणं प्रायेणासाधारणम्। एवं पादादिवक्त्रान्तं दयितस्य स्वरूपं श्रवणेन्द्रियद्वारा मनसि निधाय भावनाबलेन साक्षात्कृत्याह— इदानीमिति॥ इदानीं पश्यामीवार्यपुत्रमिति॥ कुवलयपलाशाक्षीत्यसंनिहितायाः सम्बोधनमुन्मादं द्योतयति। मम यं कञ्चिदपराधमाशङ्क्य वने यत्र कुत्रापि निलीना वर्तत इति मत्वा क्व त्वं गतेति प्रलापः। वने लपन्नित्यनेन घोरतरे विपिने एवं प्रलपतस्तस्य लक्ष्मणमात्रसहायस्य बन्धवन्तराभावेन मारुतेर्दयमानमानसत्वं व्यज्यते। एवं मदनाग्निदग्धस्य समाश्वासजनने तव नूपुरमेवैकमालम्बनमित्याह— स्नपितमिति॥ संवृत्तमित्य-

हनूमान्— अप्रत्यक्षस्य मे प्रमाणं ननु कुमारो लक्ष्मणः।

सीता— जुज्जइ। तदो तदो। युज्यते। ततस्ततः।

हनूमान्— ततस्तदानीं

मरतकरुचो माद्यद्भृङ्गा महीरुहराजयो
निपतितनदीनिर्धौतान्ता नितम्बभुवो गिरेः।
पथिकसुहृदः पम्पावीचीभिदश्च समीरणाः
क्षणमपि विभुं नालं हर्तुं हरत्सु गुणेषु ते ॥ ९ ॥

सीता— तदो तदो। ततस्ततः।

हनूमान्—

दयितमुपनयन्तं शैवलं चक्रवाकीं
मधु मधुकरमम्भोजन्मनामापिवन्तम्।
बिसवलयरसज्ञं राजहंसं च राजा
मुहुरभजत तुभ्यं देवि सन्देष्टुकामः ॥ १० ॥

सीता— तदो तदो। ततस्ततः।

---

न्तेन ॥ कथं त्वयावगतमिति ॥ मम चरणाभरणमिति कथमवगतमित्यर्थः ॥ मरतकेति ॥ ते गुणेषु विभुं प्रभुं हरत्सु आत्माधीनं कुर्वत्सु क्षणमपि एते पदार्था हर्तुं नालं त्वद्गुणगतं चित्तं स्वगुणमहिम्नाक्षिप्य समाश्वासयितुं नालम्। अकरणेऽन्यथाकरणे च शक्तिः प्रभुत्वम्। तत् त्वद्गुणेभ्योऽन्यत्र नेति विभुशब्दं प्रयुञ्जानस्याभिप्रायः। के ते पदार्था अत आह— मरतकेति ॥ मरतकरुच इत्यनेन श्यामत्वहेतुः। पम्पासम्पर्केण शीतलत्वं द्योत्यते। माद्यद्भृङ्गा इत्यनेन कुसुमितत्वं दर्शितम्। जातय इति बहुवचनेन सुरभिकुसुमानां नानाजातीयानां वृक्षाणां सद्भाव आवेदितः। ऊर्ध्वप्रदेशात् निपतितया नद्या निर्झरेण निर्धौतः शोधितः अन्तो यासां तास्तथोक्ताः ॥ नितम्बभुवो वप्रप्रदेशाः पथिकानां पान्थानामध्वश्रमापनयनसुहृदः। अन्यत्र सन्तापहराणां त्वद्वियोगात् विभोर्वैपरीत्यमभूदिति दर्शितम् ॥ दयितमिति ॥ हे देवि राजा चक्रवाकं मधुकरं राजहंसं च तुभ्यं सन्देष्टुकामो मुहुरभजत ॥ राजेत्यनेन सन्देष्टृत्वं समुचितमित्यावेद्यते। मुहुरित्यनेन तेषामव्युत्पन्नत्वेनाननुकूलत्वमौदासीन्यं मन्यमानः पुनः पुनरानुकूल्यं सम्पादयितु-

हनूमान्—

केकया च शिखिनां मृदुधूत-
केतकीसुमनसा मरुता च ।
नीरवाहमलिनासु निशासु
प्राणसंशयमगात्स मुहूर्तम् ॥ ११ ॥

सीता— हद्धि, तदो तदो । हा धिक्, ततस्ततः ।

हनूमान्— ततस्तदानीमेव विद्युत्प्रकाशे सति

करपल्लवमात्रमुज्जिहीते
मदिराक्ष्या मम वारिमग्नगात्र्याः ।
इति तूर्णमुपेत्य देवि देवो
मुहुरालम्बत कन्दलीर्विकोशाः ॥ १२ ॥

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः अन्यतो गत्वा

---

मभिप्रवृत्त इति प्रज्ञाप्यते । तेषां विशेषणत्रयं कृतार्थताद्योतनार्थं अकृतार्थानामनियोज्यत्वात् । चक्रवाक्यां शैवलमुपनयन्तं दयितमित्यन्वयः । चक्रवाक्या वदने स्ववदनेन शैवलं दत्तवन्तं चक्रवाक्या दयितं चक्रवाकमित्यर्थः । अन्यत्स्पष्टम् । अस्मिन्काले प्रावृट्कालश्च प्रादुरभूदिति दर्शयन्नाह— केकयेति ॥ प्रावृट्काले हि शिखिनां केकाः केतकीसुमनसश्च भवन्ति । एवंभूतः प्रावृट्कालो विशेषतो वियोगिभिर्न सोढुं शक्य इति प्राणसंशयमगादित्युक्तम् ॥ मुहूर्तं आविद्युत्प्रकाशादित्यर्थः । एवं प्राणसंशयं प्राप्तस्य तस्य विधातुरनुग्रहात् त्वद्दर्शनभ्रमो जीवितालम्बनमासीदित्याह— तदानीमेवेति ॥ यदि कश्चित्कालमतिक्रम्य विद्युत्प्रकाशोऽभविष्यत् तदा देवोऽवस्थान्तरमगमिष्यदित्येवशब्देन दर्शितम् । वारिमग्नगात्र्या इति शेषाङ्गादर्शनोपपत्तिभ्रमः करपल्लवभ्रमस्य स्थिरत्वे हेतुः । करपल्लवस्यापि निमज्जनमाशङ्क्य तूर्णमुपयानं कृतम् । विकोशाः कन्दलीः विकसितानि रक्तोत्पलानि मुहुरभजत गृहीतवान् । एकस्मिन् रक्तोत्पले गृहीते नेदं करपल्लवं रक्तोत्पलमेवेति सञ्जातबोधः पुनरन्यद्रक्तोत्पलं करपल्लवभ्रमेणाग्रहीत् एवं तत्रापि बाधेऽन्यत् इत्यनेन मुहुरित्यनेन दर्शितम् । अत एव कन्दलीरिति बहुवचनम् । अथ पम्पाया उत्तीर्य तीरवनं प्राप्तस्य मदनोन्मादान्तरं निवेदयति— आपाद्येति ॥ काञ्चित्कल्पवल्लीं दृष्ट्वा

आपाद्य भङ्गि शयनं तरुणैः प्रवालै-
रालूय पुष्पमलकाभरणास्थया ते ।
वैदेहि चण्डि मम जीवित मानिनि त्वं
एहीति सान्त्वयति कामपि पुष्पवल्लीम् ॥ १३ ॥

सीता— होदु एदं । एत्तएण पवणपुत्त पिअं खु इत्थिआणं । मम खु दाव सोअं वीळं अ उप्पादेदि । भणेहि भणेहि अधण्णाए मम किदे अज्ज वि तादिसो एव्व अज्जउत्तो ।

भवत्वेतत् । एतावता पवनपुत्र प्रियं खलु स्त्रीणाम् । मम खलु तावत् शोकं व्रीडां चोत्पादयति । भण भण अधन्याया मम कृते अद्यापि तादृश एवार्यपुत्रः ।

हनूमान्— न हि न हि सहायलाभादिदानीं प्रसन्नो देवः ।

सीता— अज्जउत्तस्स अणत्थमित्तं दाणिं कहेहि ।

आर्यपुत्रस्य अनर्थमित्रमिदानीं कथय ।

हनूमान्— ततस्तस्माद्वनादुपनीय संस्कारेण शरीरशरीरिणोरिव

---

त्वत्कृतेन प्रवालैः भङ्गि चारुतरं शयनं निर्माय तेऽलकाभरणास्थया पुष्पमालूय इति सान्त्वयति--हे वैदेहि त्वमेहि इदं शयनमलङ्कुरु अनेन पुष्पेण त्वामलङ्करोमि । आभिमुख्याभावात् पुनरपि सम्बोधयति— मम जीवितभूते त्वमेव मम जीवितमित्यर्थः । अतस्त्वया विना क्षणमप्यवस्थातुं न शक्नोमि अतः किं विलम्बसे ॥ मानिनि मानशीले । यत एवंभूतं मां दृष्ट्वा मानं नोत्सृजसि अतः तव मानः स्वभाव एव ॥ चण्डि यतस्त्वद्विरहसन्तापविवशं मां दृष्ट्वा कारुण्यलेशमपि न करोषि अतः कठोरहृदयैव त्वमित्यभिप्रायः ॥ पवनपुत्र एतत् प्रियस्य विरहदुःखं स्त्रीणां भर्तृव्यतिरिक्तानां प्रियं भवतु ॥ अनुरागद्योतकत्वात् ॥ मम त्वेतच्छोकं व्रीडां चोत्पादयति ॥ मदीयशोको मया कथञ्चित् सोढुं शक्यः । निसर्गत एवार्यपुत्रस्य शोको मया कथञ्चिदपि सोढुं न शक्यते यतो मत्तोऽप्यार्यपुत्र एवाधिकतरं प्रियतर इत्यभिप्रायः । ते गुणेषु हरत्सु इत्यादिश्रवणेन महती लज्जा च जायते ॥ भण भण अधन्याया मम कृतेऽद्यापि तादृशो दुःखविवश एवार्यपुत्रः ॥ न हि न हीति ॥ इदानीं न शोकविवश इत्यर्थः । शोकाभावे कारणमाह— सहायेति ॥ इदानीमार्यपुत्रस्यानर्थमित्रं कथयेति ॥ ततो मया तस्माद्वनादुपनीय सल-

रामसुग्रीवयोः सम्बन्धो मया कारितः ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततस्तदनुभावादत्यन्तदूरीकृतवालिभयं ऋक्षवानरैश्वर्यं अखिलदिङ्मण्डलविषयमप्रतिहतशासनमयत्नमेव स्वामी प्रत्यपद्यत ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— एवं सिद्धार्थः सुग्रीवः पश्चात् त्वदन्वेषणोपक्रमे स्वामिकर्मणि व्यापृतः ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः परिहासमात्रमिव जन्मना देवानामतिशायिनः कर्मणा वानरवीरानृक्षाधिपतींश्च कृतसमयानसृजदाशाचतुष्टयम् ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— अस्यामपि दिशि युवराजनेतृकमृक्षेश्वरपुरोगमस्मदादि विरलमादिशदिदं सैन्यम् ।

---

क्ष्मणं रामं सुग्रीवसमीपं प्रापय्य **रामसुग्रीवयोः** मित्रभावलक्षणः **सम्बन्धो मया कारितः संस्कारेण शरीरशरीरिणोरिव** ॥ जन्मान्तरार्जितपुण्यापुण्यवासना संस्कारः तेन कर्तृत्वभोक्तृत्वादिधर्मयुक्तं जीवात्मानं प्राक्तनदेहादानीय तस्य फलोपभोगार्थं स्वार्जितेन देहान्तरेण सम्बन्धः कार्यते यथा तथेत्यर्थः । आत्मनः संस्कारसाधर्म्येणात्मना कारितस्यापि सुग्रीवरामयोस्सम्बन्धस्य राज्यप्राप्तिसीतालाभादिफललाभहेतुत्वं गम्यते । शरीरशरीरिणोरिवेत्यनेन मित्रभावस्य सुश्लिष्टत्वं द्योत्यते । अत्यन्तदूरीकृतवालिभयमित्यत्रात्यन्तशब्देन वालिवधो दर्शितः ॥ **स्वामी** सुग्रीवः ॥ **जन्मना परिहासमात्रमिवेति** ॥ "अकर्तरि च कारके संज्ञायाम्" इति कर्मणि परिहासशब्दः । इवशब्दो भानार्थः । जन्मना जात्या आकृत्येति फलितोऽर्थः । परिहासमात्रं परिहास्या एव । एनेन पराक्रमादिगुणशालिन इति भाति । आकारदर्शनेन यः परिहास्यत्वमात्रभ्रमः स पराक्रमादिकर्मणापगच्छतीत्याह— **कर्मणेति** ॥ देवानामिति कर्मणि षष्ठी । देवानतिशय्य वर्तन्त इत्यर्थः ॥ **असृजत्** व्यसृजत् ॥ **आशाचतुष्टयं** प्रतीति शेषः । **विरलं** अल्पं **अस्मदादि** वय-

सीता— संकणिज्जा एसा आसा । तदो तदो ।
शङ्कनीयैषाशा । ततस्ततः ।

हनूमान— ततः सर्वेषु वानरवीरेषु स्थितेष्वपि पूर्वदर्शनविस्रम्भान्मामुपह्वरमाहूतवता देवेन दत्तमुक्तं च ।

सीता— ( सहर्षं ) किं किं । किं किं ।

हनूमान्— ( प्रणिपत्याङ्गुलीयकं प्रयच्छति )

सीता— ( सहर्षं प्रतिगृह्य निर्वर्ण्य ) एदमच्चरिअं अङ्गुलीअअं । एदं तपोधणेहिं दिण्णं । एदं कुमारेण आणीदं । ( अङ्गुलीयमादाय च विलपति )
एतदाश्चर्यमङ्गुलीयकम् । एतत्तपोधनैर्दत्तम् । एतत्कुमारेणानीतम् ।

हनूमान्— एषा देवी

आरोपयत्यलकमानयति स्ववक्त्रं
भूयस्समाश्रयति बाहुलतोपपीडम् ।

---

मादिर्यस्य तत्तथोक्तम् । युवराजोऽङ्गदो नेता यस्य तत् । ऋक्षराजो जाम्बवान् । अङ्गदजाम्बवद्धनूमदादियुक्तसैन्यादेशहेतुमुत्प्रेक्षते— शङ्कनीया खल्वेषा आशा इति ॥ सर्वेषु अङ्गदजाम्बवदादिषु मत्तोऽप्युत्कृष्टेषु वानरवीरेषु स्थितेष्वपि ॥ अपिशब्दो विरोधे ॥ मामुपह्वरं समीपं आहूतवता दत्तं उक्तं च ॥ मदाह्वाने हेतुः पूर्वदर्शनविस्रम्भ एवेत्युक्त्या तस्य वीरत्वादिगुणैरौद्धत्याभावः प्रतीयते । तुभ्यं दत्तं त्वां प्रत्युक्तं चेत्यर्थात्सिध्यति । अङ्गुलीयकस्य समर्पणमेव समुचितं मत्वा दानक्रियाकर्मत्वेनानभिधानम् । दानक्रियाभिधानं तु दत्तवस्तुजिज्ञासोत्पादनद्वारेण समर्पणावसरलाभार्थम् । प्रतिगृह्येति स्पर्शमात्रप्रतिग्रहः । अङ्गुलीयमादायेति पुनर्दर्शनात् । अथ बहुधा प्रत्यभिजानाति— एतदाश्चर्यमङ्गुलीयकं एतत्तपोधनैर्दत्तम् ॥ एतत् कुमारेणानीतमिति ॥ आदायेति ॥ पूर्वं स्पर्शमात्रेण प्रतिगृह्य प्रत्यभिज्ञाय पश्चात्कराभ्यामादायेत्यर्थः । इदं लोआभरणस्सेत्यादिर्विलापो विलपतीत्यनेनोक्तः । आत्तेनाङ्गुलीयकेन विलापात्पूर्वमाश्वासनप्रकारं पश्यन् अभिनन्दति— एषेति ॥ एषा देवी अङ्गुलीयकमलकमारोपयति ॥ अलकेषु समर्प्याश्वसिति । एवं सर्वेष्वाख्यातेषु अङ्गुलीयस्य कर्मत्वमर्थात्सिध्यति । ततो वदने समर्प्य बाहुलतोपपीडं बाहुलताभ्यामङ्गुलीयकमुपपीड्य भूयः समाश्रयति आलिङ्गति । अनेनाङ्गुलीयाश्लेषे भावनाबल-

प्रत्येकमर्पयति चाङ्गुलिपल्लवेषु
ध्यानाधिकस्तिमितमार्द्रमवेक्षते च ॥ १४ ॥

सीता— इदं लोआभरणस्स आभरणं, इदं बाणासणगुणपरिखे-
दिअं, इदं रक्खसमाआपिसुणं, इदं रअणीसु रअणदीवो, इदं
वदणालंकारविकप्पादरिसो ।
इदं लोकाभरणस्याभरणं, इदं बाणासनगुणपरिखिन्नं,
इदं राक्षसमायापिशुनं, इदं रजनीषु रत्नदीपः, इदं वद-
नालङ्कारविकल्पादर्शः ।

हनूमान्— अस्याः कृते ततोऽपि शतगुणमुन्मादं कर्तुमर्हति देवः ।

सीता— अङ्गुलीअअ दाणिं अज्जउत्तहत्थब्भासविरहिदो तुवं वि ।
तुवं वि अज्जउत्तेण पाणिणा गहीदोऽसि । तव केण विवण्ण-
त्तणं जादं । तुवं वि अहं विअ रक्खसबन्दीभूदो ।
अङ्गुलीयक इदानीमार्यपुत्रहस्ताभ्याशविरहितस्त्वमपि ।
त्वमप्यार्यपुत्रेण पाणिना गृहीतोऽसि । तव केन विपन्नत्वं
जातं, त्वमप्यहमिव राक्षसबन्दीभूतः ।

---

परिकल्पितप्रियतमाश्लेषबुद्धिर्द्योत्यते । अत एव आलिङ्गिदा विअ इति वक्ष्य-
ति । ततोऽङ्गुलीषु समर्प्य ध्यानाधिकमवेक्षते च । अन्तरा ध्यानेन दयितगो-
चरेण सङ्कल्पेनाधिकं युक्तमित्यर्थः । अवेक्षणस्य स्तिमितत्वं ध्यानस्यानुभावः ।
यतोऽवेक्षणं स्तिमितं ततो ध्यानाधिकमिति योज्यम् । अङ्गुलीयकदर्शने यच्चेत-
स्सुखं तस्यानुभावोऽवेक्षणस्यार्द्रत्वमिति ॥ एतल्लोकाभरणस्याभरणं,
इदं बाणासनगुणपरिखिन्नं, इदं राक्षसमायापिशुनं, इदं रजनीषु
रत्नप्रदीपः, इदं वदनालङ्कारविकल्पितादर्शः ॥ वदनालङ्कारदर्शनार्थं
परिकल्पित आदर्शः । आदर्शत्वेन परिकल्पितमित्यर्थः ॥ अस्याः कृते ॥
ततोऽपि पूर्वदृष्टादुन्मादाच्छतगुणम् । पूर्वं देवस्योन्मादोऽतिकष्ट इति बुद्धिरभूत्
इदानीं तु एवंभूताया अस्या दर्शनेऽल्पीयानेव देवस्योन्माद इति मतिर्भवति ॥
हे अङ्गुलीयक इदानीमार्यपुत्रहस्ताभ्याशविरहितः त्वमपि ॥
अपिशब्देनाहमिवेति दर्शयति । त्वमप्यार्यपुत्रेण पाणिना गृहीतमसि ॥
अहमिवेत्यर्थः ॥ तव केन विपन्नत्वं जातं त्वं त्वहमिव न राक्षसेन हृतामिति
किंशब्देन दर्शितम् ॥ त्वमप्यहमिव राक्षसबन्दीभूतमिति ॥ अथ सी-
ताया विलपने रामहस्तवियोगात् अङ्गुलीयकस्य केवलं शोचनीयत्वमेव जातं

हनुमान—

रघुवृषभकराङ्गुलीवियोगा-
दधिगतविश्रममेषु वासरेषु ।
विरहदहनवेदनापरीतं
नयति नताङ्गि तवाङ्गमङ्गुलीयम् ॥ १५ ॥

सीता— किं णु खु करिस्सं । किं नु खलु करिष्यामि ।

हनुमान्— ( आत्मगतं ) अस्याः खलु

शरपाण्डुरगात्रेषु श्यामां पुलकितामपि ।
अङ्गुलीयस्य चरतः पश्यामि पदवीमहम् ॥ १६ ॥

सीता— वाँचइस्सं दाव दाणिं णामक्खरं । ( उत्तानहस्तावलोकयति )
वाचयिष्यामि तावदिदानीं नामाक्षरम् ।

हनुमान—

अरुणे परिशीर्णमञ्जलौ
निपतन्तो नयनोदबिन्दवः ।

---

नान्यत्किञ्चित्प्रयोजनमित्युक्तमिव भाति तत्र । तद्यथेत्याह— रघुवृषभेति ॥ हे नताङ्गि रघुवृषभकराङ्गुलीवियोगाद्धेतोः त्वदङ्गं प्राप्य इदमङ्गुलीयं कर्तृ तवाङ्गं कर्म एषु वासरेषु अधिगतविश्रमं नयति करोतीत्यर्थः । अधिगतः प्राप्तो विश्रमो विरहदहनवेदनोपशमो येन तत् तथोक्तम् । एषु वासरेष्वित्यनेन मारुतिना तस्माद्वासरात्प्रभृति राघवसङ्गमदिवसपर्यन्ता भविष्यन्तो वासराः स्वबुद्ध्या परिच्छिन्ना अभिधीयन्ते । परिच्छिन्नत्वेन वासराणां बहुत्वं नास्तीति दर्शितम् । भर्तृसङ्गमं यावदनेनाङ्गुलीयेन तव विरहवेदना सोढव्या भविष्यतीति समष्टयर्थः ॥ किन्नु खलु करिष्यामीति ॥ अङ्गुलीयकप्रदानस्यानुरूपं किं कर्म करिष्यामीत्यर्थः । किन्नु खल्वितीयं चिन्ता चूडामणिप्रदानस्य बीजभूता ॥ शरेति ॥ अङ्गुलीयकसंस्पर्शसमकालमेव विरहपाण्डिम्नोऽपगमं श्यामत्वं चोच्यमानं विरहवेदनायाः अल्पीयस्त्वं द्योतयितुम् । पुलकितामित्यनेनानन्दाविर्भावो दर्शितः । अनेन दयिताङ्गसंस्पर्शदेशीयत्वमङ्गुलीयकसंस्पर्शस्य दर्शितम् । अत एवालिङ्गितेवार्यपुत्रमिति वक्ष्यति ॥ अरुण इति ॥ वाचनासमय उत्तानहस्तत्वात् करयोरञ्जल्यात्मकत्वम् । परिशीर्णं परितः शीर्णं विस्तृतं यथा भवति तथा निपतन्तो नयनोदबिन्दवः हर्षाश्रुबिन्दवः ।

शकलीकृतमौक्तिकत्विषो
हिमलेशा इव पङ्कजोदरे ॥ १७ ॥

सीता— भद्द तव दंसणमत्तेण अहिमुहं देवदं ति मए विण्णादं। अवि अ अङ्गुलीअप्पदाणेण आलिंगिदा विअ अज्जउत्तं । दाणिं उण वअणस्सवणे सकुदूहलं मे हिअअं । ण उण अहिण्णाणत्थं अवरं। अज्जउत्तस्स अहिण्णाणवअणं मे भणेहि।

भद्र तव दर्शनमात्रेणाभिमुखं दैवतमिति मया विज्ञातम् । अपि चाङ्गुलीयप्रदानेन आलिङ्गितेवार्यपुत्रम्। इदानीं पुनर्वचनश्रवणे सकुतूहलं मे हृदयम् । न पुनरभिज्ञानार्थमपरम् । आर्यपुत्रस्याभिज्ञानवचनं मे भण ।

हनूमान्— अत्रभवत्या वञ्चनाभूमौ वर्तमानाया अभिज्ञानदृढीकरणार्थमिदमप्याह ।

सीता— किं णु खु। अवहिदम्हि। किं नु खलु। अवहितास्मि।

हनूमान्— शृणोतु स्वामिनी ।

आयातं मामपरिचितया वेलया मन्दिरं ते
चोरो दण्ड्यस्त्वमिति मधुरं व्याहरन्त्या भवत्या ।

---

अरुण इत्यञ्जलिपङ्कजोदरयोः साधारणं विशेषणम् । शकलीकृतमौक्तिकत्विष इति विशेषणमश्रुबिन्दुहिमकणानां साधारणम्। पूर्णोपमा चेयम्॥ तव दर्शनमात्रेणेति ॥ नेदानीमङ्गुलीयदर्शनात् त्वयि विश्वास इति मात्रचा दर्शितम् । दर्शनानन्तरमेवार्यपुत्रदूतत्वनिश्चयात् देवतानामाभिमुख्यं मया विज्ञातम् ॥ अपि चाङ्गुलीयकप्रदानेनालिङ्गितेवार्यपुत्रं॥ दूतबुद्ध्या भाविसङ्गमो निश्चितः। अङ्गुलीयकप्रदानेन इदानीमेवार्यपुत्रसङ्गमो जात इवेत्यर्थः। इदानीं पुनर्वचनश्रवणे सकुतूहलं मे हृदयम् ॥ उक्तं चेत्यनेनोक्तस्य वचनस्य श्रवण इत्यर्थः ॥ न पुनरभिज्ञानार्थमपरम्॥ त्वद्दर्शनादङ्गुलीयकदर्शनाच्चाधिकं नापेक्ष्यते ॥ आर्यपुत्रस्याभिज्ञानवचनं मे भणेति ॥ असाधारणं चिह्नं तज्जन्यं ज्ञानं वाभिज्ञानम् ॥ वञ्चनाभूमौ ॥ वञ्चना माया तस्या भूमिः मायाप्रयोगनिपुणानां राक्षसानां भूमिलङ्केत्यर्थः । अनेन भूयसां प्रत्ययकारणानामपेक्षा दर्शिता । अभिज्ञानदृढीकरणार्थं पूर्वपूर्वाभिज्ञानदृढीकरणमुत्तरोत्तराभिज्ञानप्रयोजनम् । अभिज्ञानवचनमाह— आयातमिति ॥

मन्दे दीपे मधुलवमुचां मालया मल्लिकानां
बद्धं चेतो दृढतरमिदं बाहुबन्धच्छलेन ॥ १८ ॥

सीता—( सहर्षं आत्मगतं ) दाणिं आसालदे पसवं बंधेहि । तुमं दाव मारुइणा अमिदेण सिंचीअसि । हिअअ तुवं वि लद्धप्पवेसमग्गोसि अज्जउत्तेण । जीविअ तुवं वि जमलोअस्स अद्धपहे णिवुत्तोसि । ( प्रकाशं ) पवणतणअ तुज्झ किं वि भणिदुकाभम्हि । भणिदव्वं पुण ण जाणामि । अत्थि तव गुरुमारुओ लोअस्स पाणो, मम खु दाव तुवं पाणो संवुत्तो ।

इदानीमाशालते प्रसवं बध्नीहि । त्वं तावत् मारुतिना अमृतेन सिच्यसे । हृदय त्वमपि लब्धप्रवेशमार्गमस्यार्यपुत्रेण । जीवित त्वमपि यमलोकस्यार्धपथे निवृ-

---

अपरिचितया वेलया दीपे मन्दे सति ते मन्दिरमायातं मां प्रति त्वं चोरो दण्ड्यः इति मधुरं व्याहरन्त्या भवत्या मल्लिकानां मालया बाहुबन्धच्छलेन दृढतरमिदं चेतो बद्धमित्यन्वयः । वेला कालः नित्यं परिचितो यः शय्यागृहागमनकालः तमतीत्य गुरुजनपरिचर्यादिकार्यान्तरेण सविलम्बं ते शय्यागृहमायातमित्यर्थः । चोरशब्देनान्याङ्गनागमनमारोप्य सूच्यते । न हि स्वप्नेऽपि जानक्या अन्याङ्गनागमनशङ्कास्ति अतो दयितचित्तविलोभनार्थमतिमनोहरक्रीडाविशेष एवायम् । यतस्त्वं चोरः अतस्त्वं दण्ड्य इति मां प्रति मधुरं व्याहरन्त्या । व्याहरणस्य माधुर्योक्त्या तच्छ्रवणेनानन्दातिशयः सूच्यते । मल्लिकानां मालयेत्यनेनानुकूल्याभावे सौकुमार्यातिशयेन तया बन्द्धुमशक्यत्वात् बन्धनार्थं बाह्वोर्बुद्धिपूर्वमानुकूल्यं सम्पादितमिति द्योत्यते । बाहुबन्धच्छलेनेत्यनेन बन्धनेन बाह्वोः किञ्चिद्वैवश्यं जातं चेतसस्तु मनोज्ञतमक्रीडाविशेषजनितानन्दानिमग्नत्वेन दृढतरं बन्धनं जातम् । अपह्नुतिरलङ्कारः । "प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः" इति तल्लक्षणम् । अथानन्यवेद्याभिज्ञानवचनश्रवणेनात्यन्तं विश्वासमुपगता सहर्षमाह— इदानीमिति ॥ इदानीं आशालते प्रसवं कुसुमं बध्नीहि ॥ त्वं तावन्मारुतिनामृतेन सिच्यसे ॥ हृदय त्वमप्यार्यपुत्रेण लब्धप्रवेशमार्गमसि ॥ जीवित त्वमपि यमलोकस्यार्धपथे निवृत्तमसीति ॥ पवनतनय तव किमपि भणितुकामास्मि ॥ भणितव्यं न जानामि ॥ एवं महतो व्यसनादुत्तारयन्तं त्वां समुचितेन वचने-

त्वमसि । पवनतनय तव किमपि भणितुकामास्मि । भणितव्यं पुनर्न जानामि । अस्ति तव गुरुर्मारुतो लोकस्य प्राणः, मम खलु तावत्त्वं प्राणः संवृत्तः ।

हनूमान्— दक्षा खलु देवी भृत्यसान्त्वने ।

(अधोमुखस्तिष्ठति)

सीता— पभञ्जणसूणो कहेहि कहेहि । अच्चरिअं खु एदं । केण दाणिं उवाएण एत्थ आअदो लंघिदो वा अअं महासमुद्दो ।
प्रभञ्जनसूनो कथय कथय । आश्चर्यं खल्वेतत् । केनेदानीमुपायेनात्रागतो लङ्घितो वायं महासमुद्रः ।

हनूमान्— ततस्तदाज्ञां देवस्य शेषमिव शिरसा प्रतिगृह्य प्रक्रान्तमिमां दिशं वानरसैन्यमासीत् ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः खलु

मेघावृतासु जगतीधरकन्दरासु
रोधोवनेषु सरितां सरसद्रुमेषु ।
वेलातटे जलनिधेरपि ते विनिद्र-
मन्वेषणाय समयो गमितः कपीन्द्रैः ॥ १९ ॥

---

न संभावयितुं महती वाञ्छास्ति किं तदेतदनुरूपं समुचितं वचनमिति न जानामीत्यभिप्रायः ॥ आस्ति तव गुरुर्मारुतो लोकस्य प्राणः प्राणभूतः ॥ मम खलु तावत्त्वं प्राणः संवृत्तः ॥ त्वं मम प्राण इति वचनं भृत्यसान्त्वनप्रकार एव व्यसनमुत्तारकस्तु वस्तुतस्तव भर्तैवेत्यभिप्रायेणाह— दक्षेति ॥ प्रभञ्जनसूनो भण भण केनोपायेन लङ्घितो वायं महासमुद्रः ॥ लङ्कायामस्मिन्नुद्याने शिंशपामूले ममावस्थानमिति केनोपायेनावधार्यागत इत्यर्थः । अवधारितेऽपि मम वृत्तान्ते केनोपायेन महासमुद्रो लङ्घित इति सोपस्कारं व्याख्येयम् ॥ ततः अङ्गुलीयकदानानन्तरं तदाज्ञां आदिशदिदं सैन्यमित्यनेनोक्तां प्रतिगृहीतदेवाज्ञस्य सुग्रीवस्याज्ञां देवस्य शेषमिव देवेनालङ्कृतां मालामिव शिरसा प्रतिगृह्य इमां दिशं प्रति तस्माद्द्रेर्माल्यवतः प्रक्रान्तं निर्गतं आसीत् ॥ प्रतिष्ठत इतिवत् प्रशब्दो निर्गमनार्थद्योतकः ॥ मेघेति ॥ ततस्तैः कपीन्द्रैस्ते अन्वेषणाय सञ्चरद्भिरित्यध्याहार्यम् ॥ विनिद्रं समयो गमितः ॥ विनिद्रमित्यनेनान्वेषणे तात्पर्यं दर्शितम् । कुत्रेत्यत आह— मेघेत्यादिना ॥ अत्र च पर्वतन-

सीता— तदो तदो । तवस्ततः ।

हनूमान — ततोऽतिक्रमणात्समयस्य सर्वे वानरपतयः प्रायोपवेश-
नमतिं चक्रुः ।

सीता— हद्धि, तदो तदो । हा धिक्, ततस्ततः ।

हनूमान्— ततो हतायुषो जटायुषः सहजः सम्पातिर्नाम गृध्रराजः
स्वरोपलम्भेन तां प्रायोपवेशनभूमिमभिगतवानासीत् ।

सीता— तदो तदो । ततस्ततः ।

हनूमान्— ततः स खलु स्वामिनि तवेमामवस्थां सहोषित इव
व्यक्तमस्मान् न्यवेदयत् ।

सीता— अहो उपआरपक्खा सा जादी । पुव्वं वि तस्स भादा
मम कारणादो उज्झिदवन्तो पाणाणि । तदो तदो ।
अहो उपकारपक्षा सा जातिः । पूर्वमपि तस्य भ्राता मम
कारणादुज्झितवान् प्राणान् । ततस्ततः ।

हनूमान्— ततस्तदुपदेशात् लङ्घितो महार्णवः । प्राप्तमिदमुद्यानम् ।

सीता — मम सोअसाअरो खु तुए लंघिदो । वसणकण्णधार मा-
रुदसूणो कहेहि इमस्स वसणस्स परिअवसाणकालो कदमो ।
मम शोकसागरः खलु त्वया लङ्घितः । व्यसनकर्णधार
मारुतसूनो कथयास्य व्यसनस्य पर्यवसानकालः कतमः ।

हनूमान्— तवास्ति भर्तृसन्देशः ।

सीता— अत्थि मम संदेसो ? अणुग्गहिदम्हि ।
अस्ति मम सन्देशः ? अनुगृहीतास्मि ।

---

दीतीरवनसमुद्रवेलातटानां क्रमो विवक्षितः । अतः परं स्पष्टोऽर्थः ॥ सहोषित
इव ॥ यो नित्यं सह वसति स सहोषितः ॥ अहो उपकारपरा सा जातिः
पूर्वमपि तस्य भ्राता मम कारणात् प्राणानुज्झितवान् ॥ तव
कारणादित्यस्यैव व्याख्या मम कारणादित्यस्यापि । एवं केनोपायेन मद्वृत्ता-
न्तपरिज्ञानमित्यस्य प्रश्नस्योत्तरं दत्त्वा समुद्रलङ्घनं तूपायनिरपेक्षमेवेति दर्शय-
न्नाह— लङ्घित इति ॥ मम शोकसागरः खलु त्वया लङ्घितः ॥ व्य-
सनकर्णधार मारुतसूनो अमुष्य व्यसनस्य पर्यवसानकालः क-

हनूमान्— अयं भर्तृसन्देशः।

सदसि नमयता धनुर्मया त्वं
गुरुजघने गुरुमन्दिरादवाप्ता।
दशवदननिरोधनादपि त्वां
युधि विनमय्य शरासनं हरामि ॥ २० ॥ इति।

सीता— रक्खसस्स पाणाणि पुढमं गेह्णिअ पच्छा मं हरिस्सदि खु अज्जउत्तो। जइ एव्वं किं दाणिं विलम्बसि। गच्छ सिग्घं। गेह्ण इमं चूडामणिं इसीणं अणुग्गहं। अज्जउत्तो वि दाव इमं पेक्खिअ अणुपेक्खिदव्वो भवे। ( चूडामणिं प्रयच्छति )

राक्षसस्य प्राणान् प्रथमं गृहीत्वा पश्चान्मां हरिष्यति खल्वार्यपुत्रः। यद्येवं किमिदानीं विलम्बसे। गच्छ शीघ्रम्। गृहाणेमं चूडामणिमृषीणामनुग्रहम्। आर्यपुत्रोऽपि तावदिमं प्रेक्ष्यानुपेक्षितव्यो भवेत्।

हनूमान्— ( आत्मगतं ) अहो प्राप्तज्ञता दाक्षिण्यं च देव्याः। ( प्रकाशं ) प्रसीदतु स्वामिनी। ( प्रतिगृह्णाति )

---

तमः ॥ मारुतेः कर्णधारत्वारोपेण व्यसनस्य समुद्रत्वं गम्यते। कर्णधारो नाविकः ॥ सदसीति ॥ हे गुरुजघने यथा मया पूर्वं सदसि अन्यैः क्षत्रियवीरैर्दुरानमं त्रैयम्बकं धनुर्नमयता जनकमन्दिरादवाप्ता तथा इदानीं दशवदनस्य निरोधनात् निरोधगृहादपि। अधिकरणे ल्युट्। युधि शरासनं विनमय्य हरामि युद्धे दशग्रीवमुद्दिश्य शरासननमनं दशग्रीवनिग्रहं विना न पर्यवस्यतीत्यपर्यवसानलभ्यत्वात् दशग्रीवनिग्रहस्यानभिधानम्। अनेन त्रैयम्बकधनुर्भङ्गादपीषत्करत्वं रावणवधस्य द्योत्यते ॥ राक्षसप्राणान् प्रथमं गृहीत्वा पश्चान्मां हरिष्यत्यार्यपुत्रः ॥ तत् तथैव युक्तमिति वाक्यपरिसमाप्तिः ॥ यद्येवं किमिदानीं विलम्बसे ॥ विलम्बो न कर्तव्य इत्यर्थः ॥ गच्छ शीघ्रं गृहाणेमं चूडामणिमृषीणामनुग्रहम् ॥ आर्यपुत्रोऽपि तावदिमं प्रेक्ष्यानुपेक्षितव्यो भवेत् ॥ यथाङ्गुलीयकदर्शनेनार्यपुत्रस्य मय्युपेक्षा नास्तीति मम बुद्धिरभूत् तथा चूडामणिदर्शनेऽस्या मय्युपेक्षा नास्तीति बुद्धिर्भविष्यति। एतावन्तं कालं मत्परैवेयमिति ज्ञास्यतीत्यर्थः ॥ अहो इति ॥ प्राप्तज्ञता उचितज्ञता ॥ दाक्षिण्यं परचित्तानुवर्तित्वम्। अनेन कर्मणा मम स्वामिनश्च चित्तमनुरञ्जितम् ॥ त्व-आर्यपुत्रो यथा शोकपरवशो न भवेत् तथा मे वृत्तान्तं भण ॥ त्व-

सीता— अज्जउत्तो जह सोअपरवसो ण होइ तह मे उत्तंतं त- स्स भणेहि।

आर्यपुत्रो यथा शोकपरवशो न भवति तथा मे वृत्तान्तं तस्य भण।

हनूमान्— अनुगृहीतोऽस्मि।

सीता— गच्छ दाणिं तुवं। अहं वि पुरो विअ सिंसपासंसिदा भ- विअ तुम्हाणं वुत्तंतं पडिपालेमि।

गच्छेदानीं त्वम्। अहमपि पुरोवत् शिंशपासंश्रिता भूत्वा युष्माकं वृत्तान्तं प्रतिपालयामि।

हनूमान्— यदाज्ञापयति स्वामिनी।

रक्षोवधाद्विरतकर्म विसृज्य चापं
गोधाङ्गुलित्रपदवीषु धृतव्रणेन।
रेखातपत्रकलशाङ्कितलेन रामो
वेणीं करेण तव मोक्ष्यति देवि देवः॥ २१॥

सीता— अविग्घं ते होदु। अविघ्नं ते भवतु।

(निष्क्रान्तौ)

इति शक्तिभद्रविरचिते चूडामणिनाटके षष्ठोऽङ्कः॥

---

सीते गच्छ॥ अहमपि पुरोवदिमां शिंशपां संश्रिता युष्माकं वृत्ता- न्तं प्रतिपालयामि॥ अथ गच्छन्मारुतिरचिरभाविप्रियसङ्गमवचनामृतेना- श्वासयति— रक्षोवधादिति॥ ताटकादिरावणपर्यन्तानां रक्षसां वधाद्धेतोः विरतं कर्म व्यापारो यस्य तत् तथोक्तम्। तथाविधं चापं विसृज्य निधाय। अनेन महाविक्रमस्य रक्षोवधप्रतिज्ञत्वेन कामानुभवाधिकारो द्योत्यते। करेण तव वेणीं। चिरबन्धितकृतः जटारूपेण बद्धः केशैकदेशो वेणी। देवस्तां मोक्ष्यति॥ गोधा- ङ्गुलित्रपदवीषु॥ गोधा करबन्धनार्थो गुणः अङ्गुलित्रमङ्गुलिबन्धनार्थः तयोः पदवीषु स्थानेषु धृतव्रणेन धृतव्रणकिणकणिकेनेत्यर्थः। एतज्ज्याघातकिणस्यो- पलक्षणम्। अनेन वीररसूचकानां व्रणकिणानां संभोगशृङ्गारोद्दीपनविभा- वत्वं दर्शितम्॥ रेखातपत्रकलशाङ्कितलेन रेखारूपेणातपत्रेण कलशेन चाङ्कितं चिह्नितं तलं यस्य तत्तथोक्तम्। अयमप्युद्दीपनविभावः। अचिरभावि- नं मद्विषयमनुध्यायैवानतिशोका भूत्वास्मदागमनं प्रतिपालयेत्यभिप्रायः॥

इत्याश्चर्यचूडामणिविवृतौ षष्ठोऽङ्कः॥

## ॥ अथ सप्तमोऽङ्कः ॥

( ततः प्रविशति विद्याधरः प्रियया सह )

विद्याधरः— सौदामिनि अद्यापि तावद्विद्यादैवतमाराधयता मया नोपलक्षितो महेन्द्रसेवाकालः। तत् खिन्नापि मामनुगच्छ गमनत्वरया कालं नातिपातयावः।

सौदामिनी— अज्ज आअदम्हि। आर्य आगतास्मि।

विद्याधरः— सौदामिनि एहि।

साधु संयमय मूर्धजन्मना—
मुच्छ्वसत्कुसुमदाम बन्धनम्।
कुण्डलांशुरचितेन्द्रकार्मुकं
कार्मुकभ्रु रचय स्तनांशुकम्॥ १॥

---

आश्चर्यचूडामणिनाटकेऽङ्कः षष्ठो मया व्याकृत एष कृच्छ्रात्॥
व्याख्यास्यतेऽस्माभिरनन्यचित्तैरन्यस्तथाङ्कोऽपि गभीरहृद्यः॥
( हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः॥ )

अथ विष्कम्भमाश्रित्य रावणवधं सूचयितुं विद्याधरमिथुनस्य प्रवेशः। सुमेरुशिखरनिवासी कश्चित् विद्याधरः प्रियया सह महेन्द्रसेवार्थं जिगमिषुस्तां प्रत्याह—सौदामिनीति॥ अद्यापि अस्मिन्दिवसे एतावन्तं कालं मया महेन्द्रसेवाकालो नोपलक्षितः॥ इदानीमेव स्मृत इत्यर्थः। अपिशब्देनात्यासन्नेऽपि सेवाकाले न स्मृतिरभूदिति दर्शितम्। अस्मरणे हेतुमाह— विद्यादैवतमाराधयतेति॥ यत्प्रसादात् विद्याधरत्वं तद्दैवतमित्यर्थः। तत् तस्मात्सेवाया आवश्यकत्वात् खिन्नापि दैवतपूजार्थं व्रतक्लिष्टापि मामनुगच्छ गमनत्वरया कालं नातिपातयावः॥ यथाकालं सेविष्यावह इत्यर्थः॥ साध्विति॥ हे कार्मुकभ्रु सत्वरयानार्थं मूर्धजन्मनां बन्धनं केशपाशं साधु संयमय। साध्वित्यनेन यथा सत्वरगमने श्लथनं न भवेत् तथा संयमयेति दर्शितम्। उच्छ्वसन्ति परिमलोद्गारीणि कुसुमानि माला च यत्र तत् तथोक्तम्। स्तनांशुकं च रचय स्तनयोस्संयमयेत्यर्थः। कुण्डलांशुरचितमिन्द्रकार्मुकं यस्मिन्केशबन्धने तत् तथोक्तम्। प्रत्युप्तनानावर्णरत्नत्वेन कुण्ड-

सौदामिनी— अज्ज एव्वं दाव करिस्सम् ।
आर्य एवं तावत्करिष्ये ।
( उभावाकाशयानं निरूपयतः )

विद्याधरः— सौदामिनि पश्य पश्य

द्रुतमञ्जननीलमावयोः खं
शिखरादुत्पततोः शिलोच्चयस्य ।
अनुपूर्विकया विकारजातं
ग्रसमानेव वसुन्धरा विभाति ॥ २ ॥

सौदामिनी— अज्ज कुलपव्वदा दाणिं संसइदा संवुत्ता ।
आर्य कुलपर्वताः इदानीं संशयिताः संवृत्ताः ।

विद्याधरः— अहो नु खलु सुभगमस्माकमध्वगमनम् । एकतः प्रियापयोधरस्पर्शः अन्यतो दिग्वधूपयोधरस्पर्शः ।

विधुतो व्रजामि सुरलोकमारुतै-
र्मरुतां पथा मरतकोपलत्विषा ।
जलभारसान्द्रमुदरं पयोमुचा-
महमालिखन् वलयवज्रकोटिभिः ॥ ३ ॥

( नेपथ्ये )

आदत्तामग्निरद्यप्रभृति हुतमसन्दूषितं यातुधानै-
राप्लुत्याकाशगङ्गापयसि मुनिवृषास्सप्त सन्ध्यां जपन्तु ।

---

लांशूनामेवोर्ध्वप्रसृतानामिन्द्रकार्मुकत्वाध्यवसायात् उत्प्रेक्षेयम् । केशपाशस्य मेघसादृश्यमुत्प्रेक्षायां बीजम् ॥ द्रुतमिति ॥ शिलोच्चयस्य पर्वतस्य शिखराद् द्रुतं खमुत्पततोरावयोरनुपूर्विकया क्रमेण उत्पतनक्रमानुसारेण वसुन्धरा स्वविकाराणां वृक्षादीनां जातं ग्रसमानेव विभाति । अत्र दूरत्वदोषेण ह्रस्वह्रस्वतरत्वादिभ्रमस्य कारणत्वेन ग्रसनक्रिया उत्प्रेक्ष्यते ॥ आर्य कुलपर्वता इदानीं संशयिताः अस्तित्वनास्तित्वसंशयगोचराः संवृत्ताः । अहो नु खल्वित्यानन्दे । दिग्वधूपयोधरस्पर्श इत्यत्र पयोधरशब्दः श्लिष्टः । शब्दश्लेषेण मेघसंस्पर्शस्य स्तनस्पर्शत्वं गम्यते ॥ विधुत इति ॥ अहं मरतकोपलत्विषा मरुतां पथा वायुमार्गेण सुरलोकमारुतैः विधुतः सम्यक् स्पृष्टो व्रजा-

भानोर्वाहा भजेरन्नचकितमृजुना वर्त्मना मन्दराद्रिं
साध्व्यश्चारित्रभङ्गाज्जहतु भयमपास्तार्गला द्यौरपि स्यात् ॥

विद्याधरः— अये जगद्घोषणेव निहतेन रावणेन भवितव्यम् ।

सौदामिनी— अहं वि तं एव्व तक्केमि । अदिक्कंदे दिअहे पवुत्ता वत्ता ।किदं रामेण रक्खसउलं रावणमत्तावसेसं ति ।

अहमपि तदेव तर्कयामि । अतिक्रान्ते दिवसे प्रवृत्ता वार्ता कृतं रामेण राक्षसकुलं रावणमात्रावशेषमिति ।

विद्याधरः— अद्योद्धृतकण्टकं त्रैलोक्यमासीत् ।

सौदामिनी— अज्ज उच्छसिदाणि पदिव्वदाणं हिअआणि ।

अद्य उच्छ्वसितानि पतिव्रतानां हृदयानि ।

विद्याधरः— साम्प्रतं अभिलषितसिद्धिसम्फुल्लाक्षं सहस्राक्षं सभा-

---

मि । विधुत इत्यनेन सम्यक्स्पर्शो लक्ष्यते । कम्पने पीडाप्रसङ्गात् ॥ आदत्तामिति ॥ इतः पूर्वमग्निहोत्रादीनां यातुधानदूषितत्वेन कर्मानुष्ठानं नाभूत् अतः परं राक्षसानां वधेन कर्मानुष्ठानादग्निर्हविरादत्तामित्यर्थः ॥ मुनिवृषाः मुनिश्रेष्ठाः । सन्ध्याशब्देन सन्ध्यासमयजप्यो मन्त्रो लक्ष्यते । पूर्वं रावणाज्ञया लङ्कां परिहृत्य वक्रेण मार्गेण गमनादृजुना वर्त्मनेत्युक्तम् । साध्व्यः पतिव्रताः चारित्रभङ्गार्थमुद्यतानां रावणादीनां वधेन चारित्रभङ्गात् भयं जहतु ॥ अपास्तार्गला ॥ अर्गलाशब्देन प्रतिबन्धो लक्ष्यते । स्वर्गनिवासप्रतिबन्धकस्य रावणस्य वधेन देवाः स्वर्गे निष्प्रतिबन्धं निवसन्त्विति वाक्यावसानम् । इतरथा पूर्ववाक्यैस्साहकरूप्यमस्य वाक्यस्य न स्यात् ॥ जगद्घोषणेवेति ॥ जगति घोषणं जगद्घोषणम् । घोषणमुच्चैः शब्दोच्चारणम् । रघुनाथाज्ञया कस्यचित् जगद्वासिविषयं घोषणमित्यर्थः । आदत्तामित्यनेन त्रैवर्णिकानामेव कर्मानुष्ठानाधिकारात् भूमण्डलविषयं घोषणं कृतम् । द्वितीयतृतीयपादाभ्यामन्तरिक्षविषयम् । अपास्तेत्यनेन स्वर्गविषयम् । साध्व्य इत्यनेन सकलभुवनपतिव्रताविषयम् । अनेन जगद्घोषणेन हेतुना रावणेन निहतेन भवितव्यम् । रावणं निहतं मन्य इत्यर्थः ॥ अहमपि तदेव तर्कयामि ॥ अतिक्रान्ते दिवसे वार्ता प्रवृत्ता कृतं रामेण राक्षसकुलं रावणमात्रावशेषमिति ॥ लोककण्टकस्य रावणस्य वधेन निरुपद्रवमासीदित्यर्थः ॥ अद्य पतिव्रतानां हृदयान्युच्छ्वसितानीति ॥ साम्प्रतमिति ॥ स्पष्टोऽर्थः ।

जयिष्यावः ।

( निष्क्रान्तौ )

॥ मिश्रविष्कम्भः ॥

( ततः प्रविशति भेरीं प्रहरन् पर्यटन् जाम्बवान् )

जाम्बवान्— ( उत्क्रमनुक्रम्य )

वेगादुत्पततो विधूय नमुचिं पादस्य पत्युश्चिता-
मग्रे सञ्चरता मया मुहुरभूद्भेरी गभीरं हता ।
रामेणापि दशाननं हतवता व्यापारितोऽयं जनः
तस्मिन्कर्मणि कर्म नूनमुचितं लोकोऽयमालम्बते ॥ ५ ॥

महानयं भारः । साधयामस्तावत् । ( निष्क्रान्तः )

---

अरिजयानन्तरं भेरीप्रहारेण जयोद्घोषणा राज्ञां धर्मः विशेषतो रावणभया-न्निजगृहं परित्यज्य तत्र तत्र गिरिगुहादिषु निलीनान् जनान् प्रति पूर्ववत् स्वपदप्रतिष्ठापनार्थं तदुद्घोषणा कर्तव्येति परिचितत्रिभुवनो जाम्बवांस्तदर्थं रघु-नाथेन नियुक्त इति विष्कम्भकाङ्कयोर्मध्ये जाम्बवतः प्रवेशस्य नासङ्गतिराशङ्क-नीया ॥ उत्क्रमनुक्रम्येति ॥ उत्क्रमादत्तामित्यादिवाक्यं पुनरप्युक्त्वेत्यर्थः । आहेति शेषः । भेरीप्रहारकर्मणि पूर्वाभ्यासं तदानीन्तनात् भेरीप्रहारादुद्बुद्धसं-स्कारोऽनुस्मरति ॥ वेगादिति ॥ चितां पत्युः चिच्छब्देन बुद्धिवाचिना तत्स-म्बन्धात् चेतना ब्रह्मादयो लक्ष्यन्ते । तेषां पत्युर्नियामकस्य विष्णोरुपेन्द्रस्येत्य-र्थः । तस्य पादस्याग्रे सञ्चरता मयेत्यन्वयः । यथोक्तं श्रीमद्भागवते— "जा-म्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः । विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥" इति । पादविशेषणं— नमुचिं विधूयोत्पतत इति ॥ बलिभृत्यो नमुचिर्ना-मासुरः स्वामिनियोगं विना त्रिविक्रमस्योत्पतन्तं पादं निरोद्धुं प्रवृत्तः तमुत्प-तनवेगेनैव हत्वा पुनरपि वेगादुत्पततः पादस्येत्यर्थः । अग्रे सञ्चरतेत्यनेन तदानीं पादजवानुरूपः आत्मनो वेगोऽभूदिति द्योत्यते । भेरी हतेत्यनेन सं-चरणसमये भेरीहननं कुर्वतोऽपि मे वेगस्य तादवस्थ्यमेवेति द्योत्यते । गभीरमित्यनेन सञ्चरणसमये न भेरीहननस्य किञ्चिदपकर्ष इति दर्शयति । मुहुरित्यनेन सञ्चरणसमये भेरीप्रहरणस्यानुवृत्त्या श्रमाभावो दर्शितः । इदानीं रामेण वृद्धोऽप्ययं जनोऽहं तस्मिन्भेरीप्रहरणात्मके कर्मणि व्यापा-रित इत्यन्तर्हासगर्भेयमुक्तिः । यत एवमतो मन्येऽयं लोको जनो नूनमुचितं पूर्वमभ्यस्तं कर्मैवालम्बत इति ॥ महानयं भार इति ॥ महानयं भेरीं

( ततः प्रविशति रामः सन्नाहवेषमपास्य लक्ष्मणविभीषणसुग्रीवैः सह )

रामः— ( विभीषणमवलोक्य ) वयस्य विभीषण

नगरीं विश पश्य भर्तृहीनं
जनमापादय कर्म चोचितं च ।
व्यसनेषु महत्सु तत्कुलीनं
जनमालोक्य समुच्छ्वसन्ति पौराः ॥ ६ ॥

विभीषणः— प्रसीदतु देवः । नाहं बन्धुस्नेहाद्ब्रवीमि ।

क्व साधवः क्व च रजनीचरा वयं
तथापि मां सुखयति हि त्वदाश्रयः ।
अपायिनीमहमिति पूर्वजन्मनो
न कामये नरवर गत्वरीं श्रियम् ॥ ७ ॥

---

प्रहस्य चतुर्दशसु लोकेषु सञ्चारो गुरुतरो भारः ॥ साधयामस्तावत् ॥ गच्छाम इति । एवमशेषभुवनेषु निखिलजनाभ्युदयहेतुभूतं रावणवधं निवेदयितुं जाम्बवन्तं नियुज्य रघुनाथो लङ्कायां विभीषणं प्रतिष्ठापयितुमाह— वयस्येति ॥ वयस्येत्यनेन मित्रत्वोक्त्या भृत्यत्वं निवार्यते । अत्र क्रियाणां क्रमो विवक्षितः । एकश्चशब्दः पश्येत्यनेन सम्बध्यते । उचितं कर्मेत्यनेन उदकक्रियादि प्रजापालनान्तं कर्मोच्यते । उक्तानां कर्मणामवश्यकर्तव्यत्वे हेतुमाह— व्यसनेष्विति ॥ अथ विभीषणः स्वाम्युक्तेऽर्थेऽप्रतिपत्तिं करिष्यन् प्रसादं तावत् प्रार्थयते— प्रसीदत्विति ॥ नाहमिति ॥ अहं बन्धुस्नेहाद्धेतोर्न किञ्चिद्ब्रवीमि । यतो बन्धुभिरुपेक्षितोऽहं भवन्तं शरणं गतः अतो बन्धूनुद्दिश्य न किञ्चित्कर्तव्यमस्तीत्यभिप्रायः । एवमेव त्वत्सेवा कर्तव्येति वक्तुमुपोद्घातं करोति । प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवर्णनमुपोद्घातः ॥ क्व साधव इति ॥ उत्तरवाक्ये तथापीति दर्शनादत्र यद्यपीति द्रष्टव्यम् । साधूनां युष्मादृशामस्माभिर्दुर्जनैः संसर्गो यद्यप्यनुचितः तथापि त्वदाश्रयः त्वदाश्रयणं त्वत्सेवेत्यर्थः । मां सुखयति ॥ अनुचितमपि त्वत्समीपे निवासं भक्त्यतिशयात् प्रार्थय इति भावः । ननु क्रमागता पूर्वजस्य श्रीरनुपेक्षणीया अत आह— न कामय इति ॥ हे नरवर अहं पूर्वजन्मनः श्रियं न कामये । विशेषणद्वयमकामनायां हेतुः ॥ गत्वरीं गमनशीलां अविनष्टाया एव श्रियः पुरुषान्तरप्राप्तिर्गमनम् । अपायः परिपन्थ्यादिकृतस्वरूपविनाशः । तत्र विशेषतः पूर्वजन्मनः श्रीरधर्मार्जितत्वादित्यपायिनी । इतिशब्देन तदानीं दृश्यमानो विनाशप्रकारोऽभिधीयते । अ

रामः— मा मा, नैष राजधर्मः । नोपनता श्रीरवमन्तव्या । अपि च

सार्धं त्वया गुणपरायण निर्गुणेन
निर्वासितस्सरभसं तव पूर्वजेन ।
त्वामद्य सत्पथपुरोग पुरो निधाय
पौलस्त्यभूमिषु पदं निदधातु धर्मः ॥ ८ ॥

विभीषणः— देव अद्यप्रभृति

बहुमानपदं भवाम्यहं
प्रणयोत्फुल्लमवेक्षितस्त्वया ।
ध्रियते हरसङ्ग्रहाद्बुधैः
शिरसा किं न चिताकरोटिका ॥ ९ ॥

रामः— वयस्य सुग्रीव पर्याकुल इव ते सखा विभीषणः । कृतकरणीयमिमं लङ्कायां प्रकृतिभिस्सह संयोजय ।

सुग्रीवः— यदाज्ञापयति देवः । एहि लङ्केश्वर इत इतः ।

---

तोऽस्याः पुनर्धारणेऽप्यधर्मार्जितत्वात् विनाशोऽवश्यंभावीत्यभिप्रायः ॥ मामेति ॥ एवं वोच इति शेषः । एष कुलक्रमागतश्रीपरित्यागो न राजधर्मः । अस्मिन्नर्थे हेतुत्वेनार्थशास्त्रमुदाहरति— नोपनतेति ॥ सार्धमिति ॥ निशाचरदुर्लभविनयक्षमार्जवादिगुणाश्रयभूत निर्गुणेन तव पूर्वजेन सरभसं त्वया सार्धं निर्वासितो धर्मः त्वां पुरो निधाय पौलस्त्यभूमिषु पदं निदधातु । सत्पथपुरोगेत्यनेन धार्मिकत्वमुच्यते । लङ्कायामन्यस्य धार्मिकस्याभावात् विभीषणेन सह धर्मो निर्वासित इत्युक्तम् ॥ बहुमानेति ॥ बहुमानपदत्वे हेतुः— प्रणयोत्फुल्लमवेक्षित इति ॥ यतो गुणपरायणसत्पथपुरोगेत्यादिनाहमसाधुरपि प्रणयेनोत्फुल्लं सप्रसादं वीक्ष्य साधुत्वेनाङ्गीकृतः अतः सर्वजनबहुमानास्पदं भवामि । अत्र दृष्टान्तः— ध्रियत इति ॥ चिताकरोटिका श्मशानास्थि । शिरसेत्यनेन धारणे सादरत्वं दर्शितम् ॥ हरसंग्रहात् हरेणाङ्गीकृतत्वात् ॥ बुधैः शिवभक्तैः । इह दृष्टान्तबलात् गम्यमानेन विभीषणकरोटिकासादृश्येनौद्धत्याभावो व्यज्यते ॥ पर्याकुल इवेति ॥ स्वामिनो वियोगं सोढुं नियोगमनुष्ठातुं स्वयमेव लङ्कां प्राप्तुं चासमर्थत्वेन पर्याकुलत्वम् ॥ कृतकरणीयं कृतपैतृककार्यम् प्रकृतिभिः हतावशिष्टैरमात्यसुहृद्भृत्यादिभिः

( निष्क्रान्तौ )

रामः— अद्याहं सिद्धार्थो विभीषणप्रतिष्ठापनात् । कुतः ।

तस्य लक्ष्मीर्नटस्येव छत्रचामरलक्षणा ।
न बध्नाति फलं यस्मिन्नर्थिनां प्रार्थनालता ॥ १० ॥

( प्रविश्य )

सुग्रीवः— जयतु देवः ।

रामः— सुग्रीव किमिदं निर्गमनानन्तरमेवागमनम् ।

सुग्रीवः— देव इदं विभीषणवचनम् । अहं तावन्नगरीं न प्रविशामि यावद्देवी ततो न निष्क्रामति ।

रामः— ( सबहुमानं ) यद्येवं त्वमेव तव सखीमानय ।

सुग्रीवः— यदाज्ञापयति देवः । ( निष्क्रान्तः )

---

सम्यक् योजय ॥ सिद्धार्थः कृतार्थः । ज्यायांसमुत्सृज्याश्रितस्य विभीषणस्य स्वराज्ये प्रतिष्ठापनात् कृतार्थोऽहम् । आश्रितजनरक्षणफलैव नृपाणां श्रीरित्येतत् व्यतिरेकमुखेन समर्थयते— कुत इत्यादिना ॥ अर्थिनां यद्विषया प्रार्थना लता इष्टानिष्टप्राप्तिपरिहारात्मकं फलं न बध्नाति न लभत इत्यर्थः । इह प्रार्थयितुः फललाभः प्रार्थनायामारोपितः । तस्य नृपस्य छत्रचामरलक्षणा श्रीः नटस्येव नटस्य लक्ष्मीरिव । यथा नटेन चतुर्विधाभिनयप्रदर्शिता विभावानुभावव्यभिचारिसम्पत् नयनप्रीतिमात्रफला तथा तस्य नृपस्य चतुरङ्गबलमणिमयप्राकारनगरगृहोद्यानच्छत्रचामरादिलक्षणा श्रीरर्थिनां नयनप्रीतिमात्रफला न किञ्चित्फलान्तरमस्ति । यथोक्तं —"सा श्रीराश्रितमन्दिरेषु सततं दृश्येत या" इति । अथ विभीषणवचनं सुग्रीवादाकर्ण्य सीतानयनार्थं तमेव नियुङ्क्ते— यद्येवमिति ॥ तमाज्ञाप्य सवितर्कमाह— हत्वेति ॥ इह सीताहरणात्पूर्वमेवागस्त्याश्रमे स्थितेन सर्वराक्षसवधः प्रतिज्ञात इति रावणवधानन्तरमेव निखिलभुवनवासिनो जनाः पूर्ववत् स्वाधिकारभाजो वर्तन्तां नातः परं कुतश्चिद्भयं अहमेव रक्षितास्मीति जाम्बवन्मुखेन भेरीप्रहारपूर्वकं स्वाज्ञां निवेद्य निखिलभुवनवासिनो जनाः स्वे स्वे पदे प्रतिष्ठापिताः अनन्तरं सत्येव ज्यायस्यभिषिक्तो विभीषणो लङ्कायां स्थापितः एवं साधितप्रतिज्ञातार्थस्य राघवस्यात्रसरप्राप्तं सीतापरिग्रहं प्रति वितर्कोऽनेन हत्वेत्यादिना ग्रन्थेन क्रियते । मारुतेर्वचनप्रामाण्यतो यामद्य प्रतिपालयामि सा

रामः— ( सवितर्कं )

हत्वा वालिनमर्णवे गिरिशतैराबध्य सेतुं श्रमा-
　लङ्कामेत्य सहायबन्धुसहितं कृत्वा हतं रावणम् ।
यामद्य प्रतिपालयामि वचनप्रामाण्यतो मारुतेः
　संवासादपि नाम सा नृपसुता न स्यादवर्णास्पदम् ॥

लक्ष्मणः— प्रसीदत्वार्यः ।

सुखाभिलाषी स्त्रीभावो दुर्विनीताश्च राक्षसाः ।
दूरे वयमतो देव्याः परीक्ष्या भावशुद्धता ॥ १२ ॥

---

नृपसुता अवर्णास्पदं स्यान्न वा इत्यन्वयः । वचनप्रामाण्यं न साक्षात्प्रतिपालने हेतुः सीतायां निर्दोषत्वावधारण एव साक्षाद्धेतुत्वात् । मारुतेराप्तत्वात्प्रत्यक्षद-र्शनमूलत्वाच्च वचनस्य प्रामाण्यम् । अयमर्थः । पूर्वमेव स्वभावपर्यालोचनया निर्दोषत्वेन निश्चितां पश्चात्संवादप्रमाणान्मारुतेर्वचनात्तथैवावधृतां सीतामद्य प्रतिपालयामि सा नृपसुता चिरकालं रावणगृहनिवासाद्धेतोरवर्णास्पदं अवर्णो लोकापवादः तदास्पदं स्यात् भवेन्न वा । संभावनायां लिङ् । नञः पृथगन्वयः । एवंभूतवितर्कद्योतनार्थोऽपिनामशब्दः । संवासो लोकस्य दो-षानुशङ्कायामेव हेतुः न राघवस्य स्वभावपर्यालोचनया मारुतिवचनप्रामाण्येन च निर्दोषत्वनिश्चयस्योक्तत्वात् प्रत्यक्षमप्यप्रमाणं कृत्वा सीतां प्रतीक्षायुपरितनग्रन्थ-विरोधाच्च । केनोपायेन लोकस्य दोषशङ्कां परिहरिष्यामीति वितर्कपर्यवसानं द्रष्टव्यम् । सर्वोऽयं वालिनिग्रहादिरावणवधपर्यन्तो व्यापारस्सीतापरिग्रहगो-चरसन्देहफल एव संवृत्त इति खेदमवलम्ब्याह— हत्वेति ॥ प्रसीदत्वार्य इति ॥ प्रसन्नेन सतार्येण मदीयं वचनं श्रोतव्यमित्यभिप्रायः ॥ सुखेति ॥ देव्या भावशुद्धता परीक्ष्या ॥ इह भावशुद्धतामनूद्य तस्याः परीक्षा विधीयते । यद्यप्यस्त्येव देव्या भावशुद्धता भावोऽन्तःकरणं तथाप्यवश्यं केन-चित् प्रमाणेन परीक्ष्य निर्णेतव्या बहूनां दोषशङ्काहेतूनां सद्भावात् । तानेव दर्शयति— सुखेत्यादिना ॥ निषिद्धमनिषिद्धं वा यद्यत्सुखं तत्तदभिलषितुं शीलमस्येति सुखाभिलाषी स्त्रीभावः स्त्रीत्वम् । अनेन स्त्रीत्वसामान्यानुबन्धित्वेन सुखाभिलाषित्वस्य स्त्रीव्यक्तिष्वनुवृत्तिर्दर्शिता ॥ दुर्विनीताश्च राक्षसा इ-ति ॥ एकाकिन्येव दुर्विनीतानां राक्षसानां मध्ये स्थितिरपि महतीं शङ्कां जनय-तीत्यर्थः ॥ दूरे वयमिति ॥ ये रक्षितारो वयं ते दूरेऽभूम । स्मर्यते हि— 'पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थविरीभावे न स्त्री स्वात

रामः— लक्ष्मण क हनुमान् ।

लक्ष्मणः— स खल्विदानीं युद्धभूमौ

क्षिप्तान्यद्रिशतान्यपास्यति भुजेनाधः कपीनां कृते
ग्रस्तानुद्धरति प्रसह्य वदनादृक्षेश्वरान् रक्षसाम् ।
गोलाङ्गूलकुलस्य निर्झरजलैर्मुष्णाति युद्धश्रम
ग्राहेभ्यो विभजत्यपां निलयने पौलस्त्यबन्धून्हतान् ॥

रामः— सदृशमिदमस्य चेष्टितम् ।

( नेपथ्ये ) उस्सरह उस्सरह अज्जा उस्सरह ।

उत्सरत उत्सरत आर्या उत्सरत ।

रामः— लक्ष्मण किमिदम् ।

लक्ष्मणः— आर्य इदमागमनमार्यायाः ।

रामः— किं नु खलु देवीं महाजनो नक्ष्यति । लक्ष्मण सुग्रीवमाज्ञापय— कृतमुत्सारणकर्मणा, तत्रैव यानादवतार्य प्रकाशं प्रवेश्यतां मैथिलीति ।

लक्ष्मणः — यदाज्ञापयत्यार्यः । ( निष्क्रान्तः )

---

न्त्यमर्हति ॥ ' इति । अथ लोकप्रत्ययाधानार्थं साक्षात्कृतसीतापातिव्रत्यचिह्नं हनूमन्तं जिज्ञासमानः पृच्छति— **लक्ष्मणेति** ॥ तस्यागमनेऽलीयान्विलम्बोऽस्तीत्यभिप्रायेण ह— **स खल्विति** ॥ युद्धभूमौ तस्य को व्यापार इत्यपेक्षायामाह — **क्षिप्तानीति** ॥ कृत इत्यव्ययं निमित्तार्थम् । राक्षसैः क्षिप्तानां पर्वतानामधःप्रदेशे शयानान्कपीनुत्थापयितुमित्यर्थः ॥ **अपास्यति** दूरतः क्षिपति । अनेनाद्रिशतापासनस्य विभीषणनिवासार्थत्वं चाप्यस्तीति दर्शितम् । राक्षसाद्वदनात्प्रसह्य कृच्छ्रादन्तर्वक्त्रान्तर्निविष्टान्वेनोद्धरति । इह कप्यृक्षगोलाङ्गूलानामपासनादिक्रियाविषयत्वं न व्यवस्थितम् सर्वेषां व्यसनानां सर्वत्र संभवात् । यथासंभवं सर्वेषां सर्वक्रियाविषयत्वमस्तीति द्रष्टव्यम् । राक्षसशरीरपरित्यागो विभीषणनिवासार्थं एव ॥ **सदृशमिति** ॥ कपिरक्षणार्थत्वात् विभीषणनिवासार्थत्वाच्चात्यन्तं समुचितमस्य चेष्टितमिति भावः ॥ **आर्या** देवसमीपे वर्तमाना महाजना उत्सरतोत्सरतेत्युत्सारणकर्मानुमितं सीताया आगमनं विज्ञापयति— **आर्येति** ॥ **किं नु खल्विति** ॥ निर्दोषाया अपि देव्याः इदानीमेव पारम-

रामः—

अवधूय दशग्रीवं मामनुव्रतचेतसः ।
सर्वे पश्यन्तु जानक्या रूपं चारित्रभूषणम् ॥ १४ ॥

( ततः प्रविशति सीता लक्ष्मणसुग्रीवाभ्याम् )

उभौ— ( प्रणमतः ) इत इतः ।

( नेपथ्ये )

अहो नु खलु लक्ष्मणसुग्रीवयोः साध्वाचारः ।
अनयोर्नमतोरद्य दूरानतशिरस्कयोः ।
पतन्ति राजकन्यायाः पादयोरेव दृष्टयः ॥ १५ ॥

सीता— ( आत्मगतं ) किं णु खु मं महाजनो मंतेदि । किं णु खु मं अज्जउत्तो मन्तेदि । अविस्ससणीओ खु इत्थिआभावो । अधण्णाए मम किदे अणत्थसाअरे पडिदो अज्जउत्तो अत्तकेण बाहुणा उत्तण्णो । सच्चं एव्व भणिदं मारुइणा पुढमं वि घणुणा पडिग्गहीदा दाणिं वि घणुणा उद्धरिस्सदित्ति ।

---

हो महाजनसंवादाभावे दुष्कर एवेत्यभिप्रायः ॥ अवधूयेति ॥ सर्वे जनाः प्रकाशं मत्समीपमागच्छन्त्या जानक्याश्चारित्रभूषणं रूपं पश्यन्तु । रूपशब्देन शरीरवेषावभिधीयेते । चारित्रमेव भूषणं यस्य तत्तथोक्तम् । चारित्रशब्देन चारित्रचिह्नभूता विरहपाण्डिमकार्श्यैकवेणीधारणमलीमसत्वादयो धर्मा लक्ष्यन्ते । भर्तृविप्रयुक्तायाः पतिव्रतायाः चारित्रद्योतकत्वेन शोभाकरत्वात्तेषां भूषणत्वमुक्तम् । पश्यन्तु एवंभूतरूपदर्शनेन प्रायेण महाजना विश्वस्ता भवन्त्येवेत्यभिप्रायः । जानक्या रूपस्यैवंभूतत्वे हेतुमाह— अवधूयेति ॥ दशग्रीवमवधूयावज्ञाय मामनुव्रतमनुगतं चेतो यस्यास्सा तथोक्तेति । किं नु खल्ववधूयेत्याभ्यां ग्रन्थाभ्यामपवादशङ्कैव न दोषाशङ्का इति स्पष्टमवगम्यते । अत एवास्माभिर्न स्यादवर्णास्पदमिति ग्रन्थोऽपवादशङ्कापरतया व्याख्यातः ॥ उभौ प्रणमत इति ॥ लक्ष्मणेन दर्शनसमये समुदाचार इति प्रणामः कृतः । यद्यपि सुग्रीवेण पूर्वदर्शनसमये प्रणामः कृत एव तथापि लक्ष्मणागमनानन्तरं देवाज्ञा देवीं प्रणम्य विज्ञापनीया इति तदानीं तत्प्रणामः कृतः ॥ अहो इति ॥ साधुराचारस्साध्वाचारः । दूरमत्यर्थमानतं शिरः ययोस्तौ तथोक्तौ ॥ किं

किन्नु खलु मां महाजनो मन्त्रयते। किन्नु खलु मां आर्यपुत्रो मन्त्रयते। अविश्वसनीयः खलु स्त्रीभावः। अधन्याया मम कृते अनर्थसागरे पतितः आर्यपुत्रः आत्मीयेन बाहुना उत्तीर्णः। सत्यमेव भणितं मारुतिना प्रथममपि धनुषा परिगृहीता इदानीमपि धनुषा उद्धरिष्यतीति।

( सर्वे उपसृत्य )

लक्ष्मणः— जयत्वार्यः।

सुग्रीवः— जयतु जयतु देवः।

सीता— जेदु अज्जउत्तो। जयत्वार्यपुत्रः।

रामः— देवि इत इतः। ( इत्यर्धोक्ते मुखं परावर्तयति )

उभौ— किं नु खल्विदम्।

रामः— लक्ष्मण, हनूमांस्तावदाहूयताम्।

लक्ष्मणः— यदाज्ञापयत्यार्यः। ( निष्क्रान्तः )

रामः— सुग्रीव, पूर्वमियं न दृष्टा।

( सुग्रीवो भीतस्तिष्ठति )

---

नु खलु मां प्रति महाजनो मन्त्रयते ॥ वक्ष्यतीत्यर्थः ॥ किं नु खलु मां प्रति मन्यत आर्यपुत्रः ॥ महाजनस्यार्यपुत्रस्य च निर्दोषायामपि मयि दोषाशङ्का संभवतीत्याह— अविश्वसनीयः खलु स्त्रीभाव इति ॥ अधन्याया मम कृते अनर्थसागरे पतितः आर्यपुत्रः आत्मीयेन बाहुना उत्तीर्णः ॥ सत्यमेव भणितं मारुतिना प्रथममपि धनुषा परिगृहीता इदानीमपि धनुषा उद्धरिष्यतीति ॥ स्पष्टोऽर्थः। पूर्वानुभूतशमदमार्जवक्षमादिगुणसमुदयेनाप्ततमवाक्यतिवचनेन च सञ्जातस्य सीतायाश्चारित्रविज्ञानस्य प्रमाणान्तरेभ्यो बलवत्तमेन संभोगशृङ्गारानुरूपोज्ज्वलवेषगोचरेण प्रत्यक्षेण बाधितत्वाद्दर्शनसमय एव दुष्टैवेयमित्यवधार्य मुखपरावर्तनं कृतमिति द्रष्टव्यम्। अदृष्टसीतावेषत्वेन संरम्भकारणमविज्ञाय सुग्रीवलक्ष्मणावाहतुः— किं नु खल्विदमिति ॥ अथ हनूमद्वचनस्य मिथ्यात्वं परिकल्प्य ससंरम्भं तदानयनार्थं लक्ष्मणं नियुङ्क्ते— हनुमानिति ॥ अथ दुष्टत्वेन विदितायास्सीताया आनयनं कृतमिति ? ह ? ससंरम्भमाह— सुग्रीवेति ॥ पूर्वमियं न दृष्टेत्यत्र काकुर्ज्ञेया। अदृष्टाया आनयनासंभवेन पूर्वं त्वया दृष्टानया

रामः— सुग्रीव पश्येदानीं त्वयादृष्टपूर्वं विरहचारित्रम् ।

हरिचन्दनप्रणयिनौ पयोधरौ
कुसुमाचितं सुरभि केशबन्धनम् ।
अरुणप्रभातिशयचोरमम्बरं
विरहव्रताय वहते पतिव्रता ॥ १६ ॥

सुग्रीवः— देव ममात्याचारदोषादियं देवस्य नयनगोचरं प्राप्ता ।

रामः— युज्यते लक्ष्मणोऽपि न पश्यत्येव ।

सीता— ( आत्मगतं ) हद्धि अणसूआए अणुग्गहो वि मे दाणिं सावो संवुत्तो ।

हा धिक् अनसूयाया अनुग्रहोऽपि मे इदानीं शापः संवृत्तः ।

( ततः प्रविशति लक्ष्मणो हनूमांश्च )

लक्ष्मणः— जयत्वार्यः ।

हनूमान्— जयतु देवः ।

---

भवितव्यमित्यर्थः ॥ भीत इति ॥ भयात्प्रतिवचनं दातुमशक्तस्तिष्ठतीत्यर्थः ॥ पश्येति ॥ पूर्वं न दृष्टमित्यदृष्टपूर्वम् । विरहचारित्रशब्देन विपरीतलक्षणया संभोगश्रृङ्गारानुरूपस्वैरिणीवेषो लक्ष्यते । अन्यासु पतिव्रतास्वदृष्टपूर्वमस्या इदं दृश्यमानं विरहचारित्रचिह्नं पश्य । अतः पतिव्रतानामुत्कृष्टैवेयमिति गम्भीराक्षेपगर्भमिदं वचनम् । तदेव दर्शयति— हरिचन्दनेति ॥ एषा पतिव्रता विरहव्रताय आत्माभिमतजारसम्भोगाय । अत्रापि विपरीतलक्षणा ॥ हरिचन्दनप्रणयिनौ हरिचन्दनानुलिप्तौ ॥ पयोधरौ वहते दधाति । तथा कुसुमाचितत्वात् सुरभि केशबन्धनं केशपाशं वहते । तथाऽरुणस्य सन्ध्यासूर्यस्य यः प्रभातिशयः तस्य चोरं तदपहारि अम्बरं च वहते इति पूर्ववदधिक्षेपगर्भेयमुक्तिः । अत्याचारोऽत्युत्कृष्ट आचारः । अत्याचारदोषात् सीतानयनहेतुत्वेन तस्य दोषत्वम् । अत्र व्यतिरिक्ताज्ञादर्शनमत्याचारत्वेनाभिप्रेतम् । हा धिक् अनसूयायाः अनुग्रहोऽपि मे इदानीं शापस्संवृत्तः । वनवासमलिनायास्तव भर्तृसमीपे सर्वं मण्डनं भवत्वित्यनुग्रहोऽप्यार्यपुत्रेणाज्ञातत्वात् शापोऽभूदित्यर्थः । अथ हनूमानन्यादर्शी सीतां दृष्ट्वा

रामः— लक्ष्मण हनूमता सह पश्यैनाम्।

(उभौ सीतां दृष्ट्वा मुखं परावर्तयतः)

हनूमान्— देव लङ्कायामन्या मया दृष्टा। सांप्रतमियमन्या।

सीता— अज्जउत्त अहं किं वि वत्तुकामा।

आर्यपुत्र अहं किमपि वक्तुकामा।

रामः— ननु ते रूपमेव कथयति।

सीता— कुमार तुवं मे वअणं सुणाहि।

कुमार त्वं मे वचनं शृणु।

लक्ष्मणः— तव वचनश्रवणस्य फलमेतत्।

सीता— सुणाहि पवणपुत्त। शृणु पवनपुत्र।

हनूमान्— गतोऽभूत्स कालः।

रामः— इदानीमपि मम पुरतस्तिष्ठति।

रजनीचरगूढसत्रिभिः
कृतसङ्केतनया दिने दिने।

---

स्वापराधं परिहर्तुं सत्यमाह— लङ्कायामिति॥ आर्यपुत्र अहं किमपि व-क्तुकामेत्येतच्छ्रुत्वा सीतावचनस्यावकाशं निरुणद्धि— नन्विति॥ प्रत्यक्षेण रूपदर्शनेनैव तव लङ्कावृत्तान्तस्तत्त्वतो विदित इति न तत्परिज्ञानार्थं त्वद्वचनापेक्षेति भावः॥ कुमार त्वं मे वचनं शृण्विति॥ तव वचनश्रवणस्येति॥ तव पुरदो मरिस्सं पच्छा णिरासो दाणिं भादुसआसं गमिस्ससित्ति तव वचनश्रवणस्य फलमेतत्। श्रवणशब्देन श्रवणफलमनुष्ठानं लक्ष्यते— स काल इति॥ तव वचनश्रवणकाल इत्यर्थः॥ इदानीमिति॥ पूर्वमेव मया निराकृतापि किं पुरतस्तिष्ठतीति काक्वा पुरोऽवस्थाननिषेधो द्योत्यते। अथानसूयानुग्रहानन्तरमेवंभूताया एव सीताया दर्शने सति चरणनलिनसाध्यमित्यनेन यो हेतुर्जिज्ञासितः तदनन्तरं शूर्पणखावृत्तान्तखरवधदुर्निमित्तोपलम्भमायामृगदर्शनादिभिः जिज्ञासाया विच्छिन्नत्वात्सीतया तदभिधानं न कृतं तत्रापि स्वच्छन्दवृत्तिरेव हेतुरिति भ्रान्त्या सीतामतिपरुषैर्वचनैराधिक्षिपति— रजनीति॥ गूढसत्रयो जाराः। रजनीचरशब्देन रजन्यां जाग्रत्स्वभावत्वं दर्शितम्। तेन मनुष्याणां निद्राशीलत्वेन निशि बन्धनासौकर्यं दर्शितम्। जारैः रजनीचरैः

ऋजुभावजडास्त्वया वयं
छलिताः पुंश्चलि दण्डके वने ॥ १७ ॥

सीता— ( सस्मितं ) अज्जउत्तेण वि परुसवअणं भणीअदि ।
आर्यपुत्रेणापि परुषवचनं भण्यते ।

सुग्रीवः—

इदं श्रुत्वा वचो भर्तुर्यदेषा कुरुते स्मितम् ।
तदियं सर्वनारीणामवरा वा वरा यदि ॥ १८ ॥

निर्वास्यतामेषा स्वामिविषयात् । क्षीराहुतिं चिताग्निः कथमर्हति ।

---

दण्डके वने दिने दिने कृतं सङ्केतनं यस्याः तया त्वया वयं दण्डके वने छलिताः वञ्चिताः । वञ्चनायां हेतुः ऋजुभावेन जडाः वक्रमार्गानभिज्ञाः इति । वने इत्यनेन सङ्केतस्थानानां सुलभत्वं प्रदर्शितम् । प्रतिपुरुषं चलतीति पुंश्चली । अत एव दिने दिने एतस्याः बहुभिस्सङ्केत उक्तः ॥ सस्मितमिति ॥ मनसाप्यस्खलितचारित्रायाः पुंश्चलीति सम्बोधनेन स्मितोद्भवः ॥ आर्यपुत्रेणापि परुषं भण्यत इति ॥ अपिशब्देन निञ्जं प्रियवादिनापीति दर्शितम् । अत्रैवं विप्रकृताया अपि सीताया ईर्ष्याभावेन स्वीयागुणोत्कर्षो दर्शितः । यथोक्तं— 'सम्पत्तौ च विपत्तौ च मरणेऽपि न मुञ्चति । सा स्वीया तद्गतं प्रेम जायते पुण्यकर्मणः ॥ ' इति ॥ इदमिति ॥ भर्तुरिदमतिपरुषं वचः श्रुत्वा स्मितं कुरुते यत् तत्तस्मादियं सर्वनारीणामवरा अधमा वरा उत्तमा वा । यदिर्विकल्पार्थः । अव्ययानामनेकार्थत्वात् । यद्येषा पूर्वं पतिव्रता सती आत्मैकपरं ऐहिकपारत्रिकसुखहेतुभूतं भर्तारं कठोरहृदयत्वेनोपेक्ष्य स्वच्छन्दचारिणी भूत्वा स्मितं कुरुते ततोऽत्यन्तनिकृष्टासु गणिकास्वप्यधमेति सर्वशब्देन द्योतितम् । यदिदानीमपि अस्खलितचरित्रैषा साक्षाज्ज्ञानेन भर्तृपरित्यागशोकं नियम्य योगबलेन प्राणपरित्यागं निश्चित्य समा भूत्वा स्मितं कुरुते ततोऽरुन्धत्यादीनामपि पतिव्रतानां मध्ये उत्कृष्टतमेति सर्वशब्देन दर्शितम् । अस्य वाक्यस्य सन्देह एवार्थः नान्यतरकोटौ पक्षपातोऽस्तीति ज्ञेयम् । अथेदानीमित्यनेन वचनेन स्वामिनस्तस्याः पुरोऽवस्थानमनभिमतमित्याज्ञाय तदुत्सारणार्थं नियुङ्क्ते— निर्वास्यतामिति ॥ स्वामिविषयात् स्वामिसकाशादित्यर्थः ॥ क्षीरेति ॥ चिताग्निः श्मशानाग्निः । क्षीरं चेदमाहुतिश्चेति क्षीराहुतिः । आहुतिशब्देन आहूयतेऽनयेति करणव्युत्पत्त्या होमसाधनमुच्यते । तदयमर्थः । संनि-

लक्ष्मणः— नैषा शरीरेण गन्तुमर्हति ।

हनूमान्— शाधि देव यथार्हं दण्डमस्याः ।

सीता— अणुमदा अज्जउत्तेण अग्गिं पविसदुकामम्हि ।

अनुमतार्यपुत्रेणाग्निं प्रवेष्टुकामास्मि ।

रामः— लक्ष्मण अस्याः पतिव्रतायाश्छन्दमनुतिष्ठ ।

लक्ष्मणः— यदाज्ञापयत्यार्यः । ( आत्मगतं ) इदानीं प्रीतोऽस्मि ।

( प्रकाशं ) देवि इत इतः ।

सीता— ( आत्मगतं ) हिअअ अज्जउत्तपादेसु पणमेहि ।

हृदय आर्यपुत्रपादयोः प्रणम ।

( निष्क्रान्तौ )

---

पत्न्योपकारकसंस्कारकर्मसंस्कृता निसर्गतः शुद्धा अग्नीनादधीतेत्यादिवचनाभिहिताधाना पवमानहविरादिसंस्कृताहवनीयाग्निसम्बन्धयोग्या क्षीराहुतिः कथं शवदाहाशुद्धस्य चिताग्नेः संसर्गमर्हतीति । अत्र दृष्टान्तबलेन सीतायाश्चिताग्निसाधर्म्यं राघवस्य क्षीराहुतिसादृश्यं च गम्यते । तेन यथा निसर्गतः शुद्धस्याग्नेः शवशरीरसम्बन्धादशुचित्वं तथा सीताया रक्षस्संसर्गोपाधिको दोषः प्रकृष्टतमो भवतीति द्योत्यते । यथा क्षीराहुतिर्निसर्गतः संस्कारकर्मणा च विशुद्धा तथा राघवोऽपि जन्मकर्मभ्यामत्यन्तं विशुद्ध इति द्योत्यते । न चात्र लिङ्गभेद उपमां दूषयतीति वाच्यम् अभियुक्तैः काव्यलक्षणकारैरभ्यनुज्ञातत्वात् लिङ्गवचनभेदस्य । यथोक्तम्— 'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥' इति । 'चन्द्रबिम्बादिव विषं चन्दनादिव पावकः । परुषा वागितो वक्त्रान्निःसृता प्रतिभाति मे ॥' 'स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव । प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥' इत्यादयः प्रयोगाश्च बहवो दृश्यन्ते । अपि च क्षीराहुतेश्चिताग्नेश्चाचेतनत्वेन पारमार्थिकं स्त्रीत्वं पुंस्त्वं वा नास्त्येव । अतोऽत्र दारवर्षादिशब्दवदर्थगतं विशेषमनपेक्ष्यैव क्षीराहुतिचिताग्निशब्दप्रयोगः कृतः । न चात्र हंसीव धवळश्चन्द्र इत्यादिष्विव धीमतामुद्वेगोऽस्ति महाजनपरिगृहीतत्वादित्यलमतिदूरगमनेन । प्रकृतमनुसरामः ॥ नैषेति ॥ इतः प्रदेशान्निर्वासितैषा । शरीरेण शरीरशब्देन शरीरगतस्तदानीं दृश्यमानः शोभाकरो वेषो लक्ष्यते । ईदृशं वेषमवलम्ब्य स्वतन्त्रा भूत्वा न गन्तुमर्हति यथाशास्त्रं दण्डनीयैवेत्यभिप्रायः । अस्य ग्रन्थस्यास्मिन्नर्थे तात्पर्यमित्येतत् शाधि देव यथार्हं दण्डमस्या इत्यस्मिन् ग्रन्थे स्पष्टम् ।

रामः— हरीश्वर त्वमपि हनूमत्प्रमुखेन सैन्येन सह हतशेषेभ्यो राक्षसेभ्यः कुमारं रक्ष ।

सुग्रीवः— यदाज्ञापयति देवः । ( निष्क्रान्तः )

रामः— किं नु खलु प्रत्यक्षमप्यप्रमाणं कृत्वा सीतां प्रति सबहुमानं मे मनः । कृतं त्यक्त्वानुशयेन । केवलं लोकहितार्थमेव मे यत्नो भविष्यति ।

( ततः प्रविशति कण्टकितसर्वाङ्गो लक्ष्मणः )

लक्ष्मणः— आश्चर्यमाश्चर्यम् ।

रामः— वत्स लक्ष्मण मेघान्तरचरमपि ते जितवतो मेघनादमिन्द्रजितं न कण्टकिता गात्रयष्टिः । कथय कथय कुतस्त्योऽयमावेगः ।

---

पतिव्रताया इत्यत्र विपरीतलक्षणा कार्या । छन्दः कामः । अन्यत्सर्वं स्पष्टम् । अथ लक्ष्मणेन सह सीतायामग्निप्रवेशार्थं गतायां सौमित्रिरक्षणार्थं सुग्रीवादिषु च गतेषु अनुतापौत्सुक्यपर्याकुलश्चिन्तयति— **किन्नु खल्विति** ॥ मे मनः प्रत्यक्षमप्यप्रमाणं कृत्वा सीतां प्रति सबहुमानं वर्तते ॥ इह जानक्याः शमदमार्जवक्षमासौशील्यसाध्वाचारात्मपरिचर्यैकपरत्वादिगुणपर्यालोचनं परुषवचनैरधिक्षिप्तायाः सत्त्वभ्रंशाभावोऽग्निप्रवेशाध्यवसायश्च प्रत्यक्षस्याप्रमाणीकरणे बहुमाने च हेतुः । अनेन च सीतारूपविपर्यासदर्शनात् प्रागूर्ध्वं च जानकीचारित्रं प्रति सन्देहो नास्ति केवलं लोकापवादशङ्कैवेति दर्शितम् । अनसूयानुग्रहापरिज्ञानाद्रूपविपर्यासजनितश्चारित्राभावभ्रमोऽपि विधिकृत एव । अत एव तस्याग्निप्रवेशोत्पादनद्वारेण लोकापवादपरिहारहेतुत्वेन शोभनोदर्कत्वम् । अतः सीतापरित्यागोऽपि विधिप्रयुक्तत्वाददोष इति । अथ महासत्त्वतादिगुणसम्पन्नतयानुतापं निगृह्णन्नाह— **कृतमिति** ॥ सीतां त्यक्त्वा तदनुशयेन निष्फलेन कृतमलम् । यथोक्तं— "अतीतकार्यानुशयेन किं स्यादशेषविद्वज्जनगर्हितेन ।" इति ॥ **केवलमिति** ॥ सीतालाभार्थं कृतो महान् प्रयत्नो विधिबलात्केवलं लोकहितार्थमेव सञ्जात इत्यर्थः । लोकहितार्थत्वस्य भूतत्वात् भविष्यतीत्यत्र प्रत्ययार्थो न विवक्षित इति । अथाश्चर्यमाश्चर्यमिति मुहुर्मुहुर्ब्रुवाणं विस्मयानन्दविवशमुन्मत्तमिवोपेक्षितसमुदाचारं दृष्ट्वा सप्रत्याशं परिपृच्छति— **वत्सेति** ॥ वत्स लक्ष्मण अयमावेगः कुतस्त्यः किंनिमित्तः यत्कार्यत्वेन पुलकोद्भेदादयो दृश्यन्ते इन्द्रजिद्वधेऽपि तवेदृश आनन्दो नाभूदित्याह— **मेघेति** ॥ आश्चर्यहेतुं

**लक्ष्मणः**— आर्यपादस्य शासनात् तीरे महार्णवस्यं कासारदारु-
निकरैः सन्धुक्षितो जातवेदाः ।

**रामः**— ( सादरम् ) ततस्ततः ।

**लक्ष्मणः**— ततस्सा तं संवर्तपावकमिव पावकमभिज्वलन्तं त्रिरार्या पर्यणैषीत् ।

**रामः**— ततस्ततः ।

**लक्ष्मणः**— ततस्सा खलु देवी त्वामयोध्याजुषं गुरुजनं च प्रण-
म्य शिरसा मामप्येवं गुरुवचनकरो भवेत्युक्त्वा भरतशत्रु-
घ्नाभ्यामेवमेव कथयेति चोवाच । अथ तयेदमुक्तं च "भगव-
न्नग्ने तव पुरस्तात्सत्याधिष्ठानं करिष्यामि । प्रस्थानकाले रा-
क्षसभुजसंस्पर्शः संवृत्तः पादस्पर्शश्च लङ्कायां" इति निर्विश-
ङ्कं जलमिव जलशत्रुमविशत् ।

---

वक्तुमुपोद्घातं करोति— **आर्यपादस्येति** ॥ **सादरमिति** ॥ जातवेदस्स-
न्धुक्षणप्रसङ्गेनाश्चर्यस्य सीतानिबन्धनत्वं समालोचयतः पूर्वस्मादधिकं सादरत्वं
सञ्जातमित्यर्थः ॥ **संवर्तपावकं** प्रलयाग्निं **त्रिः पर्यणैषीत्** प्रदक्षिणमकार्षी
त् । ततः सा खलु देवी रक्षोगृहनिवासदुःखार्णवात् कथञ्चिदुत्तीर्णा त्वदेकशरणा
दर्शनसमय एवास्माभिः परुषवचनैरभिहिताप्यविकृतमानसा सती भक्तिपूर्वकं
शिरसा त्वां प्रणम्य प्रणता भूत्वा । इदं तावत् प्रथममाश्चर्यम् । अनन्तरमयोध्याजुषं
गुरुजनं च प्रणता सती अनन्तरं मामप्येवमेव पूर्ववदेव गुरुवचनकरो भवेत्यु-
क्तवती । संभवत्येव पतिव्रतायाः अनादृताया अपि भर्तरि भक्त्यतिशयः । ननु
तवेत्यादिपरुषवचनमभिहितवन्तं मां प्रत्यपि न किञ्चिदीर्ष्या निर्वेदो वाऽभूत् । इद-
मप्यद्भुतमेवेत्यभिप्रायः । भूयोऽपि मां प्रत्युक्तवती भरतशत्रुघ्नाभ्यामप्येवमेव गुरु-
वचनकरौ भवतमिति मद्वचनान्निवेदयेति । अनन्तरमिदमुक्तं च ॥ **भगवन्**
ज्ञानदयादिगुणसम्पन्न । अनेनाशेषजनाशयगुणदोषसाक्षित्वं दर्शितम् ॥
**तव पुरस्तात्सत्याधिष्ठानं** सत्यवचनं **करिष्यामि** ॥ अधिति-
ष्ठत्यस्मिन्नर्थ इत्यधिकरणव्युत्पत्त्या अधिष्ठानं शब्दः ॥ **प्रस्थानकाले** ॥
हरणकाल इत्यर्थः । इतिशब्दानन्तरमुक्त्वेत्यर्थात्सिध्यति ॥ **निर्विशङ्कं** दे-
हगोचरात्माभिमानस्य उच्छिन्नत्वेन सहर्षम् ॥ **जलशत्रुं** अग्निमविशत् ॥ **जल-
मिव** ॥ यथा ग्रीष्मातपसन्तप्तः सहर्षं जलं प्रविशति तद्वत् ॥ **विस्मयपदमे-**

रामः— विस्मयपदमेतत् । ततस्ततः ।

लक्ष्मणः— तदानीमाकाशे प्रवृत्ताः शङ्खपटहाः ।

रामः— ततस्ततः ।

लक्ष्मणः— ततस्तदानीम् ।

स्तिमितनयनमारात्पश्यतां नस्समन्ता-
व्यतिकरमिव रूपं विद्युतामादधानः ।
अवनिभुवमनिन्द्यां ते पुरोधाय देवी-
ममरवदनमाविर्दैवता वह्निरासीत् ॥ १९ ॥

रामः— ततस्ततः ।

लक्ष्मणः— ततः खलु ।

वेलावने कुसुमितान्विरहय्य वृक्षान्
कल्माषितं खमलिपङ्क्तिभिरुद्यताभिः ।

---

तत् ॥ समुचित एवायं तव विस्मयातिशय इत्यर्थः । तदानीमाकाश इत्यनेन दिव्यजना अप्यग्निप्रवेशसाक्षित्वं प्रतिपन्ना इति दर्शयति ॥ ततस्तदानीं प्रवेशानन्तरमेव समन्तात् विस्मयात् स्तिमिते नयने यस्मिन् तथा पश्यतां नः पश्यतोऽस्मानविगणय्य । वह्निर्दैवता ते देवीं पुरोधायाविरासीत् सर्वेषां नः प्रत्यक्षोऽभूत् । देवताशब्देनाचेतनतेजोभूताधिष्ठातृदेवताया विग्रहवत्त्वेनाविर्भावो दर्शितः । आविशब्दो व्यवहिताश्चेति छान्दसः । अमरवदनमित्यनेन सर्वेषां देवानां तस्मिन्संनिधानात् भूयान्महिमा दर्शितः । तेन तदानीं तस्यां देव्यां दोषाशङ्का न कार्येति द्योत्यते ॥ विद्युतां व्यतिकरमिव रूपं देहं आदधानः बिभ्राणः । अनेन देहस्य केवलं तैजसत्वं दर्शितम् । अयं च वह्नित्वज्ञाने हेतुः ॥ अवनिभुवमिति ॥ पूर्वं चरमभूताधिष्ठातृदेवतया विभाविता । तेन तस्या मानुष्यकाभावो दर्शितः । अतस्तस्या अतिमानुषस्यानुभावस्याज्ञानादेव दोषशङ्काभूत् । इदानीं तस्याः पातिव्रत्यानुभावस्तम्भितनैसर्गिकदाहसामर्थ्येनाग्निना मूर्तिमता अशेषजनप्रत्ययार्थं प्रत्यक्षेण सतां नीता अतः सर्वथा निरवद्यैव देवीत्यभिप्रायः । तदनन्तरं वेलावने कुसुमितान्वृक्षान् विरहय्य परित्यज्य उद्यताभिः उद्गताभिः अलिपङ्क्तिभिः खं अम्बरं कल्माषितं कृष्णमभूत् । ततः सौर-

आयामवत्यमरपादपपुष्पवृष्टि-
रग्रे स्थिता सपदि हव्यभुजास्तिरोऽभूत् ॥ २० ॥

रामः— भवतु द्रक्ष्यामस्तावत् । ( उभौ परिक्रामतः )

( नेपथ्ये )—( दिव्यगन्धर्वा गायन्ति )

लोकानां यस्त्रितयमुदराधारमापद्य योगा-
दम्भोराशौ विषधरमयीं धीरमध्यास्त शय्याम् ।
होता हव्यं हुतभुगिति यं प्राह शब्दः स्वयंभूः
स त्वं विष्णुर्जनकतनया सा च पद्माक्ष पद्मा ॥ २१ ॥

( अपरे गायन्ति )

मदाम्भसा वियति महेन्द्रदन्तिनः
कलङ्कयन् हिमरुचिकर्णचामरम् ।

---

भ्यातिशयाकृष्टालिपङ्क्तिः अमरपादपपुष्पवृष्टिः हव्यभुजो वह्नेः अग्रे स्थितायाः जानक्याः शिरसि स्थिता आयामवती अविच्छिन्नधारत्वेन द्राघीयसी । अनेन सन्तोषातिशयेन पुष्पवृष्टिप्रयोगस्य पौनःपुन्यं द्योत्यते । सपदि तिरोऽभूच्च हव्यभुगित्यर्थात् सिध्यति । अथ निर्दोषैव जानकीति निश्चित्य तां द्रष्टुमध्यवस्यति— भवत्विति ॥ दिव्यगन्धर्वाः ज्ञानिनस्तुम्बुरुप्रमुखाः गायन्ति गानसंस्कृतैः स्तुतिपदैः स्तुवन्ति । पद्माक्ष स विष्णुरेव त्वं सा विष्णोर्भार्या पद्मैव जनकतनया । अत एषा निश्शङ्कमिदानीमेव त्वया परिग्रहीतव्येत्यभिप्रायः ॥ यो विष्णुः योगात् योगः सृष्ट्यादिनियामिका शक्तिः ॥ लोकानां त्रितयं ऊर्ध्वमध्याधोभेदेन त्रिधा विभक्तं निखिलं प्रपञ्चं उदराधारमापाद्याम्भोराशौ विषधरमयीं शय्यां धीरं योगनिद्रावलम्बनेन निष्पन्दं अध्यास्त ॥ अधिशीङ्स्थासां कर्मेति द्वितीया । तथा स्वयंभूः शब्दः स्वयमेव भवति सत्तां लभत इति स्वयंभूः अकृतक इत्यर्थः । अकृतकः शब्दो वेदो यं होतेत्याह । ऋत्विग्भिस्सहितो यजमानो होता यं हव्यं हुतभुगिति चाह । स्वर्गकाम इत्यादिपदैः कर्तृत्वेन यजमानं पयसेत्यादिपदैः करणत्वेन हव्यमाग्नेय इत्यादिभिः देवतातद्धितैर्वाजिभ्य इत्यादिभिश्चतुर्थ्यन्तैश्चाग्न्यादिदेवतारूपेण च यं प्रतिपादयन्तीत्यर्थः ॥ समीरणस्ते रणरुजमाधुनोतु शमयतु ॥ मदाम्भसा वियति प्राच्यां दिशि स्थितस्य महेन्द्रदन्तिनः कर्णरूपं चामरं कलङ्कयन् मदबिन्दुभिरन्तरान्तरा कृष्णीकुर्वन्नित्यर्थः । कर्णस्य चामरत्वारोपे हेतुः— हिमरुचीति ॥ पार्श्वस्थित्या वीजनसाधनत्वेन च सादृश्यं

नभोनदीनलिनपरागधूसरः
समीरणो रणरुजमादुनोतु ते ॥ २२ ॥

रामः— अश्रुतपूर्वोऽयं ग्रामरागः ।

( उभावाकाशं विलोकयतः )

रामः— लक्ष्मण पश्य पश्य प्रभानुलेपादपूर्वे इव द्यावापृथिव्यौ ।

शृङ्गाणि मेरोरिव सेतुशैला
वेलावनं कल्पवनोपमानम् ।
सैन्यं कपीनां कनकप्रभाणा—
माम्रेडितच्छायमभूदिदानीम् ॥ २३ ॥

( नेपथ्ये ) नारदोऽहमागच्छामि देवशासनेन ।

( उभौ सविनयमवलोकयतः )

( प्रविश्य )

नारदः— जयतु कारणमानुषो रावणान्तकः ।

रामः— लक्ष्मण पश्यद्भिरप्यश्रद्धेयमिदमाश्चर्यम् ।

नारदः— किमतः परमाश्चर्यम्, यातव्याः स्वयं रावणस्य लङ्कां

---

द्रष्टव्यम् । नभोनद्या नलिनपरागैर्धूसरः अरूपोऽपि समीरणः परागैः संवृतत्वात् धूसर इव प्रतिभाति ॥ अयं ग्रामरागः पूर्वमश्रुतः अश्रुतपूर्वः ॥ प्रभानुलेपात् इह प्रभया सम्पर्कोऽनुलेपत्वेनारोप्यते । आरोपफलं चानुलिप्तवत् पूर्वव-र्णतिरोधानेनाविर्भूतवर्णान्तरतया प्रतीतिः ॥ अपूर्वे इव अन्ये इव । अनेन देवानामागतिस्सूचिता ॥ शृङ्गाणीति ॥ सेतुशैला मेरोः शृङ्गाणीव स्वर्णमयाः प्रतिभान्तीत्यर्थः । कल्पवनं कल्पतरुवनं तदुपमानं यस्य तत् तथोक्तम् वेलावनं कल्पतरुवनवत् स्वर्णवर्णं प्रतिभाति । निसर्गतः कनकप्रभाणां कपीनां सैन्यं इदानीमाम्रेडितच्छायं द्विगुणितशोभमभूत् । अथ नारदः स्वागमनं तद्धेतुं च विज्ञापयति— नारद इति ॥ कारणमानुषः जगद्रक्षणात्कारणात् मानुषत्वं प्राप्तो नारायणो भवानिदानीं रावणनिग्रहेण सम्पादितजगद्धितो जयतु इदानीमिव सर्वदा सर्वोत्कृष्टो वर्तताम् ॥ इदं मुनिवरदर्शनात्मकं आश्चर्यं पश्यद्भिरपि प्रत्यक्षेणावगच्छद्भिरपि अश्रद्धेयं अविश्वसनीयम् । अतिदुर्लभत्वादस्मिन् पारमार्थिकबुद्धिर्न भवतीत्यर्थः । आश्चर्यशब्दस्यार्थमन्यथाकुर्वाणो रामभद्रं स्तौति— किमिति ॥ श्रेयोऽर्थं सर्वैः सज्जनैरभियातव्याः सेव्या देवाः शक्रादयो रावण-

यदभियास्यन्ति देवाः शक्रादयः ।

रामः— आ अतः खलु प्रभाप्रवाहः । भगवत्प्रसादात् पूतमात्मानमपरमिव पश्यामि ।

नारदः—

देवस्त्रिविष्टपजुषां पतिरेष मेषो
मेधातिथेरशनिकेतुरपां च वर्षी ।
शाखासहस्रविषयीकृतसर्वतन्त्रो
यस्यापदानमृषिरक्षरमूर्तिराह ॥ २४ ॥

रामः— प्रणमामि भगवन्तम् ।

नारदः— पश्य

सकल्माषैः कण्ठैरनलकणगर्भैश्च नयनै-
रमी रुद्रा बाह्वन्तरतरलहाराहिमणयः ।
हिमांशोरापाद्य प्रतिमकुटमेकादश कलाः
कलानां शेषाणां भसितमिव चूर्णं दधति ये ॥ २५ ॥

---

स्य लङ्कां स्वयमेव त्वामनुग्रहीतुमभियास्यन्तीति यत् अतः परमाश्चर्यं किमित्यर्थः । आ इत्यव्ययं स्मरणे ॥ अतः खलु देवानामभियानादेव ॥ अयं प्रभाप्रवाहः ॥ भगवत्प्रसादात् पूतमज्ञानतमसो निरासेनात्यन्तं विशुद्धमपरमिव पश्यामि । अपरत्वोत्प्रेक्षायां पूतत्वं हेतुः । तत्र देवानां श्रेष्ठमिन्द्रं दर्शयति— एष देवस्त्रिविष्टपजुषां पतिरिन्द्रः ॥ मेधातिथेर्मेषः ॥ अजः । यज्ञाङ्गे मन्त्रे मेधातिथेर्मेष इति इन्द्रसम्बोधनं दृश्यते यन्मूलोऽयं प्रयोगः । अशनिः केतुर्ध्वजो यस्य स तथोक्तः ॥ अक्षरमूर्तिः ऋषिः मन्त्रब्राह्मणात्मको वेदः यस्यापदानं वृत्रहननाद्यद्भुतकर्म आह प्रतिपादयति । वेदं विशिनष्टि— शाखेति ॥ शाखासहस्रेण विषयीकृतं सर्वतन्त्रं अग्निहोत्रदर्शपूर्णमासैकाहाहीनसत्रादि निखिलं कर्मजातं येन स तथोक्तः । अनेन सर्वकर्मस्वपीन्द्रस्य देवतारूपेण समवायो द्योत्यते ॥ अपां वर्षी वृष्टिद्वारा सर्वप्राणिनां जीवनदाता । अथ रुद्रान् दर्शयति— पश्येति ॥ अमी रुद्राः एतान् पश्य । सकल्माषैः नीलैः कण्ठैः अनलकणगर्भैर्नयनैश्च उपलक्षिताः यद्यपि तृतीयस्य नयनस्यैवानलकणगर्भत्वम् । बाह्वन्तरे वक्षस्स्थले तरला हारभूतानामहीनां

रामः— नमामि वर्णोत्तमानां देवानाम् ।

नारदः— अमी वसवः । इमावश्विनौ ।

रामः— नमोऽस्तु लोकहितपरायणेभ्यो देवेभ्यः ।

नारदः—

आद्यं मनुं दशरथं चरमं च कृत्वा
तिष्ठन्ति भूमिपतयः पितरस्तवैते ।
ये भूतिमिन्द्रविषयां परिभूय दत्तं
पिण्डं त्वया प्रतिदिनं प्रतिपालयन्ति ॥ २६ ॥

( उभौ साश्रुजलं प्रणमतः )

रामः—

पश्य लक्ष्मण नस्तातं स्वदृष्टिपरिरम्भिणम् ।
सत्यं संरक्षता येन त्यक्तोऽहमसुभिः समम् ॥ २७ ॥

---

मणयो येषां ते तथोक्ताः । तरलो हारमध्यप्रत्युप्तो मणिः । यथोक्तं—'तरलो हारमध्यगः' इति । अथवा तरलाः उज्ज्वला ये भसितं भस्म दधाति हिमांशोः षोडशानां कलानां मध्यतः एकादश कलाः प्रतिमुकुटमापाद्यालङ्कृत्य शेषाणां पञ्चानां कलानां चूर्णमिव तैर्धृतं भस्म प्रतिभातीत्युत्प्रेक्ष्यते ॥ **वर्णोत्तमानां** वर्णो जातिः । अत्र देवजातिरुच्यते । जगदीश्वरश्रीपरमेश्वरांशत्वेन देवजातिभ्य उत्कृष्टानां देवानां नमामि । अत्र प्रणमनक्रियासम्बन्धसामान्यविवक्षया प्रयुज्यमाना षष्ठी कर्तृकर्मभावे सम्बन्धविशेषे पर्यवस्यति । देवान्नमामीत्यर्थः ॥ **लोकहितपरायणेभ्यः** यथाक्रमं धनधान्यादिसम्पत्प्रदानेनारोग्यप्रदानेन च वसूनामश्विनोश्च लोकहितपरायणत्वम् । अथ पितॄन् दर्शयति— **आद्यमिति** ॥ ये तव पूर्वे भूमिपतयः पितृत्वं प्राप्ताः त एते तव पितरः मनुमाद्यं दशरथं चरमं च कृत्वा यथाक्रमं तिष्ठन्ति । ये इन्द्रविषयां इन्द्रो विषय आश्रयो रक्षिता यस्यास्सा तां इन्द्रविषयां भूतिं सुरलोकसमृद्धिं निष्प्रतिबन्धमुपभोक्तुं शक्यामपि परिभूयानादृत्य प्रतिदिनं त्वया दत्तं पिण्डं प्रतिपालयन्ति प्रतिपाल्य भुञ्जत इत्यर्थः । इह पितॄणां पिण्डादानादादरातिशयेन पैतृकस्य कर्मणो यथाविध्यनुष्ठानं द्योत्यते । अथ तातदर्शने विशेषमाह— **उभाविति** ॥ **साश्रुजलं** भक्तिस्नेहहर्षाद्यनुभावैः अश्रुजलपुलकोद्भेदादिभिः सहितं यथा भवति तथा प्रणमतः ॥ हे **लक्ष्मण नस्तातं पश्य स्वदृष्टिपरिरम्भिणं** आत्मनो द-

लक्ष्मणः— आर्ये स्वप्न इव मे प्रतिभाति।

रामः— भगवन् किमागमनकारणं देवानामृषीणां पितॄणां च।

नारदः— भवतो देव्यास्सीतायाः पातिव्रत्यानुभावः।

रामः— अस्याद्भुतदर्शनमेव नः प्रत्ययकारणमासीत्। तथापि मां सन्देहयति तस्या रूपशोभानिमित्तम्।

नारदः— किं न जानीषे तस्या रूपशोभानिमित्तम्।

रामः— भगवन्न जाने।

नारदः— तस्या महर्षिपत्न्यास्तावदनसूयायाः वरप्रदानवशात्खलु।

रामः— आः दण्डकेऽपि मम सन्देहपदमिदमासीत् न पृष्टं परमार्थतः।

---

ष्टिभ्यामावयोराश्लेषं कुर्वाणं सत्यं संरक्षता॥ हेतौ क्तः॥ स्वप्न इवेति॥ अत्यन्तासंभावनीयदिव्यजनदर्शनहेतुका स्वप्नप्रतिभा। स्वप्नो ह्यसंभाव्यमप्याकाशगमनादि दर्शयति। इह देवा ऋषयोऽपि नारदेन दर्शिताः इत्याश्च राघवाभ्यामिति ज्ञेयम्। अत एव देवानामृषीणां पितॄणां चेति देवैः पितृभिश्च महर्षीणां समभिव्याहारः। अथ नारदः पृष्टो देवानामागमनकारणमाह— भवत इति॥ यतस्तत्र पत्न्या लङ्कावृत्तान्तस्य देवा एव दिव्यचक्षुषस्साक्षिणः अतस्तत्सम्प्रतिपत्तिं विना लोकप्रत्ययो न भवतीति तदर्थं तत्पातिव्रत्यानुभावेन जगदीश्वरा देवादयोऽप्यानीताः अतोऽत्यन्तं विस्मयनीयस्तव देव्याः पातिव्रत्यानुभाव इत्यभिप्रायः॥ अस्येति॥ अस्य पातिव्रत्यस्य प्रत्ययेऽस्माकमद्भुतं देवादीनां दर्शनमेव कारणमासीत्। अनद्यतनत्वं न विवक्षितम्॥ तथापि तस्या रूपशोभानिमित्तं मां सन्देहयति॥ सन्देहशब्देन तत्कार्यं व्याकुलत्वं लक्ष्यते। रूपशोभानिमित्तज्ञानं प्रति व्याकुलं मे मनः न तु पातिव्रत्यमुद्दिश्य सन्देहलेशोऽप्यस्तीत्यभिप्रायः। तस्या इत्यादि खल्वित्यन्तो ग्रन्थस्स्पष्टः। अपर्यवसित एव नारदवाक्ये स्वयं निरूपयति— आ दण्डकेऽपीति॥ आ इति स्मरणे॥ दण्डकेऽपि मम सन्देहपदम्॥ कथमिदमस्या रूपमेवं जातमिति जिज्ञासा सन्देहपदेनोच्यते॥ इदं ईदृशमिदानीन्तनमिव रूपशोभादर्शनं तदानीमपि जिज्ञासायाः पदं कारणमासीत्। तस्याप्यनसूयादर्शनानन्तरं सञ्जातत्वादनसूयावरप्रदानं कारणं संभवति न केवलमत्रत्यस्यैव रूपशोभादर्शनस्येत्यभिप्रायः। दण्डकेऽपि रूपदर्शनसमये न दोषाशङ्का जाता। त्वं च प्रिया

नारदः— तस्याश्शरीरगतं तव दर्शनपथे सर्वं मण्डनरूपं भविष्यति । तथा हि

वसुधारजश्शयनकालसञ्चितं
स्तनमण्डले मलयजत्वमागतम् ।
समपद्यताश्रयमहीरुहच्युतं
परिणामि पर्णमलकस्य भूषणम् ॥ २८ ॥

रामः— कृतं देवशासनेन । ननु भवान्सत्यवादी समाधिचक्षुरेव प्रमाणम् ।

लक्ष्मणः— ( आत्मगतं ) अहो नु खलु मन्दैरस्माभिः वचनविस्फुलिङ्गैराहतापि महादेवी नापद्यत विकृतिम् ।

रामः— भगवन् किमाज्ञापयन्ति देवाः पितरो महर्षयश्च ।

---

चक्षुषी मे हरसि पुरमयोध्यामावसन्तीव चित्रमिति जिज्ञासामात्रस्यैव दर्शितत्वात् ॥ **न पृष्टं परमार्थत इति** ॥ परमार्थशब्देन सम्यक्त्वं लक्ष्यते । किमस्य कारणमिति सीतां प्रति न सम्यक् पृष्टं मयेत्यर्थः । अथ नारदो वाक्यशेषमाह— **तस्या इति** ॥ एवं भविष्यतीत्यन्तेन ग्रन्थेन वरप्रदानप्रकारं दर्शयित्वा तस्य फलं दर्शयति— **तथा हीति** ॥ **शयनकालसंचितं वसुधारजः** तव दर्शनपथे **मलयजत्वं** चन्दनानुलेपनत्वमागतम् । तथा सीतानिवासाश्रयभूतात् महीरुहात् च्युतं **परिणामि** पक्वं **पर्णमलकस्य** केशपाशस्य **भूषणं समपद्यत** ॥ **कृतं देवशासनेनेति** ॥ पतिव्रतैव सीतेति रामं प्रत्युच्यतामिति यद्देवशासनं तन्न वक्तव्यं प्रयोजनाभावादित्यभिप्रायः । कुतो न वक्तव्यमत आह— **नन्विति** ॥ **समाधिचक्षुः** समाधिशब्देन योगाभ्यासजनितं दिव्यं ज्ञानमतीतानागतादिविषयमुच्यते । तदेव चक्षुरर्थप्रकाशसाधनं यस्य स तथोक्तः । अनेन त्रिविधज्ञानकारणदोषाभावात् यथार्थदर्शित्वमुक्तम् । सत्यवादीत्यनेन यथादृष्टार्थवादित्वम् । उभयमपि प्रामाण्ये कारणम् । यथोक्तं— 'यथार्थदर्शिनः पुंसो यथादृष्टार्थवादिनः । उपदेशः परार्थो यः स इहागम उच्यते ॥' इति । भवद्वचनादेव निश्चिते सीतायाः पातिव्रत्ये न संवादप्रमाणापेक्षेति भावः । अहो नु खल्विति विस्मये । मन्दैरज्ञैः वचनैरेव विस्फुलिङ्गैरभिक्रूरैराहतापि महादेवी न किञ्चिद्विकृतिमापद्यत । महति विकारहेतौ सत्यपि विकाराभावेन बहुमानातिशयो द्योत्यते । अत एव

नारदः— सह रावणजीवितैस्समाप्तस्ते वनवासकालः । तस्मात् सार्धं देव्या नगर्ययोध्या प्रवेष्टव्येति ।

रामः— अनुगृहीतोऽस्मि ।

नारदः— तेन हि आनयनार्थं देव्याः लक्ष्मणमाज्ञापय ।

रामः— ( जनान्तिकं ) लक्ष्मण का नामात्र प्रतिपत्तिः ।

लक्ष्मणः— आर्य किमत्र परीक्षितव्यम् । अस्याश्शुद्धिसाक्षिणो देवाः पितरो महर्षयश्च ।

रामः— ( प्रकाशम् ) लक्ष्मण अनुतिष्ठ महर्षिशासनम् ।

लक्ष्मणः— यदाज्ञापयत्यार्यः । ( निष्क्रान्तः )

नारदः— अहो नु खलु तवानुभावो विस्मयनीयः । पश्य

कार्मुकेण शमिते तवाधुना
रावणे त्रिभुवनैककण्टके ।
वासवस्य रघुवीर केवलं
जातमम्बुधरमण्डनं धनुः ॥ २९ ॥

रामः— ननु तस्य देवा मुनयश्च कारणम् ।

( ततः प्रविशति सीता लक्ष्मणश्च )

सीता— हिलिआमि अहं एदेण वुत्तंतेण । ण हि ण हि तुस्सा-

---

महादेवीत्युक्तम् ॥ किमाज्ञापयन्तीति ॥ बहुभिः प्रमाणैर्देव्याः पातिव्रत्यं विदितमेव किमन्यदाज्ञापयन्ति देवा इत्यर्थः ॥ सहेति ॥ रावणनिग्रहादिवस एव वनवासकालस्समाप्तः यतस्तस्मात् देव्या सार्धमद्यैवायोध्या प्रवेष्टव्या । का विप्रतिपत्तिः किं कर्तव्यम् । एतल्लक्ष्मणबुद्धिपरीक्षार्थमेव न त्वात्मनस्सन्देहादिति ज्ञेयम् । शेषं स्पष्टम् । अथ लक्ष्मणे सीतानयनार्थं गते कृतार्थस्समवसरप्राप्तां रघुनाथप्रशंसां करोति—अहो इति ॥ कार्मुकेणेति ॥ करणभूतस्यापि कार्मुकस्य कर्तृत्वारोपेण असिश्छिनत्तीतिवत् सौकर्यं द्योत्यते । अत एव कर्मसमर्थवाचिकार्मुकशब्दोपादानम् । सजातीयं वासवस्य कार्मुकं रावणहननासमर्थं दृष्ट्वा जात्यभिमानेनैव तव कार्मुकेण रावणे शमितेऽधुना वासवस्य धनुः केवलमम्बुधरमण्डनं जातम् । केवलमित्यनेन शत्रुहननव्यापाराभावो दर्शितः । जिह्रे-

मि एव्व । तस्स पापस्स पत्थाणसमए केण वि हत्थप्परिसो लंकाअं वि पादप्परिसो संवुत्तो । तस्स पापस्स सरीरप्परिसपंसुलाणि गत्ताणि अग्गिं वज्जिअ कहं परिसुद्धाणि भविस्सन्ति । ( परिक्रम्यावलोक्य ) जेदु अज्जउत्तो ।

जिह्रेम्यहमनेन वृत्तान्तेन । न हि न हि तुष्याम्येव । तस्य पापस्य प्रस्थानसमये केनापि हस्तस्पर्शो लङ्कायामपि पादस्पर्शः संवृत्तः । तस्य पापस्य शरीरस्पर्शपांसुलानि गात्राणि अग्निं वर्जयित्वा कथं परिशुद्धानि भविष्यन्ति । जयत्वार्यपुत्रः ।

रामः— देवि इत इतः ।

शङ्कितासि मया देवि धर्मशीलापि जानकि ।
विश्वास्यन्ते कथं शेषा योषितः प्रोषिताः प्रियैः ॥ ३० ॥

सीता— अज्जउत्तो एव्व परमत्थदो जाणादि ।

आर्यपुत्र एव परमार्थतो जानाति ।

---

म्यहमेतेनाग्निप्रवेशवृत्तान्तेन । अग्निप्रवेशस्य दोषाशङ्काकरणत्वेन व्रीलाहेतुत्वम् । अत्र ह्रिया शोको लक्ष्यते । मनसाप्यस्खलितचारित्रायास्तस्याः आत्मगोचरा दोषाशङ्का महान्तं शोकं जनयत्येव ॥ न हि न हीति ॥ शोको न कर्तव्य इति भावः ॥ तुष्याम्येव ॥ तोषे कारणमाह— तस्सेति ॥ तस्य रावणस्य प्रस्थानसमयेऽकस्मात् हस्तस्पर्शः लङ्कायां पादस्पर्शश्च संवृत्तः ॥ तस्य पापस्य शरीरस्पर्शेन पांसुलानि दुष्टानि गात्राणि अवयवान् अग्निं वर्जयित्वा कथं परिशुद्धानि भवन्ति ॥ अतः अग्निप्रवेशेन सन्तोष एव कर्तव्य इति पर्यवसानम् । अथ जानकीं दृष्ट्वा व्रीलानुतापहर्षविवशो भूत्वा आह— देवीति ॥ जानकि धर्मशीलापि धर्मशीलत्वेनावधृतापि बुद्धिपूर्वं मया शङ्कितासि किमर्थमित्यत आह— विश्वास्यन्त इति ॥ दोषाशङ्कायाः प्रयोजनं केनचित्प्रमाणेन परीक्षा । यद्यपरीक्ष्यैव त्वं परिगृह्यसे ततः कथं चिरकालं प्रोषिताः शेषाः त्वद्व्यतिरिक्ताः पतिव्रता योषितो लोकैः विश्वास्यन्ते । विप्रयुक्ताः पतिव्रतास्स्त्रियः परीक्ष्यैव भर्तृभिः परिग्रहीतव्या इति न्यायं लोके प्रतिष्ठापयितुं मया त्वत्परीक्षा कृता न तु त्वयि दोषाशङ्कयेत्यभिप्रायः । अथार्यपुत्रस्यात्मनि वस्तुतो दोषशङ्काभावमवधार्य सानन्दमाह— आर्यपुत्र एव परमार्थतो मां जानाति ॥ नान्यो जानातीत्येवशब्देन दर्शितम् ।

**रामः**— देवि स्निग्धस्यापि विप्रतिपत्तिः फलवती संवृत्ता यया देवा महर्षयश्च प्रत्यक्षीकृताः ।

( ततः प्रविशति कृताभिषेको विभीषणः )

**विभीषणः**— जयतु देवः ।

**रामः**— विभीषण, का वार्ता लङ्कायाम् ।

**विभीषणः**— देवमाक्रोशति लङ्कावासी महाजनः ।

**रामः**— किमिति किमिति । ( पर्याकुलस्तिष्ठति )

**विभीषणः**— पयो मद्यस्पर्शं परिशङ्क्यते । नामिश्रं हिरण्यं हिरण्यरेतसमर्हति । कथं दीपिकां तमः कलङ्कयतीति ।

**रामः**— इदानीमाश्वासितोऽस्मि जनवादश्रवणेन ।

---

रूपविपर्यासदर्शनसमये तु वरदानापरिज्ञानान्मम दोषभ्रम एवेत्याह— **स्निग्धस्यापीति** ॥ त्वयि स्निग्धस्यापि मे विप्रतिपत्तिः विरुद्धा प्रतिपत्तिः भ्रान्तिप्रतिपत्तिर्वा फलवत्यासीत्। फलं दर्शयति— **ययेति** ॥ विभीषणप्रवेशस्य लङ्कावार्तानिवेदनं पुष्पकानयनं च प्रयोजनम् । तत्र लङ्कावार्तां पृष्टो निवेदयति— **देवमिति** ॥ आक्रोशनप्रकारं दर्शयति— **पय इति** ॥ **परिशङ्क्यत इति** ॥ कर्मणि णिजन्तः । इतरथा द्विकर्मकत्वासंभवात् । न चात्र प्रयोजकव्यापारकर्मत्वेन पयसोऽभिधानं संभवति अचेतनस्य पयसः शङ्काकर्तृत्वासंभवेन प्रयोज्यत्वाभावात् । यथाश्रुत्यर्थग्रहणेऽस्य वाक्यस्यासम्बद्धार्थत्वं स्यात् इत्यन्यथा व्याख्यायते । यथा केनचित् कश्चिन्निर्दोषमपि पयः प्रति मद्यस्पर्शं परिशङ्क्यते आत्मनो मद्यस्पर्शभ्रमेण मद्यस्पर्शमशङ्कमानस्यापि अन्यस्य मद्यस्पर्शशङ्कामुत्पादयतीत्यर्थः । तथा सीतां प्रति महाजनस्य दोषशङ्काभावेऽपि स्वजनेन भर्त्रादिना दोषभ्रमेणापरिग्रहात् शङ्कोत्पादिता इति । अग्निप्रवेशोऽपि निष्फल इत्याह— **नामिश्रमिति** ॥ न हि शाणोल्लेखनादिना निर्दोषत्वेन निश्चितं हिरण्मयं हिरण्यरेतसमर्हति प्रयोजनाभावात् । एवं शीलगुणादिभिर्निश्चितचारित्रा सीता यद्वह्निं प्रवेशिता सोऽपि महादोषः । ननु चिरकालं दुर्जनदेशे स्वयमेव निवासात् दोषाशङ्का भवत्येवं अत आह — **कथमिति** ॥ यथा तमोऽप्युज्ज्वलां दीपिकां न कलङ्कयति प्रत्युत दूरमपसर्पत्येव तथा रावणस्तपसा पातिव्रत्यमाहात्म्या चात्यन्तमधृष्यामग्निनाप्यदाह्यामनुभावविशेषेणात्मानं रक्षितुं स्वयमेव समर्थां कथं दूषयति इत्याक्रोशति लङ्कावासी महाजनः । लङ्कावासीत्यनेन तेषां लङ्कायां सीताचारित्रं प्रति साक्षित्वं दर्शितम् । तेनाक्रोशस्य निर्दोषत्वनिश्चयमूलत्वं द-

**विभीषणः**— देव, महादेवीं प्रत्यवनतानि शिरांसि नागरिकाणामद्यापि नोत्तिष्ठन्ति ।

**रामः**— जाने कियाननुभावो जानक्याः ।

**विभीषणः**— पश्य भगवतो वैश्रवणस्य

पुष्पायुधप्रतिम पुष्पकनामधेया
सेयं विमानवसतिर्वसते गुणानाम् ।
यां स्वीकृतत्रिभुवनामपि सावकाशा-
माशामिवाहुरपरस्य परिग्रहाय ॥ ३१ ॥

**रामः**— प्रेषय भगवते लोकपालाय वैश्रवणाय ।

**नारदः**— मा मा राक्षसचिरानुभवान्मलीमसं इदं विमानं देव्यास्तवारोहणेन च पवित्रीकृत्य पश्चात्साकेतात् कैलासमुपनय ।

**रामः**— उपपन्नमिदम् । लक्ष्मण प्रथमं देवीमारोपय रथम् ।

**लक्ष्मणः**— यदाज्ञापयत्यार्यः ।

**सीता**— हम् । हम् ।

---

र्शितम् । न केवलं महाजना एव देवीं बहु मन्यन्ते अपि तु ये दोषदर्शनैकपराः परिहसनशीलाः नागरिकजनास्तेऽपि बहुमानेनेदानीमप्यवनताशिरस एव वर्तन्त इत्याह— देवेति ॥ जानक्या अनुभावः कियान् अपरिच्छेद्य इत्यर्थः । अथ पुष्पकं दर्शयति— पश्येति ॥ हे देव पुष्पायुधप्रतिम गुणानां वसते नित्यमाश्रयभूत भगवतो वैश्रवणस्य पुष्पकनामधेया वसतिरियं एनां पश्यतु भवान् ॥ स्वीकृतात्रिभुवनामपि यामपरस्य त्रिभुवनस्य सावकाशामवस्थानायावकाशं दातुं पर्याप्तामाहुः । विमानस्तुतिद्वारा इयमतिशयोक्तिः । आशां तृष्णामिव । अ॰श॰ स्वीकृतत्रिभुवनापि अपरत्रिभुवनपरिग्रहगोचरा भवति । यथोक्तं—"अणुमात्रं मनस्तस्मादाशा नाम लतोद्गता । तस्या नालमुपघ्राय भुवनानि चतुर्दश ॥" इति ॥ मा मा ॥ प्रेषयेति शेषः । कुत इत्यत आह—राक्षसेति ॥ चिरानुभवेन मलीमसत्वातिशयो दर्शितः । देव्यास्तवारोहणेनेति समुच्चयः । साकेताक्ष्योध्यायाः । हामिति विषादजनितो वाग्रूपोऽनुभावः । अथ रथारोहणप्रसङ्गेन सहसा दशग्रीवकृतां वञ्चनां स्मृतवत्या आत्मनि मायारामभ्रमेण लक्ष्मणे मायालक्ष्मणभ्रमेण सञ्जातं विषादमनुभावमुखेनालक्ष्य

**रामः**— ( स्मितं कृत्वा ) देवि

अहं सत्यं रामः शशिमुखि न मायी दशमुखो
रथं भ्राता मे त्वां नयति न च सूतो नृपसुते।
कृतं वाचा भूयस्सरसिजपलाशच्छविमुषा
कराङ्गुल्या धत्से ननु सकिरणं मण्डनमिदम् ॥ ३२ ॥

**सीता**— एसो अञ्जली अच्चरीअरअणाणं। अण्णहा कहं दाणिं अज्जउत्तं रक्खसं अ परमत्थदो जाणामि।

एषोऽञ्जलिः आश्चर्यरत्नयोः। अन्यथा कथमिदानीं आर्यपुत्रं राक्षसं च परमार्थतो जानामि।

**लक्ष्मणः**— आर्ये तव शासनाद्दण्डकेषु प्रस्थिते मयि

संरक्षिता मम समाधिरिषुर्न दैवं
साक्षीति यत्कथितमत्र तथैव जातम्।

---

तमपनेतुं सस्मितमाह—**अहमिति** ॥ ननु पूर्वं दशग्रीवेणाप्येवमुक्तमत आह—**कृतमिति** ॥ ननु हेतौ। यतः कराङ्गुल्या इदं मदीयं धत्से अतः स्वाधीनमेव तव सत्यासत्यपरीक्षासाधनमिति भावः ॥ **एषोऽञ्जलिराश्चर्यरत्नयोः** अङ्गुलीयचूडामण्योरित्यर्थात् सिध्यति ॥ **अन्यथा** अनयोरसंनिधाने **कथमिदानीमार्यपुत्रं राक्षसं च परमार्थतो जानामि** ॥ आर्यपुत्रोऽयं न राक्षस इति कथं जानामीत्यर्थः। अथ लक्ष्मण आर्येण परिगृहीतायां सीतायां कृतार्थो भूत्वा तस्याः लोकोत्तरं महिमानमालोच्य सबहुमानमाह—**आर्ये तव शासनादिति** ॥ तव शासनात् सुणाहि लक्खण किं चिरअसीति नियोगात् ॥ **दण्डकेषु** दण्डकारण्यान् वनप्रदेशान् उद्दिश्य **प्रस्थिते** प्रस्थातुमुपक्रान्ते मयि। "आदिकर्मणि क्तः।" एकाकिनीं कथमहं भवतीं त्यजामीति मद्वचनं श्रुत्वा समाधिर्मम संरक्षिता न तवेषुः समाधिरेव मां रक्षितुं समर्थः समाध्यभावे सति तवेषुरकिञ्चित्कर एवेति यत्कथितं तदत्र लङ्कायां तथैव जातम्। अत्र लङ्कायामेकाकिन्येव त्वं समाधिबलेन रावणेनात्यन्तमधृष्या भूत्वा आत्मानं संरक्षितवतीति तव वचनं सत्यमेव सञ्जातम्। यत्पुनस्त्वया दैवं साक्षीति कथितं तदप्यत्र लङ्कायां तथैव जातम्। यतो भगवानग्निर्मूर्तिमान् नारदो देवाः पितरो महर्षयश्च त्वत्समाधिमहिम्ना नीतास्त्वद्वृत्तान्तसाक्षित्वेनास्माभिः प्रत्यक्षीकृता इति तदपि सत्यमेव जातम् ॥ सा-

सामान्यदर्शनजडेन मया यदुक्तं
त्वं तत्क्षमस्व शरणं चरणौ ममैतौ ॥ ३३ ॥

( प्रणमति )

सीता— कुमार उट्ठेहि उट्ठेहि । को एत्थ दोसो । रक्खसर्सीसप्परिसपंसुळाणि पादाणि दाणिं कुमारेण पक्खाळिदाणि विअ परिसुद्धाणि होंति ।

कुमार उत्तिष्ठ उत्तिष्ठ । कोऽत्र दोषः । राक्षसशीर्षस्पर्शपांसुलौ पादौ कुमारेण इदानीं प्रक्षालिताविव परिशुद्धौ भवतः ।

( नेपथ्ये )

देवयोरुभयोर्दृष्टं माहात्म्यमतिमानुषम् ।
यः स्वधैर्यं निराकार्षीन्निर्विकारा च यानले ॥ ३४ ॥

---

मान्यदर्शनजडेन सामान्यं सादृश्यमन्यस्त्रीसादृश्यबुद्ध्या जडेन त्वन्महिमानमजानानेन ॥ यदुक्तं 'अविवेकमदाक्षिण्यमनावेक्ष्यमनूर्जितम् । धिगहं जन्म नारीणाम् ॥' इति तदपि मिथ्यैव जातमित्यर्थात्सिध्यति । अतस्त्वं तत्क्षमस्वेति स्वापराधमर्षणाभ्यर्थनापूर्वकं नमस्करोति । इदानीं राक्षसशीर्षस्पर्शपांसुलौ पादौ कुमारेण प्रक्षालिताविव ॥ दोषसहिते रेणुसहिते च वर्तमानेन श्लेषेन पांसुलशब्देन प्रक्षालनयोग्यत्वं दर्शितम् ॥ कुमार उत्तिष्ठोत्तिष्ठ कोऽत्र दोषः ॥ तदानीं त्वद्वचनमनाद्रियमाणया मया महती दुरवस्थानुभूतेति तव न कश्चिद्दोष इत्यभिप्रायः । अथ राघवस्य निर्दोषा देवी वृथा मया परित्यक्तेत्यनुतापमपनेतुं काचिद्वागाकाशे प्रवृत्ता तामाह— देवयोरिति ॥ देवश्च देवी च देवौ । पुमान्स्त्रियेत्येकशेषः । देवस्य राघवस्य देव्याःसीतायाश्च अतिमानुषं मानुष्यकदुर्लभं माहात्म्यं दृष्टम् ॥ किं तन्माहात्म्यमत आह— यो देवः स्वधैर्यं निराकार्षीत् ॥ स्वधैर्यं स्वस्थैर्यं निश्चयमिति यावत् । लोकापवादभयमात्रेण पतिव्रतैव सीतेति यावन्निश्चयं निराकार्षीत् उपेक्षितवान् । इह निश्चयफलस्य सीतापरिग्रहस्याभावेन निश्चयेऽनादर उक्त इति ज्ञेयम् । न हि लोके कश्चिल्लोकापवादभयमात्रेण निर्दोषत्वेनावधृतां प्राणेभ्योऽपि गरीयसीं प्रियतमां धर्मपत्नीमुपेक्षितुं समर्थ इति उपेक्षैव तावदतिमानुषं माहात्म्यम् । एवमुपेक्षायाः शोभनोदर्कत्वं च देवस्य माहात्म्यादेव संजातम् । अतोऽत्रानुतापो न कर्तव्य इति भावः । तथा या सीता अनले निर्विकाराभूत् पातिव्रत्यप्रतापसन्तप्तेनानलेन

नारदः— भद्रमुख भगवानग्निरेव तवाधुना साक्षित्वं प्रतिपन्नः ।

( आकाशे प्रध्वनन्ति शङ्खपटहाः । सर्वे सविस्मयमवलोकयन्ति । )

नारदः — भद्रमुख स्वनिष्क्रमणेन देवाः तव निष्क्रमणं चोदयन्ति ।

रामः— एहि देवि वैदेहि ।

नमस्व देवि देवर्षिं देवशासनशंसिनम् ।
सोपवेदस्य वेदस्य यः प्रतिष्ठा स्वयंभुवः ॥ ३५ ॥

( हस्तमवलम्ब्य दर्शयति )

सीता— दाणिं अज्जउत्तहत्थप्परिसं उवलम्भिअ पमाणं होइ अब्भुदङ्गुलीअं । रक्खसमाआदो मोइदं अत्ताणमवगच्छामि ।
इदानीमार्यपुत्रहस्तस्पर्शमुपलभ्य प्रमाणं भवत्यद्भुताङ्गुलीयकम् । राक्षसमायातो मोचितमात्मानमवगच्छामि ।

---

शीघ्रमादायापरोक्षीभूतेन समर्पिता तदप्यतिमानुषं माहात्म्यं दृष्टम् । निर्विकारा च दानले इत्येतदेवानुवदन्नाह— भद्रमुखेति ॥ भगवान् सर्वज्ञ इत्यर्थः । अथ नारदो देवादीनां प्रस्थानसमये शङ्खनिनादं श्रुत्वा तैः सह जिगमिषुः राघवमयोध्यां प्रस्थापयितुमाह— भद्रमुखेति ॥ स्वनिष्क्रमणेन निष्क्रमणसमयभाविशङ्खपटहानिनादरूपसूनिमित्तसंपादनेन तव विनिष्क्रमणं चोदयन्तीव अतोऽयमेव मुहूर्तस्तव निष्क्रमणायेति शेषः । अथ गन्तुमारभते हे देवि वैदेहि एहि देवशासनशंसिनं इमं देवर्षिं नमस्व ॥ नमस्कार्यत्वमुपपादयति— सोपवेदस्येति ॥ स्वयंभुवो विरिञ्चस्य यो वेदः तस्य प्रतिष्ठा आश्रयः । ब्रह्मणा हि प्रथमान्तेवासिन्यस्मिन्नारदे स्वपुत्रे सर्वा विद्याः प्रतिष्ठापिताः । अथवा स्वयंभुवो नित्यवेदस्येत्यर्थः । सोपवेदस्येत्यङ्गोपाङ्गानामुपलक्षणम् । यथाहुः— 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥ पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वो वेद इत्यपि । अर्थवेदश्चतुर्थोऽन्ते उपवेदा इति स्मृताः ॥' इति । सर्वथा गन्धर्ववेदसर्वस्वप्रकाशिन्या वीणाया धारणात् विशेषतस्सोपवेदस्येत्युक्तम् । अथ सीता आर्यपुत्रेण हस्तमवलम्ब्य दर्शितं देवर्षिं प्रणम्याह— आर्यपुत्रहस्तस्पर्शमुपलभ्याद्भुताङ्गुलीयं प्रमाणं भवति ॥ परमार्थभूतार्यपुत्रज्ञाने प्रमाणं भवतीत्यर्थः ॥ अधुना राक्षसमायातो मोचितमात्मानमवगच्छामि ॥ पूर्वं दण्डकावने राक्षस्याः शूर्पणखायाः मायया विप्रलब्धस्य मायासीतारूपेण वञ्चितस्य मे मया धृतस्तवायमाश्चर्यचूडामणिः इदानीं देव्या-

रामः— पूर्वं राक्षसीमायाविप्रलब्धस्य मे देव्याः प्रत्ययकारणमासीदाश्चर्यचूडामणिः ।

नारदः— भद्रमुख देवाननुगच्छामि । किं ते भूयः प्रियमुपहरामि ।

रामः— सिद्धार्थोऽहं किमतः परमिच्छामि । तथाप्येतावदस्तु (भरतवाक्यम्) ।

मन्त्रैरावर्ज्यमानं हविरमरपतेरस्तु कल्याणवृष्टयै
धन्वी सङ्कल्पजन्मा सरभसमपथे सायकान्संहरेत ।
राजानो राजधर्मप्रणिहितमनसो मौलिभारं वहन्तां
प्रज्ञा यातु प्रसादं प्रतिदिनमवधूयान्तराबद्धमौनम् ॥

( निष्क्रान्ताः सर्वे )

इति शक्तिभद्रविरचिते चूडामणिनाटके सप्तमोऽङ्कः ॥

इत्याश्चर्यचूडामणिः समाप्तः ॥

---

पर्णशाला शूर्पणखा मायासीता ततः परम् ।
जटायुषो वधोऽशोकवनिकाप्यङ्गुलीयकम् ॥
सप्तमोऽङ्कस्ततश्चेत्थं चूडामण्यङ्ककीर्तनम् ।

---

स्तव त्वयि परमार्थसीताबुद्धिं जनयति तेन प्रत्ययकारणमासीत् ॥ भद्रमुख भद्रं सुन्दरं नित्यप्रसन्नं च मुखं यस्य स तथोक्तः । यन्नियोगादहमागतः तान्देवान् प्रसाधितकार्यं निवेदयितुमनुगच्छामीत्यर्थः ॥ भूयः अतः परं किं प्रियं उपहरामि ॥ तदुच्यतामिति शेषः ॥ सिद्धार्थोऽहं युष्मदनुग्रहप्रसाधितात् रावणवधात् जगदनुग्रहसंपादनेन निश्शङ्कं जानकीपरिग्रहेण च कृतार्थोऽहं किमुत्तरमतः परमिच्छामि । यतस्सर्वपुरुषार्थसाधनं भवद्विधानां दर्शनमभूत् अतः किमपरमेष्टव्यमित्यभिप्रायः ॥ भरतवाक्यमिति ॥ अत उत्तरं परित्यक्तानुकार्यभावस्य नर्तकस्य वाक्यमित्यर्थः । एवं नर्तकः चूडामणिसंज्ञनाटकप्रयोगेण सामाजिकानां ब्रह्मास्वाददेशीयमानन्दं सम्पाद्य तस्यैव जगदभ्युदयात्मकं

फलमनुग्रहीतुं सामाजिकान् प्रार्थयते— **तथापीति** ॥ यद्यप्यनेन नाटकप्रयोगेण भवतां प्रसादादस्माकं सकलाभिलषितफललाभः करस्थ एव ॥ **तथाप्येतावदस्तु** ॥ एतावच्छब्दो वक्ष्यमाणबुद्धिस्थफलपरिमाणवचनः । इदमिदं च फलं भवत्वित्यर्थः । तानि फलानि दर्शयति— **मन्त्रैरिति** ॥ द्रव्यदेवतासम्बन्धरूपकर्मप्रकाशनसमर्थैः **मन्त्रैः** करणभूतैः यजमानेनाग्न्यादिदेवताभ्यः **आवर्ज्यमानं** दीयमानं **हविरमरपतेः** पर्जन्यरूपस्येन्द्रस्य **कल्याणवृष्ट्यै भवतु** ॥ यथाकालं यथादेशं यथाभिलषितं च क्रियमाणत्वाद्वृष्टेः कल्याणत्वम् । यथोक्तं— "अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ॥" इति । यथा राघवकर्म जगदभ्युदयायाभूत् तथायं मया कृतस्तत्प्रयोगोऽपि जगदभ्युदयाय भूयादित्यभिप्रायः । तथा **धन्वी सङ्कल्पजन्मा सरभसं** शीघ्रं **अपथे** परदारान् परपुरुषांश्चोद्दिश्य पुरुषेषु स्त्रीषु च **सायकान् संहरेत** मा प्रहरतु । यथा रावणः परदाराभिलाषाद्विनष्टः अतः परं तथा कश्चिदपि माभूदित्यभिप्रायः । तथा **राजानो राजधर्मे** प्रजापरिपालनादौ **प्रणिहितमनसो** भूत्वा **मौलिभारं वहन्ताम्** ॥ यथा राघवः तथा । सर्वेषां **प्रज्ञा अन्तराबद्धमौनं** अन्तः स्वाश्रये आत्मनि आबद्धं दृढनिबद्धं मौनं निद्रातन्द्रीमोहालस्यादिकृतेन जाड्येन स्वाधिकृतकर्मानुष्ठानं प्रति तूष्णींभावमवधूय **प्रसादं यातु** उचितकर्मानुष्ठानजागरूकत्वं लभताम् । यथा राघवस्य प्रज्ञा स्वाधिकृते जगद्रक्षणे । अथवा अन्तराबद्धं मौनं राजसं तामसं च भावमवधूय प्रसादं राघवरूपसात्त्विकं नारायणभक्त्यात्मकं भावं लभताम् । अथवा अस्मत्प्रयोगपरितुष्टनाद्वैदतशिवभक्त्यात्मकं भावं लभताम् । अथवाऽन्तराबद्धमौनमविद्याकृतमनात्मनि देहादौ अहं ममेत्यध्यासं अवधूय प्रज्ञा आत्मा चिद्रूपत्वादात्मनः प्रज्ञाशब्दवाच्यत्वम् । प्रसादं सच्चिदानन्दात्मकं स्वयंप्रकाशरूपं स्वस्वरूपं लभताम् । इत्यधिकारिभेदेन योजनीयम् ॥

भारद्वाजग्रामवासी कुमारिलमतानुगः ।
विप्रः काञ्चिच्छक्तिभद्रकृतं व्याकृत नाटकम् ॥
रघुवीरस्य चरितं नित्यं सेव्यं हितार्थिभिः ।
यत्सेवया तरत्याशु नरः संसारसागरम् ॥

रघुनाथे भवेन्नित्यं हनूमत इवाचला ।
भक्तिर्ममाशुभध्वान्तसमुत्सारणभास्करे ॥
द्विषड्भुजं षण्मुखमम्बिकासुतं कुमारमादित्यसमानतेजसम् ।
वन्दे मयूरासनमग्निसंभवं सेनान्यमद्याहमभीष्टसिद्धये ॥
चूडामणेर्नाटकस्य विवृतिर्लिखिता मया ।
शङ्कराख्येन सुतरां गुरुपादावलम्बिना ॥
समाप्तोऽयं ग्रन्थः ॥
हरिः ओम् ।

# श्लोकानुक्रमणिका ॥


| | |
|---|---|
| अधिवसन् गुरुशासनतो | १५५ |
| अधीतवेदविद्योऽसि | १५८ |
| अनया कृतमन्यभुक्तया | १६४ |
| अनयोर्नमतोरद्य | २१४ |
| अनुकूलमृर्थ्यमविरोधि | १४१ |
| अपि नियमिनो दारान् | १३२ |
| अपि बन्धुषु नार्थिता वरं | १२६ |
| अपि मां विजल्पसि गभीर | १०८ |
| अपि वासववारणस्य वक्त्रे | १३३ |
| अभिगम्य मुनीन् वने | ९३ |
| अभिरञ्जनीं जनानां | ४ |
| अभिसरणमयुक्तमङ्गनानां | ५५ |
| अरुणे परिशीर्णमञ्जलौ | १९८ |
| अवधूय दशग्रीवं | २१४ |
| अवलोकय सुधाभुजाम | १७६ |
| अविवेकमनावेक्ष्यं | १०९ |
| अशङ्किता शिथिलय | ४३ |
| असतां सहजो भावः | ८३ |
| अस्यातिमात्रायतलोचनस्य | १४ |
| अहिभवनविधानान्युर्वीकृत्य | १५४ |
| अहं सत्यं रागाद्शशिमुखि | २३३ |
| आक्रान्ताः किन्नु बालो | ८४ |
| आचारानुचरता तपोधनानां | १८ |
| आतपत्त्र्यांवदुग्राममृतांशुं | १४९ |
| आदत्ताभिरिद्यप्रभृति | २०६ |
| आद्यं मतुं दशरथं | २२६ |
| आनेता मदकलभृङ्गकूजितानां | १८१ |
| आपाद्य भक्ति शयनं | १९४ |
| आयातं मामपरिचितया | १९९ |
| आरोपयत्यलकमानयति | १९६ |
| आर्येणांशुकमुज्झता | ३३ |
| आविर्भवत्यमृतभाजनं | १५० |
| इदं श्रुत्वा वचो भर्तुः | २१८ |
| इन्द्रकल्पे स्थिते राज्ञि | ३९ |
| इन्द्राणीमहमप्सरोभिरनयं | ९९ |
| इमां गम्भीरचारित्रां | १०३ |
| उद्यानं वनभूमयः | ३१ |
| उन्मर्यादमुपेक्ष्य रावणमहं | १५१ |
| एते स्वर्गविभूषणं विटपिनो | १६७ |
| एषां पल्लवमंशुकानि कुसुमं | १८१ |
| कनकहरिणः क्वेयं भूमिः | १२७ |
| करपल्लवमात्मुज्जिहीते | १९३ |
| कवचिततनुः पृष्ठावापी | १०१ |
| कस्य किन्नु कुतस्त्वन्नु | ९० |
| कार्मुकेण शमिते | २२९ |
| किं निश्वासैरलंपयासि | ११९ |
| कुवलयपलाशाक्षि क्व त्वं | १९१ |
| कृतवान् विधिनः शतं | १५९ |
| केकया च शिखिनां | १९३ |
| कैलाससानुमति खण्डित | १३८ |
| क्व साधवः क्व च रजनीचरा | २०९ |
| क्वेदं वनं वनचरैरपि | २९ |
| क्षतजकणिकापातात्सन्ध्या | ८८ |
| क्षतजजन्मकणोक्षितविग्रहः | १४० |
| क्षिप्तान्यद्रिशतान्यपास्यति | २१३ |
| खङ्गं निधेहि शिथिलीकुरु | ७५ |
| गगनमुत्पतति क्षितिमण्डले | ६१ |
| गन्धर्वदैत्यगगनेचर | १७१ |
| गन्धापार्द्रतलां सृजन्तु | १४६ |
| गुणाः प्रमाणं न दिशां | ९ |
| चरणनालसाध्यं | ५७ |
| चान्द्री कलेव शरपाण्डुर | १७२ |

| | | | |
|---|---|---|---|
| जगतीधरधातुसान्द्रं | ६६ | न रश्मिभिर्ग्लपयति यो | १४९ |
| जनतामशोकसहकारमञ्जरी | १६७ | नाहं बन्धुरगात्रि भीतिविषयः | १३५ |
| जित्वा ज्यायांसं स्वात्मनो | १५६ | नियमसलिलं पित्रोर्हर्तुं | ४१ |
| ज्याघोषेण निराकरोमि | १२ | नियमाभिषेकजटिलं तपोवने | १३४ |
| तनुभिस्सवेपथुभिरश्रु | ९७ | नीलोत्पलाकृतिमपास्य | १२३ |
| तरुणहरिणलक्ष्महेपिदंष्ट्रा | १३५ | पथि जलमुचामुत्सर्पिण्या | ९१ |
| तस्य लक्ष्मीर्नटस्येव | २११ | परभुक्तरसा पद्मा परं | १६५ |
| तिष्ठ त्वमत्र मम पश्यतु | १३९ | परमार्थमृगोऽयं चेत् | ९३ |
| तुण्डेनाङ्कुशसन्निभेन कनक | १३६ | परिवर्तनेन बहुशो | १८४ |
| तोयोद्गारि कदम्बकं | ९८ | पश्य लक्ष्मण नस्तातं | २२६ |
| त्यजतु भरतो भारं | १३० | पानाद्भूपरसायनस्य | १०० |
| त्रिभुवनरिपुरस्या रावणः | ७३ | पुरीं जेतुः कोपाद्भ्रमति | १५७ |
| दण्डो मे रजनिचरा | १६३ | पुष्पायुधप्रतिम पुष्पक | २३२ |
| दण्ड्यानां दण्डनोन्निद्रो | १६२ | पूतं पुनासि पितरं | १८८ |
| दयितमुपनयन्तं शैवलं | १९२ | प्रकृतिं प्रपद्य सहजां | १२१ |
| दर्भैः सैकतमण्डलानि | ७८ | बन्धुस्नेहो नु पापस्य | ८६ |
| दाक्षिण्यमृद्वी जनता | ७२ | बहुमानपदं भवाम्यहं | २१० |
| दायादसाधारणवस्तुवन्ध्यं | १०५ | भीमदंष्ट्रमरुणोर्ध्वमूर्धजं | ५८ |
| दृष्ट्वा तस्याश्च दौरात्म्यं | ६७ | मणिमंजुकेसरितमङ्गुलीयकं | ८९ |
| देवयोरुभयोर्दृष्टं | २३४ | मदाम्भसा वियति | २२३ |
| देवस्त्रिविष्टपजुषां पतिरेष | २२५ | मन्त्रैरावर्ज्यमानं हवि | २३६ |
| द्रुतमञ्जननीलमावयोः | २०६ | मयि जीवति मानुषादवाप्ता | ९४ |
| धनुर्ज्यानिर्घोषैः सरभस | ४२ | मयि बुद्धयाप्यसन्दिग्धां | ११५ |
| धिगहं मानुषं जन्म | ३५ | मरतकतटे मन्दाकिन्या | १०४ |
| ध्यानैकाग्रमना विजृम्भण | १५२ | मरतकमयीं प्रीत्रां साचीकरोति | ९४ |
| न कथं रक्षितुं शक्तः | ४० | मरतकरुचो मायद्भ्रूत्ना | १९२ |
| नखोदग्रौ पादौ रथचरण | १९१ | मात्रोः प्रस्नविभिस्स्तनैः | ३६ |
| नगरीं विश पश्य | २०९ | मायाबलेन बलिनां | ११२ |
| न पुमान् पुण्डरीकाक्षो | १०२ | मायाविधेयवपुषां नव | १०९ |
| न भयेन युधो न पक्षपातात् | १६६ | मार्गे निर्वृतिमार्गमार्गणपरा | ३४ |
| नमस्व देव देवर्षिं | २३५ | मुञ्च मायागतं दुःखं | १२१ |
| नयति नयने सावज्ञं मां | १६८ | मुनयो न वयं कृतागसि | ६३ |
| नयनविषये मायासीतां | १२५ | मेघावृताम्बु जगतीधर | २०१ |

मैनाकं नागकन्थासुरत १७९
यतते यस्य निष्कृत्यै २७
यदि सुरपदरकाङ्क्षा वज्रिणो १६०
यदेष दोषातनमीक्षणानां १४८
यमवरुणकुबेरवासवादीन् १५७
यस्य नैसर्गिकी शोभा १०३
यानि यानि मनोज्ञानि १८०
युधि वनचरवृत्तेरायुधं १७१
युधि सरभसं हत्वा ९७
येन सोऽयमपि रावणो १६१
येनानीयत ताटका यमपदं १६१
रक्षोवधाद्दुरितकर्म २०४
रघुवृषभकराङ्गुलीवियोगात् १९८
रचयन् भ्रुकुटीः प्रहस्य ८२
रजनीचरगूढसंविभिः २१७
रथचरणायुधस्य चरणेन ७६
रामाभिधानस्य परस्य पुंसः ८६
लोकानां यान्त्रितयमुदरा २२३
वक्त्राण्येतानि तेऽद्य १६०
वक्त्रेण स्फुरिताधरेण ७०
वर्णेभ्यो हृतमुपभुज्य १७४
वसुधारजश्शयनकालसञ्चितं २२८
वसुधेव महीभुजः प्रियेयं १७६
वहामि मायापिशुनं ८७
वासो वल्कलमास्पदं २४
विधुतो व्रजामि सुरलोक २०६
विप्रा यजन्ति च नमन्ति १७३
विसृजति हुतगन्धं ७९
वीचीस्थाने सहस्रं १
वेगादुत्पततो विधूय नमुचिं २०८
वेलावने कुसुमितान् २२२
व्याजृम्भते जलधरोदर ६०
शङ्कितासि मया देवि २३०
शरणमस्मि जटायुरहं सखा १३७
शरपाण्डुरगात्रेषु १९८
शून्यमन्तररविन्दलोचने ६२
शृङ्गाणि मेरोरिव २२४
शैलायामिभिरम्बुवाह ४७
सकलमाषैः कण्ठैः २२५
सकामा भव कैकेयि १२०
सत्यवादिनि धर्मिष्ठे १२०
सदसि नमयता धनुर्मया २०३
सनाथीकुर्वाणा धरणिमथवा १६
सन्ध्यारुणा सलिलवाह ६८
सपत्नीकस्य रामस्य १०
समुच्छ्वसिहि चेतस्त्वं ६७
साक्षात्कृत्य समित्समिद्धमनलं १५
साधारणी नयविदां ३७
साधु संयमय मूर्धजन्मनां २०५
साध्वसेन सह धैर्यमास्थिता ६४
सार्धं त्वया गुणपरायण २१०
सुखाभिलाषी स्त्रीभावो २१२
सैषा शूर्पणखा नाम ६९
संरक्षिता मम समाधि २३३
स्तिमितनयनमारात् २२२
स्थातुं यस्य पुरन्दरो १५५
स्नात्वा गङ्गापयसि विहितो १६९
हते रज्ये भवान् ३७
हत्वा वालिनमर्णवे २१२
हरिचन्दनप्रणयिनीं २१६
हिमकर हिमगर्भा रश्मयः १५०


श्रीबालमनोरमाप्रेस्, मैलापूर्, मद्रास्.